हिरण्यगर्भादीनां कार्येश्वरत्वाज्जीवोजीवंविहायमामित्येकादशे कार्यजीवस्याऽभिधानाच्चेत्युक्तं ॥ तन्नयुक्तं ॥ तादृशयोरपि प्रतिबिम्बत्वे नियममात्रभङ्गापत्याऽन्तेरण्डाविवाहश्चेद्दाद्दावेवकुतोमहीतिन्यायापातात् ॥ हिरण्यगर्भादेरीश्वरत्वे मानाभावाच्च ॥ जीवोजीवमित्यस्यत्वयमर्थः ॥ जीवः जीवात्मा जीवं जीवनकरणं लिङ्गशरीरं विहाय मां संपद्यते ॥ तथाच कुतोजीवान्तरस्यप्रमितिः ॥ येतु आभासएवचेतिसूत्रस्थाने आभासाइतिपाठं प्रकल्प्य अभेदयुक्तयआभासाइत्याहुस्तेतु सर्वं वक्तुं शक्नुवन्ति ॥ सर्वत्रपाठमन्यथाकर्तुं समर्थत्वात् ॥ किञ्चानेनैकेनैवसूत्रेण स्वप्रतिकूलं सर्वमाभासयितुं शक्नुवन्ति॥अभेदबोधकवेदानामेव तथाकरणे इतरत्र तत्सम्पादने श्रमाभावात् ॥ किञ्चैवमन्योप्यनेनैवैतदुक्तस्य सर्वस्य आभासत्वं कुर्यादित्ययं पाठोयमर्थश्च विश्वासभञ्जकएव विशृङ्खलत्वादित्युपेक्ष्यः ॥ ३५ ॥ प्रतिबिम्बस्य च बिम्बोत्पत्तिविनाशाभ्यामुत्पत्तिविनाशौ उपाधिसमवधानेन प्रतिबिम्बस्याविर्भावस्तत्रविम्बाभेदतिरोभावश्चजायते तथा प्रतिबिम्बत्वबिम्बत्वयोरुत्पत्तिः उपाधिसमवधाननाशेनच तादृगाविर्भावतिरोभावयोर्बिम्बत्वप्रतिबिंबत्वयोश्चनाशोजायते ॥ प्रतिबिम्बस्यबिम्बस्वरूपेणस्थितिरितियावत् ॥ विम्बस्यच प्रतिबिम्बोत्पत्तिनाशप्रयोजकोत्पत्तिनाशप्रतियोगित्वं न बिम्बत्वेन किन्तु स्वरूपेण ॥ उत्पत्तिरपि प्रतिबिम्बस्य तादात्म्येन ॥ इदंच सादिबिम्बे ॥ बिम्बस्यानादित्वेतु तदुत्पत्तिविनाशयोरभावेन प्रतिबिम्बोत्पत्तिविनाशयोरप्यभावः ॥ उपाध्यसन्निधानेऽसन्नपि प्रतिबिम्बोबिम्बरूपेणैव गृह्यते नतु प्रतिबिम्बरूपेण ॥

तादृक्स्वरूपस्यानाविर्भावात् ॥ अभेदस्याऽतिरोभावाच्च ॥ बिम्ब-
त्वादेरभावाद्बिम्बादिपदैर्व्यवहारोऽपि न ॥ एवंच सत्कार्यवादे तं-
न्तुसंयोगस्योत्पत्तेः पूर्वं नाशात्पश्चाच्च पटस्य तन्तुमात्रत्ववत्तन्तु-
संयोगकाले वाचारम्भणपरिणाहायामशालिद्रव्यस्वरूपत्वतन्तु-
भेदवत्त्ववच्च प्रतिबिम्बस्यापि उपाधेरसमवधाने बिम्बमात्रत्वं त-
त्समवधाने तादृशप्रतिबिम्बत्वबिम्बत्ववत्त्वं बिम्बभेदवत्त्वं च भ-
वति ॥ आविर्भावकोपाधिकृता देशान्तरसंबन्धप्रतीतिः प्रतिबिम्बे
पटादितोऽधिका ॥ एतेन अविद्यायां ब्रह्मप्रतिबिम्बोजीवइति
मोक्षश्चाविद्यानाशइति वदतस्तव मते जीवस्वरूपनाशएव मोक्षइ-
तिसंपद्यते तथाचात्माहानमपुरुषार्थइति मोक्षस्यापुरुषार्थत्वमाप-
द्येत जीवस्याऽलीकत्वं च स्यात्तथासति कोऽपि पारलौकिक-
प्रयत्नं न कुर्यात् इति विद्वन्मण्डनोक्तं सर्वंप्रत्युक्तम् ॥ उपाधिनाशे-
न प्रतिबिम्बस्यानाशात् ॥ सतएव पदार्थस्याविर्भावसम्भवाद्भेदा-
विर्भावस्योपाधिना स्वीकारे बिम्बे प्रतिबिम्बभेदः स्वीकृतः स्यादि,
ति अभेदतिरोभावस्यैव तेन स्वीकारइति तन्नाशेऽपि नभेदनाशः
किन्तु अभेदातिरोभावनाशएव ॥ विभेदजनकेऽज्ञाने इत्यादौ विभे-
दादिपदैरभेदतिरोभावएवोच्यते इति नकश्चिद्विरोधः ॥ उपाधेर्जल-
स्यधर्मास्तु वृद्धिह्रासाद्याः प्रतिबिम्बेऽध्यस्यन्ते॥ तथाच पारमर्ष-
सूत्रम् ॥ वृद्धिह्रासभाक्त्वमन्तर्भावादुभयसामञ्जस्यादेवम् ॥ एवंच
लौकिकप्रबिम्बविलक्षणं यदि किञ्चिज्जीवाख्ये प्रतिबिम्बे तच
प्रतीयेत लोकेच तथास्वीकारआवश्यकःस्यात्तर्हि अत्राऽघटित-
घटनापटीयस्यामायायाः प्रभावेन तत् स्वीकार्यम् ॥ तादृशवैल-

क्षण्येऽपि प्रतिबिम्बत्वं नापन्हवनीयम् ॥ यत्किञ्चिद्वैलक्षण्यस्य सर्वत्र सत्त्वेनानिवारणीयत्वात् ॥ यद्यपिचावच्छेदवादोपि भगवत्पादमुनेः सम्मतोस्ति पक्षान्तराणिचभाष्यादिसम्मतानि तत्रप्रतीयन्ते तेषां च वस्तुतोनविरोधइति वार्त्तिककारपादैः सिद्धान्तलेशकृदादिभिश्चोपपादितम् तथापि तत्रपरस्यातिप्रत्यवस्थानाभावान्नतदस्माभिरिह प्रतायते इतिदिक् ॥ ८ ॥ ३६ ॥

क्रीडायान फलं ततोऽस्ति विफलाऽजेच्छा तथाऽहेतुका श्रुत्यर्थोभवतोदितोन घटते किञ्च श्रुतौ तत्पदं ॥ न ब्रह्माऽपितु वक्ति तत्प्रकरणाज्जीवं तथाऽऽत्मा हरेर्ज्ञानार्होयदि कं ससर्ज नहिचेन्नज्ञोभिदिष्टानते ॥ ९ ॥

नन्वेकाकीनरमतेसद्वितीयमैच्छादिति श्रुत्या ब्रह्मणः क्रीडार्थं जगन्निर्माणमितिभाति ॥ क्रीडाच वैषम्यमन्तरा नघटतइत्यास्तामभेदेऽपि प्रयोजनानुसारेण चैतन्याद्यंशतिरोभावादिवैलक्षण्यमितिचेन्न ॥ निरस्तत्वात् ॥ वैषम्यनैर्घृण्यापत्तेरुक्तत्वाच्च ॥ किञ्च लोके क्रीडा स्वानन्दफला दृष्टा ॥ नचाऽऽप्तकामस्याऽऽविर्भूतनित्याऽऽनन्दस्वरूपाऽऽनन्दापेक्षाऽस्ति ॥ नहि तदानन्दोन्यूनोयतोऽधिकार्थी सा स्यात् ॥ प्रलये न्यूनानन्दप्रसंगाच्चेत्याह ॥ क्रीडायानेति ॥ निरर्थकक्रीडाकल्पनं तु दृष्टविरुद्धमितिभावः ॥ एवंच क्रीडेच्छाया-अपि फलं चिन्त्यमित्याह ॥ ततइति ॥ अजेच्छा ईश्वरेच्छा ॥ किञ्च कारणमन्तरा कार्यानुद्भवात्त्वयाऽदृष्टस्याऽनङ्गीकारात्कथं क्रीडेच्छेत्याह ॥ तथेति ॥ तस्मान्नोक्तश्रुतेर्भवत्संमतोर्थः ॥ किञ्च

तत्र क्रीडार्थमितिपदाभावात्तदर्थं द्वितीयमैच्छदिति कुतोलभ्य-
ते ॥ समभिव्याहारादितिचेन्नोक्तयुक्त्याबाधितत्वात् ॥ किञ्च द्वि-
तीयमन्तरैव तदनुपपत्त्युक्त्या तत्सृष्टौ क्रीडोपपत्त्या तृतीयादिसृ-
ष्टिर्नस्यात् ॥ द्वितीयपदेन स्वान्यलक्षणायामसहायार्थे साधिते-
नैकाकिपदेन बहुसहायशून्यलक्षणायां च गौरवम् ॥ किञ्च तदा-
नीमिच्छादेः सद्भावात्कथमेकाकित्वम् ॥ इच्छादिः स्वरूपभूतइ-
तिचेत्किमन्यन्नस्वरूपभूतम् ॥ ओमितिचेत् अपसिद्धान्तः ॥ त-
स्मादेकाकीनरमतेइति सृष्टेः प्रागौदासीन्यमात्रमुक्त्वा सद्वितीय-
मित्यनेन सृष्टिरेवोक्ता इत्याह ॥ श्रुत्यर्थइति ॥ किञ्चात्र सशब्दे-
न ब्रह्मणोन ग्रहणं किन्तु संसारिणोहिरण्यगर्भस्य तदुत्पत्तिमुक्त्वा
प्रवृत्तत्वात् अग्रेच मिथुनसृष्टेरेवोक्तत्वादित्याह ॥ किञ्चेति ॥ श्रु-
तौ तत्पदं ब्रह्म न वक्ति अपितु जीवमित्यन्वयः ॥ जीवोहिरण्य-
गर्भः ॥ सवैशरीरीप्रथमइतिश्रुतेः ॥ एतेन रमणार्थमिदं सर्वं ब्र-
ह्मैवस्वेच्छयाऽभवदिति प्रत्युक्तम् ॥ ब्रह्मणोनित्यत्वेन तत्सत्त्वे तद-
भिन्नस्य जगतोऽपि सत्त्वेन सर्वभवनतदिच्छयोरयोगाच्च॥प्रलयेऽ-
नाविर्भूतस्येच्छयाऽऽविर्भावइतिचेत् आविर्भावोऽनित्योनित्योवा॥
यद्यनित्यस्तर्हि आविर्भावतिरोभावौपदार्थानांयतस्ततः नाऽनि-
त्यतातुविज्ञेयाशास्त्रविद्भिर्विचक्षणैः तिरोभावेतुकार्यंहिवर्त्ततेका-
रणात्मना आविर्भावेतुकार्यंहियथामृदिघटादय इत्यनेन विरु-
ध्यते ॥ आविर्भावस्यापि पदार्थतया शास्त्रविचक्षणैरनित्यताया-
अज्ञेयत्वोक्तेः ॥ यदि नित्यस्तर्हि तस्याविर्भावेऽनवस्था ॥ यत्रैव-
चानित्यत्वमङ्गीक्रियते तत्रैवोक्तविरोधः पूर्वोक्तनित्यत्वाङ्गी-
कारनैष्फल्यंच ॥ ३७॥ किञ्च सर्वं कार्यं यदि हरिर्नवेत्सि तदाऽ-

ज्ञः स्यात् यदिवेत्ति तर्हि सृष्टिर्मुधा ज्ञानार्हत्वरूपाविर्भावस्यैव त्वया कार्येऽङ्गीकारात् ॥ नच स्वस्वरूपेण स्थितस्य स्वयंज्ञातत्वेपि जीवानां तज्ज्ञानाभावात्तज्ज्ञानार्थं सृष्टिरितिवाच्यम् ॥ स्वरमणार्थमितिसिद्धान्तविरोधात् ॥ जीवानामेव रमणस्य निष्पत्तेः॥ क्रीडायानित्यत्वानित्यत्वयोरुक्तदोषावतारोऽनुसन्धेयः ॥ अधिकन्तूत्तरभागे वक्ष्यते ॥ तदेतदाह ॥ तथात्मेति ॥ भिदिष्टेति ॥ जीवस्येश्वराभिन्नत्वेनेशस्य ज्ञानं न जीवस्येत्युक्तिरेव नसंगता॥प्रागभावादयोनाङ्गीकार्याआभ्यांयतोऽखिलमितिश्लोकव्याख्यायामभावचतुष्टयस्याऽपि तट्टीकाकारेण दूषितत्वात् ॥ एतेन भेदःकार्यतयाजातःक्रीडार्थंतुहरीच्छया प्रलयेकारणेतस्यस्थितिर्दृष्टायथाम्रादि इति पूर्वापरव्याकुलं वाक्यं प्रत्युक्तम् ॥ नच भेदस्योत्पत्तिर्नाविर्भावइति नित्यत्वाभावाभिप्रायेण खण्डनमितिवाच्यम् ॥ तत्र त्यटीकायां स्पष्टं खण्डितत्वात् ॥ भेदोत्पत्तेः प्राग्जीवस्य तथाज्ञानसत्त्वेन सृष्ट्यभावदोषस्य तादवस्थ्याच्च ॥ सत्यपि सर्वंखल्विदमैतदात्म्यमिदमितिसामान्येनाभेदबोधने भेदोऽनित्यइतरन्नित्यमित्युक्तिः किंनिबन्धनेतितु चिन्त्यम् ॥ विभेदजनकेऽज्ञाने इतिवदेतस्माज्जायते इत्यस्य जागरूकत्वाच्चेत्यलम् ॥ ९ ॥ ३८ ॥

**सर्वात्मा चेत्सजीवेशकार्याकार्यविपर्ययः॥ अविरोधेऽव्यवस्था स्यात् तथेष्टेहैतुतामते॥ १० ॥**

यत्तुतेन सर्वंहिखल्विदंब्रह्मतज्जलानितिपठ्यते सर्वंब्रह्मात्मकंविश्वमिदमाबोध्यतेपुरः सर्वशब्देनयावद्धिदृष्टंश्रुतमदोजगत् बुध्यतेतेनसर्वंहिब्रह्मरूपंसनातनम् । कार्यस्यब्रह्मरूपस्यब्रह्मैवस्यात्तुकारणम्

इति तथा यन्नयेनयतोयस्ययस्मैयस्माद्यथायदा स्यादिदंभगवा-न्साक्षात्प्रधानपुरुषेश्वरः इतिभागवतेपद्येसर्वस्यब्रह्मताश्रुता श्रुतिसूत्रैःस्मृतिगणैर्दृष्टिःस्वर्णार्थिनोयथा सुवर्णस्यचयेखण्डाःकटकामुद्रिकादयः सुवर्णत्वेनगृह्णानितथाब्रह्मविदोमतिः यथासौम्येत्यादिश्रुतौस्पष्टमेवनिरूपितम् तथातत्त्वमसीत्यत्राभेदोंशांशिविचारतः इतिसार्वात्म्यमीशस्यवर्णितम् तन्नयुक्तमित्याह ॥ सर्वात्मेति ॥ यदि हरिः सर्वात्मा तर्हिजीवईशईशश्चजीवउच्येत एवं तदभिन्नाभिन्नस्तदभिन्नएवेतिन्यायेन ब्रह्महत्याद्यभिन्नेश्वराभिन्नोयागोऽपि ब्रह्महत्यादिरूपःस्यात् ॥ एवं ब्रह्महत्यादिरपि यागरूपः स्यादिति तद्विधिनिषेधधीः संकीर्येत एवंच त्वयाकार्यमेव क्रियेत विधिनिषेधप्रायश्चित्तादिशास्त्रं च व्यर्थं स्यात् ॥ ३९ ॥ यत्तु सर्वभवनसमर्थत्वाद्विरुद्धधर्माश्रयत्वस्य ब्रह्मणोलक्षणत्वमिति तट्टीकाकारोजगाद तन्नेत्याहाविरोधइति ॥ लोकस्य ब्रह्माभिन्नत्वेन लोकेऽपि तस्य लक्षणत्वे विरोधकथामात्रस्योच्छेदप्रसङ्गात् ॥ किञ्च ब्रह्मानित्यमज्ञमित्याद्यपि साक्षात्त्वयाऽङ्गीक्रियेत सर्वंखल्वित्यादिश्रुतिबलात् विरोधस्यब्रह्मण्यदूषणत्वात् ॥ एवंच कथं त्वमेव प्रमाणविरोधोद्भावनेन परान्विजिगीषेथाः कथंच द्वितीयाध्यायस्थोब्रह्मपरवाक्यानांश्रुतियुक्तिविरोधोद्धारः संगतःकथंवात्वद्गुरोर्द्वितीयाध्यायस्थतादृशसूत्रव्याख्या युज्येत तवाविरोधपरिहारयत्नः ॥ किञ्चैवमविरोधेऽप्यकार्ये प्रवृत्तिर्नपरिहृता॥४०॥नन्वीश्वरेच्छैवसर्वत्रकारणं तथाच तयैवाकार्ये ममाप्रवृत्तिः यदाच तस्येच्छा मदीयाऽकार्यकरणविषया जायते तदा क्रियतएव तदितिचेन्नेत्याह ॥ तथेति ॥ अयमभिप्रायः ॥ किं ह-

रीच्छावशान्न्यायान्यायौ कुर्वन्नियमेन सुखदुःखे भुंक्ते किंवा कर्म कीदृशमपि तदिच्छया करोतु फलमप्यनियमेन सस्वेच्छया ददातीति ॥ नाद्यस्तृतीयश्लोकोक्तरीत्याकर्मणोहेतुत्वापत्तेः ॥ किञ्च यदिदं सुकृतादिकारयति तस्योक्तरीत्या दुष्कृतादितोऽनन्यत्वानपायादुक्ताऽनुपपत्तिर्दुरुद्धरा ॥ नद्वितीयोऽनाश्वासेनाप्रवृत्त्यापत्त्या भक्त्यादिमार्गोच्छेदप्रसङ्गात्॥ एवं निश्चितवतः कस्यापि प्रवृत्त्ययोगात् ॥ इष्टएव मोक्षमार्गध्वंसः पुष्टिमार्गस्थस्येतिचेत्सहैव पुष्टिमार्गेण मोक्षमार्गं नाशयेथाः ॥ न्यायस्य तुल्यत्वेन तत्रापि शङ्कया प्रवृत्त्यभावप्रसङ्गात् ॥ न्यायाद्यविरोधेतूक्तं वक्ष्यामश्च ॥ कुमार्गेप्रवृत्त्यापत्तेश्च॥ इष्यते इतिचेद्वाह्योसि ॥ कृतप्रयत्नापेक्षइत्युक्तसूत्रविरोधोप्यत्र पक्षेज्ञेयः॥ तस्मादिच्छाया अनियामकत्वात्कर्मणामेवतत्त्वंवाच्यं॥ तथाचोक्तदोषानिस्तारः ॥ यत्तु तत्रोत्तमामध्यामाश्चकनिष्ठाद्यधिकारिण इत्यादिना सर्वंब्रह्म सर्वंब्रह्मसदृशं सर्वंब्रह्मणोऽभिन्नं तत्कार्यभूतमित्यधिकारिभेदनेदंहिविश्वमिति भागवतश्लोकटीकारूपसुबोधिनीस्थस्वगुरुसंमत्या पक्षत्रयमुपन्यस्यान्तिमपक्षस्य भेदपरत्वेन दुष्टत्वमुक्त्वा मध्यमपक्षस्य मध्यमत्वं स्वानुरोधित्वेन स्वसंमतत्वं चोक्तं ॥ यच्च भेदाभेदप्रतीतिस्तुमध्यमानांप्रकीर्तितेत्येतद्व्याख्याने कार्यात्मनाभेदः कारणात्मनाऽभेदइति तट्टीकायामुक्तं ॥ तत्तुनयुक्तं ॥ तदभिन्नाभिन्नइतिन्यायेन कार्याणामप्यभेदापत्त्या कार्यात्मनाभेदासिद्धेः भेदाभेदयोः समसत्ताकयोरप्यविरोधे विरोधकथामात्रोच्छेदप्रसङ्गाच्च ॥ किञ्चैवं मतद्वयं स्वीकुर्वता त्वद्गुरुणा किं वस्तुन्यपि विकल्पस्स्वीक्रियते उत परप्रतारणायेतरःपक्षः ॥ उभयमपि विज्ञातशा-

ब्रहार्दहास्यास्पदमेवेत्यलम् ॥ १० ॥ ४१ ॥

साकारध्यानतोध्येयं ध्यातारः शास्त्रतत्पराः ॥ ग
च्छन्त्युपाधियोगाद्यद्घटते साकृतिश्चितिः ॥ ११ ॥

यत्तु शाक्तानांतुमतेब्रह्मविश्वोपादानमेवहि निमित्तकारणंशक्ति-विंकारित्वभयादतइति शाक्तमतमुपन्यस्य तत्रात्मनोविकारित्वं श्रुतिशास्त्रविरोधिहि प्रकृतिर्ह्यस्योपादानमाधारःपुरुषःपरः सतोऽभिव्यञ्जकःकालोब्रह्मतत्त्रितयन्त्वहम् इतिभागवतेपद्यउपादानत्वमीरितम् तद्विरुध्येतममतुब्रह्मतोनपृथक्कसा इति तन्मते भागवतविरोधं स्वमते प्रकृतेरीशादभिन्नत्वेन तदभावं चोपन्यस्य शङ्कराचार्यदुर्वासोवाक्यविरोधमुक्त्वा नास्तिशक्तेर्वर्णनंहिकारणत्वन्तुदूरतः व्यासैस्तुप्रकृतेःसर्वकारणत्वंतिरस्कृतम् ब्रह्मणःसमवायित्वनिमित्तत्वेनिरूपिते इत्युक्तं ॥ तत्रब्रूमः ॥ मायांतुप्रकृतिमित्यादिश्रुतिमार्कण्डेयपुराणाद्यनालोचनमूलकं तद्वर्णनाभावकथनम् ॥ व्यासानां तु साङ्ख्यसम्मतप्रधानहेतुवादखण्डने तात्पर्यं ॥ मायाया यथा हेतुत्त्वं तथोक्तमस्माभिस्तृतीयश्लोके ॥ यदितु शाक्तैः शक्तिशब्देन मायोच्येत ततोऽतिरिक्तं तत्त्वं नस्वीक्रियेत तदा स्यादेवदोषः ॥ यदितु स्मार्त्तरीत्या विष्ण्वादिशब्दैरिव शक्तिशब्देनापि केनचिदुपाधिना विशिष्टाचितिरेवोच्येत उपादानत्वेतु विवर्त्तोपादानत्वम् आकारस्तु ध्यानार्थोध्यानेन ध्येयमात्रप्राप्तिर्मुक्तिस्तुनिष्कृष्टतत्स्वरूपात्मकतत्पदार्थेन त्वम्पदार्थस्याभेदज्ञानात् तर्हि न दोष इत्याह ॥ साकारेति ॥ परन्तु दुर्वासःशङ्कराचार्यवाक्यविरोधेन तेषां हानिर्भवति नवेति ते प्रष्टव्याः ॥ विष्णुभागव-

तं नव्यासकृतं किन्तु देवीभागवतमिति मन्यमानांस्तान्प्रति विष्णु-
भागवतविरोधोद्भावनन्तुउपहासावहम् ॥ नन्वेवं बौद्धादीनामपी-
श्वरप्राप्तिः स्यादतआह ॥ शास्त्रतत्पराः ॥ शास्त्रं वेदस्तन्मूलकमनु-
स्मृत्यादिच ॥ ४२ ॥ एतेन तन्त्रशास्त्रेणचेद्दूषेतदवैदिकसंमतम् इ-
त्युक्का वेदाःश्रीकृष्णवाक्यानिव्याससूत्राणिचैवहि समाधिभा-
षाव्यासस्यप्रमाणंतच्चतुष्टयम् एतद्विरुद्धंयत्सर्वंतन्मानंनकथंचन इ-
तिश्रीमन्निजाचार्यैरुक्तंतन्त्राणिनप्रमा श्रीमदाचार्यचरणैरतएव-
निरूपितम् शाक्तास्तांश्चेत्ततोब्रूयुस्तेसन्मार्गाद्बहिष्कृताः इतिसर्वे-
षुमार्गेषुदोषाःसन्तिततोहरिम् शुद्धाद्वैतावलम्बेनभजेतसुविनिश्चि-
तम् इतिप्रत्युक्तम् ॥ श्रीमद्भागवते एकादशस्कंधे यआशुहृदय-
ग्रन्थिनिर्जिहीर्षुःपरात्मनः विधिनोपचरेद्देवंतन्त्रोक्तेनचकेशव-
मित्यादिना तन्त्रानुसारेणार्चायाविहितत्वाच्च॥ शुद्धाद्वैतावलम्बेन-
यादृशंहरिपूजनं त्वत्संमतं तादृशं लिखित्वा सक्रमं खण्डयिष्या-
मोऽनुपदम् ॥ किञ्च वेदादिषु चतुर्षु यस्य वर्णनं नास्ति तद्विरुद्धंच
यत्तद्दोषवदिति ते संमतम् ॥ तत्र वेदादिप्रामाण्यमुभयसंमतं ॥
भागवतंचेत्तेऽप्रमाणंब्रूयुस्तर्हि तत्र त्वं किंब्रूयाः॥ स्वगुरुवाक्यमि-
तिचेन्न ॥ स्वगोष्ठीमात्रे विश्वास्यत्वात् ॥ अन्यथा तेऽपि भागव-
तमप्रमाणं तन्त्रंप्रमाणमिति कंचित्स्वगुरुं कृत्वाऽपि तद्वाक्येन
ब्रूयुः॥ ननु पुराणन्यायमीमांसाधर्मशास्त्राङ्गमिश्रिताः इत्याद्येव
भागवतप्रमाण्ये प्रमाणमितिचेत् ॥ तत्र मीमांसायाअतिरिक्तत-
योपात्तत्वेन न्यायपदेन तर्कशास्त्रग्रहणंवाच्यं तत्रच परमा-
णुवादादि वेदविरुद्धंदृश्यते तद्दिव पुराणमपि कस्मिंश्चिदंशे प्र-
माणं वेदविरुद्धांशेऽप्रमाणमितिचेत्स्यात्तर्हितादृशभागवतांशावि-

रुद्धं चेदन्यत्र व्यासादिभिः सर्वज्ञैरिदानीतनैरदृश्यमानवेदमूलकं प्रोक्तं स्यात्तत्कथमप्रमाणं त्वद्गुरुवाक्येनोच्यते ॥ किञ्च विष्णुभागवतस्य तत्र विशिष्यनामनास्ति ॥ पुराणेष्वन्तर्भावेण प्रामाण्यं कौर्मादिभिःसमम् ॥ देवीभागवतस्य तत्रान्तर्भावेण संदिग्धंच ॥ किञ्च पुराणान्तरस्य भागवताज्जघन्यत्वे त्वदीयैर्विष्णोर्नैवेद्यं नभुज्येत ॥ अपिदीपावलोकंमेनोपयुञ्ज्यान्निवेदितमिति भागवते तन्निषेधात् ॥ प्रकरणान्तरेऽपि तद्विधिर्नोपलभ्यते यतोविकल्पादिकल्पनाऽवतरेत् ॥ निवेदितंतद्भक्तायदद्याद्भुञ्जीतवास्वयमितितु विकल्पः ॥ किञ्च नैवेद्यप्रतिपत्तिरियं भक्तालाभे स्वयमिति ॥ वाशब्दोऽनास्थायाम् ॥ एवंच भक्तः सात्वतः ॥ तथाच नैवेद्यप्रतिपत्त्यर्थंसात्वतश्चेन्नलभ्यते प्रासमाप्तंसमुत्धृत्त्यजलेऽग्नौवाविनिक्षिपेत् इति पुराणान्तरवचनार्थः सङ्गृहीतः ॥ अतएव ब्राह्मणभोजनादूर्ध्वं भुञ्जीततैरनुज्ञातःशेषंसेष्टःसभाजितैरित्यवशिष्टभोजनं पृथग्विहितम् नतु नैवेद्यभोजनमेव ॥ अतएवाग्रे प्रयोश्यामृत्विगादिबहुविप्रादिभोजनमनैवेद्येनैव विहितम् ॥ नैवेद्यंचातिगुणवद्दद्यात्पुरुषतुष्टिदम् इति पुरुषतुष्टिदस्यैव नैवेद्यत्वात् ॥ अग्रे भुक्तवत्सुचसर्वेषुदीनान्धकृपणेषुच विष्णोस्तत्प्रीणनंविद्वान्भुञ्जीतसहबन्धुभिरित्यत्र तत् दीनादिभोजनोत्तरं भोजनं विष्णोः प्रीणनमित्यर्थः ॥ यद्वा तदन्नाद्यं भुञ्जीत ॥ विष्णोःप्रीणनमिति क्रियाविशेषणम् नतु तच्छब्देन नैवेद्यपरामर्शोऽतिव्यवधानात् ॥ पुरुषतुष्टिदस्य सबहुबन्धूदरपूरकत्वासम्भवाच्च ॥ किञ्चेदं सर्वं काम्यव्रतप्रकरणस्थमिति ज्योतिष्टोमपशुसमानयोग-

क्षेमनामावेदयेत् ॥ उच्छिष्टभोजिनोदासाइत्यादितु लिङ्गादिशू-न्यामिति लिङ्गभ्यांसहितेनानेन विरोधान्नविधिकल्पयितुं प्रभ-वति ॥ एतेन यज्ञशिष्टाशिनःसन्तोमुच्यन्तेसर्वकिल्बिषैरित्यपि व्याख्यातम् ॥ गीतायास्तन्मते भागवतादनुत्कृष्टत्वात् ॥ किञ्चाऽत्र यज्ञभोजनाशिष्टाशिनः यज्ञभुक्तांशातिरिक्ताशिनइत्यर्थप्रतीत्या न तेन तत्प्राप्तिः ॥ पुराणान्तराणि स्मृतयश्चैतद्विरोधेऽप्रमाणानीति तत्र यदि तद्विधायकं वचनं स्यात्तर्हि एतद्विरोधादप्रमाणमेव स्यादिति विशेषपरत्वं तद्बलान्नसम्भवति ॥ श्रुतिः सूत्रं च तादृशं नास्त्येव यन्निवेदितोपयोगं विदध्यात् इति वैदिकान्पृष्ट्वा निश्चिनु॥ यदि काचिच्छ्रुतिः कस्यां चिच्छाखायामुपलभ्येत तर्हि इत्थं निश्चिनु ॥ सति समानविषयत्वे विकल्पः विषमविषयत्वे यावा-नंशस्तत्राऽस्तिविहितस्तावानेव ग्राह्यो नेतरो ऽन्यथा भागवतवा-क्याचारितार्थ्यप्रसङ्गात् ॥ नच भागवतवाक्यएव अन्यस्मै नि-वेदितं दीपावलोकमपि मे नोपयुञ्ज्यादित्यर्थइतिवाच्यम् ॥ अन्यनिवेदितस्य हरावुपयोगाप्राप्त्या निषेधानर्हत्वात् ॥ वि-ष्णोर्निवेदननिषेधेऽपि त्वदुपभोगे बाधकाभावेन त्वयाऽन्यनिवे-दितं भुज्येत ॥ अपिशब्देन दीपावलोकेऽनुज्ञाप्रतीत्या तत्त्वया वि-ष्णवे उपयोज्येत॥किञ्च अन्यस्मैपदाध्याहारे मानमन्वेष्यं तच्च य-दिपुराणान्तरादि तर्हि दुर्बलत्वान्नभागवतीयस्वारसिकार्थं संकोच-येत्॥ वेदादिकंतु नास्तीत्युक्तम् ॥ दत्त्वाचमनमुच्छेषंविष्वक्सेनाय-कल्पयेदिति भागवतविरुद्धश्चायमर्थः ॥ आस्तांतावदेतत् ॥ किञ्च पुराणान्तरस्य यद्वैमनुरब्रवीत्तद्भेषजमितिश्रुत्यादिस्तुतमनुस्मृतेश्च जघन्यतायां किमानम् ॥ सन्मार्गाद्बहिष्करणन्तु स्वगुरुवाक्यैस्तै-

रपित्वाम्प्रत्युच्यते तस्माच्छास्त्रगन्धसत्त्वे शास्त्रेणैववाच्यं ॥ गालि-
प्रदानन्तुशिष्टगर्हितम् ॥ एवं शैवादिमतेष्वपि ऊहनीयम् ॥ अस्मा-
कंतु शास्त्रमात्रे पक्षपातोनान्यत्र ॥ ४३ ॥ एवंच चेतस्तत्प्रवणंसे-
वाफलरूपातुमानसी तत्सिद्ध्यर्थंदेहवित्तजनिःकार्याततोभवेत् सं-
सारदुःखनाशोहिब्रह्मात्मत्वाऽवबोधनमित्यत्र यदि देहवित्ताभ्यां
जनिर्यस्यास्सा तत्फलभूतमानससेवासिद्ध्यर्थं तयाऽपेब्रह्मविद्या-
प्राप्तिरित्युच्येत तर्ह्यस्माकं नकोपि विद्वेषः ॥ यदितु तत्र तत्प्रवण-
ता ब्रह्मविद्योच्यते तर्हि देहवित्तयोस्तत्रनोपयोगः ॥ श्रवणादेरेवत-
त्रोपयोगात् ॥ इतीदं नास्माभिर्मृष्यते ब्रह्मात्मत्वावबोधनमित्यस्या-
सङ्गतेश्च ॥ यदितु भक्तिमात्रमुच्यते तर्हि नपरप्राप्तिः वासुदेवःस-
र्वमिति अहंब्रह्मास्मीतिज्ञानेनैव तत्प्राप्तेः ॥ एतेन मामेव ये प्रपद्य-
न्ते मायामेतां तरन्तिते इति वाक्यात्तु भक्तानामविद्याविनिवृत्ति-
तइत्यपिचिन्तितम् ॥ पद्यतेर्भक्त्यर्थकत्वाभावात् ॥ गत्यर्थानां
ज्ञानार्थतया ज्ञानेनैवाविद्यानिवृत्तेस्तेन वाक्येन प्रतीतेश्च ॥ यत्तु-
येतुज्ञानैकसन्निष्ठास्तेषांतुलयएवहि भक्तानामेवभवतिलीलास्वा-
दोऽतिदुलर्भ इति श्लोकव्याख्याने ऽक्षरब्रह्मप्राप्तस्याऽपुनरावृत्तिमु-
क्त्वा पुरुषोत्तमं प्राप्तस्य पुनरावृत्तिमाशङ्क्य मामुपेत्यतुकौन्तेयपुन-
र्जन्मनविद्यतइति भगवद्वाक्येन कैमुतिकन्यायेन समादधौ ॥ ब्र-
ह्मज्ञानेनाक्षरं प्राप्तस्य पुनरावृत्त्यभावे ततोऽपि परं प्राप्तस्य सुतरां-
तदभावसिद्धेरिति तन्न ॥ तेतुब्रह्मह्रदंनीताइति वक्ष्यमाणभागवत-
श्लोकस्य त्वत्संमतार्थे सति तेषां गोपानामिव राधादीनामिवच त-
तोप्युत्कृष्टस्य वृन्दावनादिस्थभृगाललतात्वप्राप्तिपूर्वकमनुभूयमा-
नस्यापूर्वफलस्य प्राप्तौ पुनर्जन्मनस्त्वया वक्तुं त्वदीयैःशङ्कितुं चो-

चितत्वात् ॥ विद्वन्मण्डने भक्तानां पुनरागमनस्योक्तत्वाच्च ॥ त-
दपि तत्खण्डनावसरे खण्डयिष्यामः ॥ पुरुषोत्तमाक्षरयोरभेदो
ऽक्षरपदार्थश्चोक्तएव प्राक् ॥ एवमुपास्याज्ज्ञेयस्योत्कृष्टत्वमप्यु-
क्तं ॥ निरतिशयत्वात् ॥ मुक्तानामपिसिद्धानांनारायणपरायणः
सुदुर्लभइत्यादिपुराणवाक्यन्तु मुक्तेतरापेक्षया नारायणपरायण-
स्योत्कर्षमाहेत्यपिब्देन गम्यते ॥ यथा तपस्विभ्योऽधिकोयोगी-
ज्ञानिभ्योपिमतोधिकइत्यत्रापिशब्दबलेन ज्ञानीतरापेक्षया यो-
गिनआधिक्यं प्रतीयते ॥ अस्तु वा मुक्तानामित्यस्य कुटुम्बवा-
सनाया मुक्तानामित्यर्थः सिद्धानामित्यस्य त्वणिमादिमतामिति
तावतैवार्थवादत्वोपपत्तेः ॥ अतएव योवेदनिहितंगुहायां सोऽश्नु-
तेसर्वान्कामान्सहेत्याद्याः श्रुतयः यावानर्थउदपानेसर्वतःसंप्लुतो-
दके तावान्सर्वेषुवेदेषुब्राह्मणस्यविजानतइत्याद्याः स्मृतयश्च सं-
गताः ॥ यानि तु पुराणवाक्यानि अनुग्रहेण लीलाऽऽस्वादे प्रमा-
णतया दर्शयति तानि लीलास्वादस्यानुग्रहप्रयोज्यत्वे एव प्रमा-
णानि नतु इतरापेक्षया तस्योत्कर्षेपि ॥ प्रमाणाभावाच्छ्रुत्या-
दिविरोधाच्चेत्यलं ॥ यत्तु टीकाकृता भगवत्कृपाङ्कुरस्य स्वतः सं-
स्कारेण भगवन्मार्गीयसंगादिना बोद्बोधे मार्गेऽस्मिन् रुचिस्ततोऽ-
स्मिन्प्रवेशेच्छा तत्राप्यङ्कुरस्य दृढत्वे ऽस्मिन्मार्गे दृढत्वभावनं ॥
प्रवेशश्च द्वारभूतश्रीमदाचार्यकुलगुरुद्वारा शरणागतिस्ततः शुद्धं-
कृष्णं भजेदित्युक्तं ॥ तन्नयुक्तम् ॥ अस्मिन्मार्गे इत्यादिनोक्तानां
पदार्थानामेव शास्त्राप्रसिद्धतया तत्क्रमस्य शास्त्रीयत्वाभावे विप्र-
तिपत्त्यभावात् ॥ किञ्च भगवत्कृपाङ्कुरपदबोध्यस्योद्बोधं प्रति त-
स्यतस्य हेतुत्वं वदतोऽपसिद्धान्तः ॥ ईश्वरेच्छामात्रस्य त्वन्मते त-

त्रापि हेतुत्वात् ॥ द्वारभूतेत्यादित्वसङ्गतं॥समित्पाणिःश्रोत्रियंब्रह्म-
निष्ठमित्यादिश्रुतिविरोधात् ॥ यत्तु ब्रह्मभावंतुसंपाद्यपरमानुग्रहा-
द्विभुः गृहस्थितंस्वीयजीवंसमुद्धरतियत्नतः इत्युक्तोद्धृतौपरमक्ले-
शः इत्यादि जगाद ॥ तन्निर्मूलम् ॥ ब्रह्मभावादुत्तरमुद्धारफलान्त-
रयोः क्लेशस्य चोक्तप्रमाणविरुद्धत्वात् ॥ तत्सद्भावे प्रमाणाभावा-
च्च ॥ तस्यतावदेवचिरं तरतिशोकमित्यादिश्रुतिभिः कृतकृत्यत्व-
निश्चयाच्च॥ यत्तु यमेवैषवृणुतेतेनलभ्यइतिश्रुतावेवकारोज्ञानिनो-
निरासायेति॥तन्न॥ज्ञानीत्वात्मैवमेमतमिति भगवदुक्त्या ज्ञानिन-
एव स्वीकृतत्वेन प्रतीयमानत्वात् ॥ मुक्तिंददातिसकर्हिचिन्नभ-
क्तियोगमितितु भक्तियोगस्तुतिपरं नतु अक्षरार्थे तात्पर्यवत् ॥ अ-
न्यथा भक्तियोगदानस्य सर्वथा निषेधेन तवाशैवोच्छिद्येत॥ अ-
नेकश्रुतिविरोधाच्च ॥ यत्तु समुद्धरतीत्यस्य पृथक्करोतीत्यर्थष्टीका-
कृता कृतः तत्तु वास्तवभेदाभावादसंगतं॥ पृथक्त्वमपिन भेदादन्यत्
प्रमाणाभावाद्गौरवाच्च ॥ यत्तु संपद्याविर्भावःस्वेनशब्दादितिसूत्रं
स्वोक्ते ब्रह्मभावोत्तरं फलान्तरसद्भावे प्रमाणतयोपन्यस्तवान्व्या-
ख्यातवांश्च ब्रह्म संपद्य स्थितस्य जीवस्य अथवा सम्पद्येत्यत्रा-
न्तर्भावितण्यर्थः तथाच ब्रह्मभावं संपाद्य स्वेन पुरुषोत्तमेनावि-
र्भावः क्रियते ॥ एवं कथमुच्यते तत्राह ॥ शब्दात् योवेदनिहितं-
गुहायांपरमेव्योमन्सोऽश्नुतेसर्वान्कामान्सहब्रह्मणाविपश्चितेति अ-
त्र पुरुषोत्तमसाहित्येन सर्वकामोपभोगोजीवस्य निरूपितः स-
लीनस्योद्धरणंविना नसम्भवतीत्यस्मादुद्धरतीत्यर्थः॥ तथाच श्री-
मद्भागवते तेतुब्रह्मह्रदंनीतामग्नाःकृष्णेनचोद्धृताः ददृशुर्ब्रह्मणोलो-
कमित्युक्तमिति ॥ तन्नयुक्तम् ॥ प्रथमव्याख्याने सम्पद्यर्थपृथ-

कर्मध्याहारे स्थितपदाध्याहारेच द्वितीयव्याख्याने णिजर्थकल्प-
ने उभयत्र क्रियते पदाध्याहारेच गौरवात् ॥ प्रथमान्तार्थस्य ति-
ङन्तार्थे ऽन्वयनियमोनसमूलोयेनक्रियतेइतिपदमध्याह्रियेत ॥
दशावताराहरेरित्यत्र विभागपरे त्रयःकालाइत्यत्रच तिङन्तार्था-
भावात् तात्पर्याभावेन ज्ञायन्तामित्यादेरप्यध्याहारायोगात्तद-
र्थाननुभवाच्च ॥ यस्यापि तन्नियमाग्रहस्तन्मतेऽपि औत्सर्गिकभव-
तिपदाध्याहारं परित्यज्य क्रियतेइत्यस्याध्याहारे नमानम् ॥ स्व-
शब्दस्य पुरुषोत्तमबोधकत्वे प्रमाणाभावाच्च ॥ शब्दादित्यनेन यो
वेदनिहितंगुहायामित्यस्यैवग्रहणे प्रमाणाभावाच्च ॥ तस्मात्स्वेन
रूपेणेतिश्रुतिस्थस्वेनशब्दस्य तृतीयान्तस्य सूत्रे स्वेनेत्यनुकरणम् ॥
तस्यच शब्दपदेन कर्मधारयः अनुकार्यादनुकरणस्य भेदात्स्वेनश-
ब्दस्य सुप्त्वमिति नतल्लुक् ॥ ततश्च एवमेवैषसंप्रसादोऽस्माच्छरी-
रात्समुत्थायपरंज्योतिरुपसम्पद्यस्वेनरूपेणाभिनिष्पद्यते इति श्रु-
तिस्थतृतीयान्तस्वशब्दादितिसूत्रार्थः ॥ सच मुक्तस्येति स्वस्वरूपे-
णेतिच अर्थात्तात्पर्याच्च लभ्यते ॥ नैवं तव किञ्चिद्गमकं भाति ॥
किञ्च त्वन्मते ज्ञानिनोर्लीलास्वादोनभवति किन्तूपासकस्य ॥ सो-
ऽश्नुतेसर्वानितितु ज्ञानिपरं नोपासकपरं ॥ योवेदेत्युक्रमात् ॥ ज्ञा-
निनश्च त्वन्मते न पुरुषोत्तमप्राप्तिरिति कथं पुरुषोत्तमेन सहेति-
व्याख्यायते ॥ तस्माद्ब्रह्मणासहइत्यस्य स्वस्वरूपभूतेन ब्रह्मणा यु-
गपदित्यर्थः ॥ सचक्रमित्यादौ सशब्दस्थानिनः सहशब्दस्य युग-
पदर्थतायाः प्रसिद्धत्वात् ॥ कामानां सर्वेषामपि ब्रह्मणोऽभिन्नत्वा
द्ब्रह्मावाप्तौ तदवाप्तेःसुलभत्वात् ॥ अतएव यावानर्थउदपानेसर्व-
तःसंप्लुतोदके तावान्सर्वेषुवेदेषुब्राह्मणस्यविजानतः इत्यनेन तुल्या-

र्थता ॥ त्वन्मतेतु सर्वपदसंकोचः स्यादतीतादिकामानुपभोगात् ॥ यस्तु भागवतश्लोकः सोऽपि न त्वदुक्तार्थकोगोपानां पुनरागमनदर्शनात् तस्माद्दर्शयामासलोकंस्वमित्युक्ते तत्र कथंभावाकांक्षायां तेतुब्रह्मह्रदंनीतामग्नाब्रह्मणोलोकंददृशुः ॥ पुनश्चब्रह्मह्रदात्कृष्णेनोत्धृताइत्युक्तम् ॥ अक्रूरोयत्र दृष्टवांस्तस्य यमुनाह्रदस्य ब्रह्मह्रदइतिनामेत्यादि श्रीधरकृततट्टीकायां स्पष्टम् इत्यलम् ॥ ॥११॥४४॥ इतिश्रीपरमहंसपरिव्राजकाचार्यश्रीमत्स्वरूपानन्दस्वामिशिष्यश्रीमत्सदानन्दस्वामिकृतेसहस्राक्षग्रंथेमेघविस्तारोनामप्रथमोभागःसमाप्तः ॥ १॥ ॥छ॥ ॥



# सहस्राक्ष.

## भाग २

श्रीगणेशायनमः ॥ श्रीसाम्बसदाशिवायनमः ॥ तदेवं सव्याख्यानैरेकादशभिः श्लोकैः प्रायेण शुद्धाद्वैतमार्तण्डतट्टीकोक्तं तत्रत्यक्रमं विहाय खण्डितम् प्रसङ्गात्त्वन्यदपि ॥ इतः परं विद्वन्मण्डनोक्तं तट्टीकोक्तञ्च प्रायेण खण्डयिष्यते ॥ तत्रच पूर्वं विद्वन्मण्डनस्य कंचित्कंचित्खण्डं लेखिष्यामः ततः परन्तु स्वकृतं तस्यतस्य खण्डनार्हतत्तट्टीकायाश्च खण्डनमिति क्रमोबोध्यः ॥ खण्डकल्पना च व्यवहारसौकर्यार्थमस्माभिरेवकृता ॥ १ ॥ तत्रतावत्श्लोकत्रयात्मकोविद्वन्मण्डनस्य प्रथमः खण्डोलिख्यते ॥ ॥

निजमुरलिकानादाव्हानागतव्रजसुन्दरीनिरुपमनवस्नेहाम्भोधेर्विचित्रतरोर्मिभिः॥ किमपि परितश्चार्द्रार्द्रोऽस्तु स्वयं प्रकटीभन्मतियुवतिसंभेदनास्मद्दृशां विषयः सदा ॥ १ ॥ पितृचरणान्नत्वाहं हरिरीतिमार्गाम्बुजातमार्त्तण्डाम् ॥ तदनुग्रहतः किञ्चिल्लिखामि यत्नाद्यथाबुद्धि ॥ २ ॥ श्रुतिसूत्रादिमणिभिर्जटितं युक्तिमौक्तिकैः ॥ ग्रथितंकुरुतेविद्वन्मण्डनं विठ्ठलः सुधीः ॥ ३ ॥ ॥ १ ॥

अथैतत्कुत्सापरावस्मदीयौ श्लोकौ तथा तच्छ्लोकार्थादिदूषणरूपं प्रथमखण्डखण्डनम् ॥ आत्ताऽऽत्मार्थमनःसमर्पणपथा हर्तुं परस्त्रीधनं क्षुद्रान्तःकरणप्रसादनकृते गीतेशगोपीकथाः ॥ विद्वद्वाक्श्रवणप्रवीणजनताधीमोहनाय श्रुतिस्मृत्याद्यर्थविलोमतोद्यमपराः पुष्ट्याख्यमार्गस्थिताः ॥ १ ॥ यन्मोहाय पुराणकृष्णवचनश्रुत्यर्थशोऽभ्युत्तमयुक्तिष्वासुरगोचरत्वमितरास्वाङ्कबुधाकल्पताम्॥ ताना-

चार्यविकाशितार्थवचनैः संबोधयामोयतोयुक्तार्थाः श्रुतयोभव-
न्ति फलदानस्वार्थतश्चाविताः ॥ २ ॥ आत्मा देहः ॥ यान्हिशि-
ष्यानिमे कुर्वन्ति तानिदं संस्कृतं मन्त्रतया ग्राहयन्ति ॥ सहस्रप-
रिवत्सरपरिमितकालजातकृष्णवियोगजनिततापक्लेशानन्दतिरो
भावोऽहं भगवते कृष्णाय देहप्राणेन्द्रियान्तःकरणानि तद्धर्मांश्च
दारागारपुत्राप्तवित्तेहापराण्यात्मना सह समर्पयामि दासोहं कृ-
ष्ण तवास्मि इति ॥ नास्मिन्मन्त्रादिरीतिरस्ति ॥ नवेदंमन्त्रशास्त्रा-
दिषूपलभ्यते ॥ तस्मादात्मादिहरणायैवाऽयं समर्पणमार्गः ॥ कि-
ञ्च तादृशकालस्य कृष्णवियोगं प्रति कृष्णवियोगस्य तापादिकं
प्रतिच हेतुत्वं तत्सिद्धान्तविरुद्धं ॥ तेन भगवदिच्छामात्रस्य सर्वत्र-
हेतुतायाअभ्युपगमात् ॥ अन्याप्यर्थासङ्गतिस्तु यथाऽस्य भवति
तथाऽग्ने तत्रतत्र स्फुटीभविष्यति ॥ प्रथमश्लोकद्वितीयचरणेन त-
दीयप्रथमश्लोकस्य दुरभिप्रायत्वं सूचितम् ॥ आर्द्रार्द्रइत्ययंप्रयो-
गश्चिन्त्यः ॥ द्वित्वे बहुव्रीहिवद्भावाद्यप्राप्त्या पूर्वभागे विभक्त्यभा-
वायोगात् ॥ प्रतियुवतीत्यस्य टीकोक्तरीत्या व्याख्याने ऽसंगति-
रेव ॥ तत्रहि प्रतिर्लक्षणे युवतिंयुवतिं लक्ष्यीकृत्य संभेदइत्युक्तम्
तच्च लक्षणे द्वित्वसमासयोरप्राप्त्याऽसंगतम् ॥ अत्रत्यटीकोक्ता
कामुकचर्या तूपेक्ष्यते ॥ ३ ॥ यत्तु टीकाकारेणाऽनिर्वाच्यत्वन्तुर-
सरूपस्यैव ॥ यतोवाचोनिवर्त्तन्तेअप्राप्यमनसासहेत्यनिर्वाच्यत्वं
यद्यपि ब्रह्मणः श्रावितं तथापि रसोवैसइति रसरूपत्वं पूर्वानुवा-
के प्रकृत्य तदुत्तरमेतस्य श्रावितत्वात्तादृशस्यैव तथात्वं नत्वाप्रा-
रूपस्य ॥ तन्त्वौपनिषदंपुरुषंपृच्छामि अतोस्मिंल्लोकेवेदेचप्रथितः

पुरुषोत्तमः सर्ववेदान्तप्रत्ययमित्यादिश्रुतिस्मृतिन्यायाविरोधादित्यु-
क्तं ॥ तन्नयुक्तम् ॥ वक्ष्यमाणस्य तृतीयखण्डस्थस्य तथासति प्र-
क्षालनादित्यस्य व्याख्याने वाचोमनश्चलौकिक्योऽशुद्धंचेतित-
च्छुत्यर्थवर्णनपरस्योक्तेर्विरोधात्॥चतुर्विंशतिखण्डस्थमूलविरोधा-
च्च॥तत्रहि॥वस्तुतोविरुद्धधर्माश्रयमपि॥तथाहि ॥ श्रोतव्योमन्तव्यः
यतोवाचोनिवर्त्तन्तइत्युक्तम्॥भवदुक्तौतुविरोधाभावात्तन्न संगच्छे-
त॥आनन्दंब्रह्मणोविद्वानित्युत्तरत्रानन्दपददर्शनेन तद्वाच्यस्यावा-
ङ्मनसगोचरत्वप्रतीतेश्च तस्यैवरसशब्दार्थत्वाद्ब्रह्मत्वाच्च औपनिषद-
त्वादिकन्त्वीश्वरस्य भक्त्येति न श्रुत्यादिविरोधः॥किञ्चानन्दरूपाद्ब्र-
ह्मणः शृङ्गाररूपस्य तद्वृत्तेः रसरूपस्य भिन्नत्वेन सामानाधिकरण्या-
नुपपत्तिः॥रसंह्येवलब्ध्वेति वाक्यशेषानुपपत्तिश्च॥लब्ध्वेति क्त्वाप्रत्य
येनानन्दे लाभपूर्वकत्वभानेन परमेश्वरानन्दस्य नित्यतया तदसं-
भवेनैकत्वैकरसत्वाभ्यां मुखंव्यादायस्वपितीत्यत्रत्यन्यायानवतारे-
ण च परस्य तत्प्राप्तिसुखित्वे वाच्ये नच पररसः परेण लभ्यः॥किञ्च
तत्पक्षे रसंह्येवेत्यत्रापि कर्त्तेश्वरएव वाच्यस्तथाचैवकारानुपपत्ति-
रितरेषामपिसुखानुभवात्॥किञ्च ताद्रूप्येण भेदाङ्गीकारेऽपि नाऽत्र-
तस्याऽवाङ्मनसगोचरतोच्यते किन्त्वानन्दरूपस्यैव ॥ प्रकरणाद्वा-
क्यस्य बलवत्त्वात् ॥ पूर्वत्र यच्छब्ददर्शनेनोत्तरत्र तच्छब्दाध्या-
हारस्यावश्यकत्वेन सर्वस्यैकवाक्यत्वात् ॥ किञ्चानन्दरूपस्येश्वर-
स्य रसरूपाद्भेदे मानाभावः ॥ अतएव रसंह्येवेतिश्रुतिः संगता ॥
अतएवानन्दोब्रह्म एतस्यैवानन्दस्य एषएवानन्दयातीत्याद्याः श्रु-
तयः संगताः ॥ एवंच नत्वीश्वररूपस्येत्यसंगतम् ॥ किञ्च रसस्य
रसादिशब्दैर्व्यवहारादज्ञातस्यापुरुषार्थत्वाच्च कथं तस्यावाङ्मन-

सगोचरत्वम् ॥ अथ सामान्येन तदगोचरत्वेऽपि विशेषेण तदगो-
चरत्वमभिमतमितिचेन्न ॥ रूपादेरपि विशेषस्य वागगोचरत्वेन
सर्वत्र विशेषस्य वागगोचरतया रसमात्रे तदगोचरत्वकथनस्य न्यू-
नत्वाद् व्यर्थत्वाच्च ॥ रसगतविशेषस्य मनसाऽप्यगम्यत्वे तस्याऽ-
पुरुषार्थतापत्तेश्च ॥ तस्माद् यन्मनसानमनुते पराञ्चिखानिव्यतृ-
णत् कश्चिद्धीरःप्रत्यगात्मानमैक्षत् दृश्यतेत्वग्र्ययाबुद्ध्येत्यादिसमा-
नार्थैव यतोवाचइतिश्रुतिः ॥ तत्रच प्रमेयस्यैकरसत्वेन विशेषा-
भावात्प्रमाणगतविशेषेणैव ग्रहणाऽग्रहणव्यवस्थेतियुक्तम् ॥ ४ ॥
यच्च स्नेहोभक्तिरितिप्रोक्तइतिवाक्यबलेन स्नेहपदेन भक्तिं गृही-
त्वा स्नेहस्याम्भोधितुल्यत्वसूचनमपि तस्यानन्तत्वाय समुद्रइवाहि-
कामः नान्तोस्तिकामस्यनसमुद्रस्येतिश्रुतेः नतु स्वरूपतुल्यत्वाय ॥
तेन निरुपमत्वोक्तेर्नविरोधः॥स्नेहश्चात्मनोमनसोवा योग्योधर्मवि-
शेषोनत्विच्छा ॥ तस्मिन्स्निह्यामिप्रीणाम्यनुरञ्जामिनेच्छामीत्यनु-
व्यवसायात् इति तेनोक्तं॥तदप्ययुक्तम्॥स्नेहस्येच्छायाभिन्नत्वाङ्गी-
कारे कामादपि तथात्वापत्तेः॥कामशब्दस्येच्छार्थककर्मनिष्पन्न-
त्वात्॥तथाच स्नेहानन्तत्वे प्रमाणतया नान्तोस्तिकामस्येतिश्रुत्युप-
न्यसोविरुध्येत॥स्नेहज्ञानस्येच्छाभावज्ञानस्यचानुव्यवसायत्वोक्ति
स्तु अनुव्यवसायपदार्थाज्ञानात्॥यच्च तेनैव अत्रच वंशस्तुभगवान्-
रुद्रइति तापनीयश्रुतेर्वेदःशिवःशिवोवेदइतिवाक्याच्च मुरलिकाया-
वेदात्मकत्वमित्युक्तं॥तदप्ययुक्तं॥समानशब्दवाच्ययोस्तत्तदात्मक-
त्वे हरिश्चन्द्रार्कवाताश्वेत्यादिकोशाच्चन्द्रादेः सूर्याद्यात्मकत्वापत्तेरि-
त्यलम्॥विद्वद्वागित्यादिसार्द्धश्लोकेन स्वीयप्रथमार्द्धश्लोकोक्तं दृढं
कृतं तदीयतृतीयश्लोकासङ्गतिरपि सूचिता॥तत्र क्षुद्रान्तःकरणेत्य-

अशीलहीनावाचकक्षुद्राशब्दक्षुद्रशब्दयोरेकशेषे षष्ठीतत्पुरुषः॥पु-
ष्ट्याख्येति॥यतः स्वयं पुष्टिमार्गगाः सन्ति अतोऽयं श्रमोमोहनायै-
वेतिनिश्चयः ॥ तेहि पुष्टिमार्गः प्रमाणमार्गइति मार्गद्वयं व्यवहर-
न्ति ॥ तत्र पुष्टिमार्गउत्तमः प्रमाणमार्गोऽधमइति वदन्ति ॥ अनेन
तेषां मोहकत्वं दृष्टसामग्रीतः प्रत्यायितं ॥ वाक्यानितु पूर्वभागे
प्रथमश्लोकव्याख्यायामुपन्यस्तानि ॥ द्वितीयश्लोकार्थेऽपि तत्रै-
व वाक्यानि प्रमाणानि द्रष्टव्यानि ॥ द्वितीयश्लोके यत्तेन हरि-
रतीत्याद्युक्तम् तदग्रे निराकरिष्यामोनिराकृतं च कौर्मवाक्यप्रद-
र्शनेन प्रथमश्लोकव्याख्यायाम् ॥ विठ्ठलःसुधीरिति ॥ आसीत्क-
श्चिदारूढपतितोदेवानांप्रियस्तस्य सुतोऽभवत् तस्य विठ्ठलेतियथा-
धिकारं नाम चक्रे ॥ युक्तमेवतु तादृशाज्जातस्य तादृशं नाम ॥
आर्यार्थमेवहि कृतंकुर्यादिति शास्त्रप्रवृत्तिः ॥ तेनचायंग्रन्थः कृ-
तोविद्वन्मण्डनाख्यः ॥ युक्तंचेदमपि मोहकानां ब्राह्मणत्वनियमा-
भावस्य कौर्मवाक्येन दर्शितत्वादित्यास्तांतावत् ॥ परन्तु साम्प्रतं
तत्सन्ततिगः कथंचिच्छ्रुतशास्त्रोजिज्ह्रियद्विठ्ठलपदं साधु चिकीर्ष-
न्कश्चित् विदा ठाः शून्याविठ्ठास्ताँल्लाति आदत्ते स्वीकरोतीति वि-
ठ्ठलइति प्रलपति ॥ तत्रतावत्सप्रष्टव्यः किमियं तृतीया धनेन
हीनः प्रज्ञया रहितइत्यादौ दर्शनेन प्रयुक्ता ॥ सचेदोमिति ब्रूया-
त्तर्हि वाच्यं वत्स नवेत्सि हीनादिशब्दानां व्युत्पन्नत्वेन तत्र का-
रकतृतीयामिति कर्तरीत्यादौ दर्शनेन शब्दरि अर्थरि इत्यादाव-
रादेशं प्रयुञ्जानं तार्किकमनुकरोषि ॥ अथ धनेनशून्यइत्यत्रैव प्र-
कृत्यादित्वेन तृतीयेति वदेत् तर्हि वाच्यं प्रकृत्यादिषु शून्यशब्द-
समभिव्याहृतधनशब्दपाठोयदि प्रामाणिकस्तर्हि ठशब्दसमभिव्या

त्तविच्छब्दस्य तत्र पाठे प्रमाणं दर्शय ॥ यदि सन प्रामाणिक-
स्तर्हि दृष्टान्तासित्ध्या दार्ष्टान्तिकासिद्धिः सुतराम् ॥ नहि प्रकृत्या
दिराकृतिगणइति यथेष्टं तृतीया प्रयुज्यते ॥ नीलेन घटइत्याद्या-
पत्तेः ॥ किञ्च तृतीयान्तार्थस्य ठशब्दार्थाभाववदेकदेशे ऽभावे प-
रम्परया ऽभाववति वाऽन्वये शिष्टसंमतिरपेक्षिता ॥ अन्यथा प-
दार्थःपदार्थेनान्वेतीत्यौत्सर्गिकव्युत्पत्तिलङ्घने ऽतिप्रसङ्गात् ॥ किञ्चा-
त्यन्तज्ञानाभावस्य शिलादिष्वेव सत्त्वेन विठशब्देन पारमार्थिक-
ज्ञानाभाववान्याह्यस्तच्च न सम्भवति ॥ यत्किञ्चिद्घटवति भूतले
निर्घटं घटहीनमित्यादिप्रयोगाऽदर्शनेनाऽभावेऽन्वयिताबच्छेदक-
धर्मावच्छिन्नप्रतियोगिताकत्वेनैव प्रतियोग्यन्वयस्य व्युत्पन्नत्वात् ॥
किञ्च सूत्रान्तरेण समासाऽप्राप्त्या सहसुपेत्यनेन समासोवाच्यः स-
चक्लिष्टः ॥ किञ्च विदोदकारस्य ठकारः केनसूत्रेणेति वदतु देवा-
नाम्प्रियः ॥ नाऽत्र प्रथमष्ठकारः किन्तर्हि टकार इति वदता तु गु
लाबइति पितृनामशोधनाय कुलाभइति पितुर्नामकुर्वन् प्राज्ञोऽ-
नुकृतोभवति ॥ लोके देवविशेषे तादृशशब्दप्रयोगस्तु कनैयादि-
शब्दप्रयोगवज्ज्ञेयः ॥ इति श्लोकत्रयात्मकप्रथमखण्डखण्डनं ॥
॥१॥ ॥ इहहि विविधवृजिनतापोपतप्यमाननिखिलजनापवर्गा
य श्रुतिस्मृतिपुराणेषु श्रवणादयः प्रतिपाद्यंते॥६॥तेषां विषयश्चब्र-
ह्मैवोच्यते॥तन्निर्द्धर्मकं सधर्मकं वेति भवति विप्रतिपत्तिर्जिज्ञासू-
नां ॥ उभयरूपत्वेनाऽपि श्रूयमाणत्वात् ॥ तथाहि ॥ अथातआ-
देशोनेतिनेति अपाणिपादोजवनोग्रहीतापश्यत्यचक्षुःसश्रृणोत्य-
कर्णः सहोवाचैतद्वैतदक्षरंगार्गिब्राह्मणाअभिवदंत्यस्थूलमनण्वह्र-
स्वमदीर्घमलोहितमस्नेहमच्छायमतमोवाय्वनाकाशमसंगमस्पर्श-

मगंधमरसमचक्षुष्कमश्रोत्रमवागमनोऽतेजस्कमप्राणममुखमनामा
गोत्रमजरममरमभयममृतमरजोऽशब्दमविवृतमसंवृतमपूर्वमनपरम
नन्तरमबाह्यंनतदश्नोतिकश्चननतदश्नोतिकंचन दिव्योह्यमूर्त्तःपुरु-
षःसबाह्याभ्यंतरोह्यजः अशरीरंशरीरेष्वनवस्थेष्ववस्थितं महांतंवि-
भुमात्मानंमत्वाधीरोनशोचति अप्राणोह्यमनाःशुभ्रः असंगोह्ययं-
पुरुषइत्यादिश्रुतिभिः अव्यक्तोयमचिंत्योयं नसत्तन्नासदुच्यते स-
वैनदेवासुरमर्त्यतिर्यङ्नस्त्रीनषंढोनपुमान्नजंतुः नायंगुणःकर्मनसन्न-
चासन्निषेधशेषोजयतादशेषइत्यादिपुराणवाक्यैश्च निर्विशेषं ब्रह्म
प्रतिपाद्यते ॥ यतोवाइमानिभूतानिजायंते येनजातानिजीवंति
यत्प्रयंत्यभिसंविशंतीति आनंदाद्ध्येवखल्विमानिभूतानिजायंत-
इत्यादि सईक्षांचक्रे सआत्मानमेवावेदहंब्रह्मास्मीति सर्वस्यवशी-
सर्वस्येशानः यःसर्वज्ञःसर्वशक्तिः विश्वतश्चक्षुरुतविश्वतोमुखोवि-
श्वतोबाहुरुताविश्वतस्पात् सम्बाहुभ्यांधमतिसंपतत्रैर्द्यावाभूमीज-
नयन्देवएकः सर्वकामःसर्वगंधःसर्वरसइत्यादिश्रुतिभिः सर्वतःपा-
णिपादंतत्सर्वतोक्षिशिरोमुखं सर्वतःश्रुतिमल्लोकेसर्वमावृत्त्यतिष्ठति
निर्दोषपूर्णगुणविग्रहआत्मतंत्रोनिश्चेतनात्मकशरीरगुणैश्चहीनः ॥
आनन्दमात्रकरपादमुखोदरादिःसर्वत्रचस्वगतभेदविवर्जितात्मा इ-
त्यादिस्मृतिभिश्च सविशेषं प्रतिपाद्यते ॥ ७ ॥ किमत्र युक्तं नि-
र्विशेषमेवेति कुतः उपजीव्यत्वतःश्रौतवाक्यैश्चान्यपरत्वतः अन्तर-
ङ्गत्वतश्चापिनिर्विशेषंनिरूप्यते ॥ तथाहि ॥ सविशेषवादिना वि-
शेषाधारत्वेनाऽवश्यं ब्रह्मस्वरूपमप्यंगीकर्त्तव्यं ॥ अन्यथा कुत्र
विशेषानिरूपिताः स्युः ॥ तथाचाऽऽधारनिरूपिका श्रुतिराधेयनि-
रूपिकया नान्यथायितुं शक्या उपजीव्यत्वात् ॥ नचधर्मिस्वरूपं

निरूप्य धर्मनिरूपणेनोभयसार्थकत्वमितिवाच्यं ॥ अस्थूलाद्यु-
क्तश्रौतवाक्यैर्धर्मनिषेधश्रवणात् ॥ ननु निर्विशेषब्रह्मनिरूपिका
श्रुतिर्धर्मान्विना न तन्निरूपयितुं शक्ता॥ तथाहि॥निरूपणंहि ल-
क्षणैः तानिचासाधारणधर्मरूपाणि अत्रच धर्माभावात्तन्निरू-
पणपूर्वकमभावमुखेनाऽस्थूलादिवाक्यैर्निरूपयंत्याधर्मनिरूपिका
श्रुतिरूपजीव्या ॥ अभावस्य प्रतियोगिनिरूपणाधीननिरूपण-
त्वात् ॥ तथाच श्रौतत्वोपजीव्यत्वयोरविशेषादन्यतरबाधोन यु-
क्तः ॥ विरोधात्तथाकरणेतूभयबाधोयुक्तः ॥ उक्तयुक्तेः ॥ तथा-
च शून्यवादआपद्येतेति वृश्चिकभिया पलायमानस्य विषमाशी-
विषमुखे निपातः॥नचैवमपि वक्तुं शक्यं असन्नेवसभवति अस-
द्ब्रह्मेतिवेदचेदिति निंदाश्रुतेरितिचेत् ॥ मैवं ॥ नहि श्रुतिसिद्धाध-
र्मा निषिध्यन्ते किंत्वनुवादपूर्वंलौकिकाः स्थौल्यादयः ॥ तथाच
क्व धर्माणां श्रौतानामुपजीव्यत्वं ॥ नचैवं निषेधस्य भिन्नविषय-
त्वाद्विरोधाभावेनैकतरबाधोनयुक्तस्तथाचोभयधर्मवत्त्वं सिद्धमि-
तिसांप्रतं ॥ श्रौतानामप्यर्थानां श्रोतव्यत्वादीनां यतोवाचोनिव-
र्तंतइत्यादिना निषेधात् ॥ नचोपजीव्यत्वबाधः ॥ एवंविधस्य त-
स्याप्रयोजकत्वात् ॥ अन्यथाऽभावनिरूपणोच्छेदप्रसङ्गात् ॥ न-
न्विदमसंगतं नहि लोके यस्मिन् यदा ये धर्माः सत्त्वेन निरूपि-
तास्ते तस्मिन्नेव तदैव निषेद्धुं शक्याः ॥ विरोधात् ॥ कालभेदेनतु
शक्यानिषेद्धुं पूर्वं श्यामत्वेन निरूपिते पाकरक्ते घटे श्यामत्वस्ये-
व ॥ नचैवं ब्रह्मणि संभवति ॥ सदैकरसत्वात् ॥ अतः कथं धर्म-
निरूपणं कथंवा निषेधइति तप्तसंदंशपतितोमिथ्यावादीतिचेत्
न ॥ धर्मनिरूपिकायाः श्रुतेरन्यपरत्वात् ॥ तथाहि ॥ सोपाधि

ब्रह्म निरूपयति धर्मनिरूपिका श्रुतिरुपासनार्थं तया चित्तशुद्धौ सत्यां निर्विशेषं ब्रह्म प्रतिपत्स्यतइतितात्पर्येण ॥ ततस्तादृशब्रह्म-ज्ञापनाय पूर्वोक्तान्निषेधति ॥ तेषामविद्याकल्पितत्वेनाङ्गीकारा-त् ॥ अतोऽपवादार्थं कर्तृत्वाद्युक्त्वा निषेधतीतिकल्पने सर्वं समंज-समितिचेत् ॥ अत्रब्रूमः ॥ अभेदादनुपाधित्वाज्जगदप्रत्ययान्वितः सर्वाधारत्वतस्तावच्छक्तित्वान्नास्यबाधनं ॥ अत्र मिथ्यावादी प्र-ष्टव्यः जगत्कर्तृत्वेशितृत्वादिविशिष्टनिर्विशेषयोर्भेदमंगीकरोष्यु-ताभेदं ॥ भेदपक्षेऽपि तात्त्विकमतात्त्विकंवा ॥ नतावदाद्यः ॥ सर्व-त्र प्रसिद्धोपदेशादित्यधिकरणविरोधात् ॥ अस्यार्थस्तु सर्वत्र वे-दान्तेषु प्रसिद्धस्य ब्रह्मणएवोपास्यत्वेनोपदेशान्मनोमयत्वादिविष-यवाक्योक्तधर्मविशिष्टं ब्रह्मैवाऽस्मिन्वाक्यउच्यतइत्येतत्सर्वं व्यास-सूत्रभाष्ये विस्तृतं पितृचरणैः ॥ विस्ताराभियाऽत्र नलिख्यते ॥ किंचैवं जीवे नितरां तथायातमिति तत्त्वमसीत्याद्यभेदबोधकश्रु-तिविरोधः ॥ ब्रह्मानेकत्वापत्त्याचैकमेवेत्यादितद्विरोधः ॥ त्वया तथाऽनंगीकाराच्च ॥ येऽप्यंगीकुर्वंति तेषां मते वेदांतानां तादृग्भा-वनापरत्वमेव नतु वस्तु तादृशमित्युच्यते ॥ तदग्रे निराकरिष्यते ॥ नद्वितीयः ॥ सतूपाधिकृतएव संभवति घटादिकृतइवाकाशस्य प्रकृते तादृशउपाधिः कः सोऽप्यनादिः सादिर्वेति विचारणीयं ॥ अविद्यैवोपाधिः साचानादिरेवेति पक्षस्त्वसंगतः ॥ तथाहि ॥ उभ-योरप्यनादित्वेनोपहितस्याऽप्यनादितया तादृशस्यैवच त्वन्मते कर्तृत्वेनाविरतं सर्गः स्यान्न जातु प्रलयः ॥ श्रुतौ ब्रह्ममात्रस्यैवे-च्छाविशिष्टस्य कारणत्वोक्त्या कारणान्तरानपेक्षणात् ॥ स्मार्तम-वलंब्य गुणापेक्षाकथनेतु गुणानां पौर्वापर्येणाविर्भावे हेतोरवश्य-

वाच्यत्वे तदिच्छैव तादृशी वाच्या ॥ तथासति तद्धेतोरेवेतिन्याये-नेच्छैव तथाऽस्तु कृतं गुणैः ॥ नचैवमपि त्वन्मते वक्तुंशक्यं ॥ उप-हितस्येच्छाक्रमे हेत्वपेक्षायां तस्योपाध्यधीनतयेच्छायामपि त-द्गुणाएव हेतुत्वेन वाच्याः ॥ गुणानां क्रमेचैवंसतिस्वभावएवहेतु-र्वाच्यस्तथाच तादृक्स्वभावविशिष्टागुणाएव कारणानि संतु कृतं तदधीनब्रह्मणेत्यनीश्वरवादः प्रसज्येत ॥ सदेवसौम्येदमग्रआसीदि-तिश्रुतिविरोधश्च ॥ एवकारेण सतोब्रह्मणोऽन्यस्य व्यवच्छेदात् ॥ नच कालवाचकाग्रपदेन तस्याऽप्युक्तत्वादेवकारोनान्ययोगव्यव-च्छेदकः किंतु तदानीमपि ब्रह्मासीदेवेत्ययोगव्यवच्छेदकएवेतिवा-च्यं ॥ बोधमार्थमेवतथोक्तेः॥ अन्यथा सोनुवीक्ष्यनान्यदात्मनोप-श्यदिति श्रुतिविरोधः ॥ एतच्छ्रुत्यनुरोधेनाग्रपदेन यदि कालस्या-ऽपि ब्रह्मत्वमेव मनुषे तदोमिति ब्रूमः॥ अतएव कालोस्मीति भग-वद्वाक्यं कालरूपोऽवतीर्णइत्याद्यपि ॥ इदमेवोपक्रम्य सन्मूलाः-सोम्येमाःसर्वाःप्रजाःसदायतनाःसत्प्रतिष्ठाइत्यादिश्रुतिभिः सतए-व कर्तृत्वोक्तेश्च॥ किञ्च त्वन्मतेऽप्युपहितस्योपाध्यधीनतया स्वातं-त्र्याऽभावात्कर्तृत्वानुपपत्तिः॥भवद्वा उपाधावेव स्यान्नतूपहिते घट-क्रियेव॥एवमस्त्वितिचेन्न॥यतोवाइमानि सन्मूलाःसौम्येति आनं-दाद्ध्येवखल्विमानिभूतानिजायंतइत्यादि अहंसर्वस्यप्रभवइत्यादि जन्माद्यस्ययतइत्यादि श्रुतिस्मृतिन्यायव्याकोपात् ॥ नचायमुप-चारएव सर्वत्रेति वाच्यं॥मुख्ये संभवति तथाकल्पनस्यायुक्तत्वात् मुख्याबाधाच्च॥अतएव व्यासोऽपीममर्थमसूत्रयत्॥ गौणश्चेन्नात्म-शब्दादिति ॥ श्रुतावात्मपदमप्युपचाराद्धुपाधिपरमेवेत्याशंकायां

पुनराह ॥ तन्निष्ठस्यमोक्षोपदेशात्इति ॥ यदात्मशब्देनोक्तं तन्निष्ठस्यैव श्रुतौ मोक्षोक्तेर्नौपचारिकमात्मपदं किंतु शुद्धब्रह्मपरमेवेत्यर्थः॥किञ्च त्वन्मते उपहितस्य जीवत्वेन पुत्रादितुल्यतया तद्धेयत्वोपदेशवन्मुमुक्षुसाधनोपदेशेषु तस्याऽपि तथात्वं वदेत् नतुतदुपासनां॥इतोऽपि हेतोर्निर्गुणमेव ब्रह्म जगत्कारणमित्याशयेन हेत्वंतरमाह सूत्रकारः हेयत्वावचनाच्चेति॥किंच अथाऽतोब्रह्मजिज्ञासेति निर्गुणब्रह्मजिज्ञासां प्रतिज्ञाय किंलक्षणं तदित्याकांक्षायां जन्माद्यस्ययतइत्यवदत् तच्च सगुणनिरूपकमितिवदन् व्यासस्य प्रतिज्ञाहान्युपक्रमविरोधावपश्यन् हृदयशून्योभासि ॥ किंचैवं सर्वेवेदायत्पदमामनंति वेदैश्चसर्वैरहमेववेद्यइत्यादिश्रुतिस्मृतिविरोधोपि ॥ अतोभेदपक्षस्त्वसंगतएव ॥ ॥२॥ ॥ अथ श्लोकत्रयादयिमइहहिविविधेत्यादिरतोभेदपक्षस्त्वसंगतएवेत्यन्तोद्वितीयः खण्डः खण्ड्यते॥ तत्रतावन्निखिलजनापवर्गाय श्रवणादयः प्रतिपाद्यन्ते इति प्रतिज्ञा मुक्तेरप्यधिकं भक्तियोगमीश्वरोभक्तेभ्योददातीति वक्ष्यमाणस्वसिद्धान्तेन विरुद्धा लक्षणया तप्यमानान्तविशेषणेन वा निखिलपदस्यार्थसंकोचेतु तस्य वैयर्थ्येनानुपादानमेववरम् ॥ किञ्च श्रवणादीनां निखिलजनापवर्गार्थत्वमपशूद्राधिकरणविरुद्धम् ॥ श्रवणस्य श्रोतव्यःश्रुतिवाक्येभ्यइतिवाक्येन वेदवाक्येभ्यएवकर्त्तव्यतया शूद्रस्य तेष्वनधिकारात् ॥ अतएवाधिकारीतु त्रैवर्णिकएवेत्युक्तं प्रथमसूत्रव्याख्याने तवतातेन ॥ वस्तुतस्तु त्रैवर्णिकस्यापि नसर्वस्याधिकारः किन्तु शान्तोदान्तइत्यादिश्रुत्युपात्तस्यैवेत्यन्यत्रविस्तरइति त्वत्तातोक्तमपि नकिञ्चित् ॥ टीकोक्तेषु श्रुत्यर्थेषु यद्धेयं तदग्रे स्वयमेवस्फुटी भविष्यति ॥

पूर्वपक्षे नहिश्रुतिसिद्धाइति यत्पूर्वं प्रतिज्ञातं ततोविरुद्धमग्रे श्रौतानामपीत्यादिकथनम् ॥ तत्र पूर्वप्रतिज्ञा ऽसंगता ॥ एवं प्राकरके घटे श्यामत्वस्येवेत्यत्र षष्ठ्यनुपपन्ना ॥ एवमङ्गीकारादित्यत्रल्यब्लोपे पञ्चमीत्युक्त्वाऽङ्गीकृत्येति टीकाकृतोव्याख्यानमयुक्तम्॥ अङ्गीकारमाश्रित्येत्यादिव्याख्यानस्यैवौचित्यात् ॥ अपवादार्थमित्यादेः पूर्वोक्तप्रकारेण मेलयित्वा कथनमसंगतमस्य फलान्तररूपत्वात् ॥ अतएवोभयत्रानेनाप्यर्थशब्दः प्रयुक्तः॥ अथ सिद्धान्तगद्यारम्भे मिथ्यावादीत्यस्यकोर्थः॥किं सर्वं मिथ्या वदति तच्छीलादिरिति किंवा किञ्चिन्मिथ्या वदतीत्यादिः उत जगन्मिथ्या वदतीत्यादिः ॥ नतावदाद्यः ॥ ब्रह्मणोमिथ्यात्वानङ्गीकारेण निरनुयोज्यानुयोगात् ॥ नद्वितीयः ॥ त्वय्यतिप्रसङ्गात् स्वमादेस्त्वन्मतेऽपिमिथ्यात्वात्॥अन्यथोत्पत्तिबाधश्रुत्योस्तत्रानुपपत्तेः॥ अहन्तादेरपि मायिकत्वाङ्गीकारेण तत्रापि मिथ्यात्वस्यत्वया वक्तव्यत्वात्॥माया मात्रन्त्विातिसूत्रेण मायिकतयोक्ते स्वमे मिथ्यात्वदर्शनात्॥अतएव न तृतीयः॥जगन्मिथ्येत्येतावन्मात्रार्थवाचकत्वे प्रमाणाभावेन तदर्थमादाय त्वयेव स्वमाहन्तादि मिथ्येत्यर्थमादाय परैरपि प्रयोक्तुं शक्यत्वेन त्वय्यतिप्रसङ्गात् ॥ बाधितार्थवादित्वेन तथा प्रयोगस्तु अभिमानिर्णयाधीनः॥स्वमनस्येव निर्णीय तथाप्रयोगेतु अतिप्रसङ्गः ॥ गालीमात्रदाने पर्यवसानंच॥ तथाच ददतुददतुगालीर्गालिमन्तोभवन्तइतिन्यायावतारः ॥ एवं मायावादिशब्दार्थोपि विकल्प्य दूषणीयः ॥ किञ्च पराऽस्यशक्तिरित्यादिश्रुतिप्रामाण्येन सिद्धायास्त्वन्मते ईश्वरादभिन्नायाश्शक्तेस्त्वयापि अहन्तादिकं प्रति स्वमंप्रति आसुरज्ञानं प्रतिच हेतुत्वमुच्यते साच मा-

यान्तुप्रकृतिमित्यादिश्रुत्युक्तमायायानभिन्ना मानाभावादीर-वाश्चेति त्वय्यतिप्रसङ्गः ॥ किञ्च पराऽस्यशक्तिरित्यादिश्रुतिसिद्धा-यामायायास्त्वन्मतईश्वराभिन्नत्वेनेश्वरस्य जगद्धेतुत्वे मायाया-स्तद्धेतुत्वं सुतराम् ॥ अतएव मायान्तुप्रकृतिमितिश्रुतिः संगता॥ त-स्याश्च मायायास्त्वन्मते सत्यत्वमेवेति मायावादित्वं त्वय्येवसंग-च्छते मास्मासु ॥ अस्माभिर्ब्रह्मातिरिक्तस्य सत्त्यत्वानङ्गीकारे-णास्मन्मते तस्या असत्कल्पत्वात् ॥ नहितमोद्रव्यंनास्तीतिवदंस्ता-किंकस्तमोवादीत्युच्यते अभावोनास्तीतिवदन्प्रभाकरादिर्वाऽभा-ववादी किन्तु ब्रह्मवादित्वमेवास्मासु सङ्गच्छते ॥ तन्मात्रस्य सत्य-त्वाभ्युपगमात् ॥ त्वन्तु ब्रह्मणोपामीणतरगोपीविटत्वाङ्गीकारेण विटवाद्येव ॥ प्रकृतमनुसरामः ॥ विटवादिनस्तावदयं सिद्धान्तः ॥ पुष्टिमार्गवर्त्तिसिद्धान्तविरुद्धायायुक्तयस्ताआसुरमोहनायैवेति ॥ तथाच तावत्योक्त्यैव निर्वाहे व्यर्थः परमतखण्डनप्रयासः॥ किञ्च सर्वभवनसमर्थेऽस्मिन्विरुद्धमपि तथात्वसूचकत्वाद्भूषणमेवेति त-त्सिद्धान्तइति तथोक्त्यैव सर्वोपपत्तौविरोधपरिहारश्रमोऽपार्थ कः॥ इदञ्च स्वमताऽज्ञानेन पूर्वापरानुसन्धानाभावेन चायं प्रवर्त्त-तइति ख्यापनायोक्तमस्माभिर्नतु तथासिद्धान्ताश्रयणेन समाधा-तुं शक्यम् ॥ तादृशसिद्धान्ताङ्गीकारस्य दुष्टत्वादित्युक्तं वक्ष्यामश्च तत्रतत्र॥अथ तदुक्तयोदूष्यन्ते तदुक्तदूषणानिचोद्ध्रियन्ते॥तत्र पा-रमार्थिकभेदपक्षोन नः सम्मतः॥ अस्यार्थस्त्वित्युपक्रम्य मनोमय-त्वादिविषयवाक्योक्तधर्मविशिष्टं ब्रह्मैवास्मिन्वाक्ये उच्यते इत्ये-तत्कथमन्त्वंसगतं ॥ सूत्रात्तथार्थाभानात् ॥ विवक्षितगुणोपपत्ते-श्चेत्युत्तरसूत्रेण मनोमयत्वादिगुणानामीश्वरउपपत्तिकथनाच्च ॥

एवञ्च विवक्षितानांगुणानां सत्यसंकल्पत्वादीनां स्वरूपेण मनोम-
यत्वादीनांच जीवाभेदेनोपपत्तेरिति विवक्षितगुणेतिसूत्रस्यार्थो न-
तु विवक्षितालोकान्तरेतादृशरूपप्राप्तिः साप्रकृतेऽप्युपपद्यते इत्या-
दिस्तस्मित्रुक्तस्तादृशरूपप्राप्तेर्गुणशब्देन ग्रहणे मानाभावात् ॥ म-
नोमयत्वादिगुणानामीश्वरउपपत्त्यनुक्तौ तद्वाक्यस्य जीवपरत्व-
शङ्कानपगमाच्चेति संक्षेपः॥त्वयानङ्गीकारादित्यत्र प० ६ म्यसंगता ते-
षां मते इति पदद्वयस्थाने तैरितिवक्तुमुचितम् ॥यथाचाविद्याया-
अनादित्वं हेतुत्वंच तदनादित्वेपि नाविरतंसृष्टि र्नवासदेवेत्येवका-
रविरोधो यथाच कर्मणामिच्छांप्रतिहेतुत्वं यथाच कालस्यक-
र्मोद्बोधहेतुत्वेन तस्य सृष्टेःप्राक्सत्त्वेपि नैवकारविरोधो यथाचने-
श्वरस्यनैष्फल्यं स्वतन्त्रत्वस्यकर्तृत्वस्यचविघातो यथाच कालो-
स्मीत्यादेर्नत्वदुक्तार्थकत्वं यथाच त्वन्मतेऽविरतसृष्ट्यनवस्थावै-
षम्यादिदोषस्तथोक्तं तृतीयश्लोकव्याख्यानावसरे ॥ मायास्वरू-
पातिरिक्तगुणापेक्षातु नोच्यतेऽस्माभिरिति तद्दोषोक्तिर्निरनुयो-
ज्यानुयोगः॥ तद्धेतोरेवेतिन्यायस्तु कुलालादौ व्यभिचारी॥ सम्पू-
र्णाइत्यादेस्तु सतःप्रजाभ्रमाधिष्ठानतयोपपत्तिरुक्तापूर्वभागे ॥नतू-
पहितेघटक्रियेवेतितु नयुक्तम् ॥ आकाशस्य विभुत्वेन वास्तव-
क्रियानाधारत्वेन तादृशक्रियायाघटमात्रे सत्त्वेऽपि कल्पितक्रि-
यायास्तादृशतलादेश्च यथाऽऽकाशे सत्त्वं कल्पकदोषसहितस्य
चाकाशस्य तत्रहेतुत्वं क्रियादिकंप्रतिविवर्त्तोपादानतायाअविरो-
धात्॥तथाऽत्रापि सोपाधिकस्य तत्त्वोपपत्तेः॥अस्मदेकदेशिमाया-
मात्रहेतुत्ववादिमते यथासर्ववाक्योपपत्तिरक्षरब्रह्महेतुत्ववादे यथा
समानानुपपत्तिर्यथा चास्मन्मतेऽथातोगौणश्चेदित्यादेः संगति-

स्तथोक्तं तृतीयश्लोकव्याख्यायाम्॥शुद्धब्रह्मातिरिक्तनिरूपणस्य वेदेष्वप्राधान्यमिति सर्वेवेदाइत्यादेस्तात्पर्यंचारूपवदेवहीतिसूत्र-व्याख्यानावसरे चतुर्थश्लोकव्याख्यायां वर्णितम्॥इतिद्वितीयख-ण्डखण्डनम्॥२॥ ॥ द्वितीयस्तुस्यात् नस्यात् विरोधादितिचेन्मै-वं॥अस्थूलादिवाक्यैर्जडजीवधर्माएव ब्रह्मणि निषिध्यंते नश्रुति-सिद्धाजगत्कर्तृत्वादयः॥ तथासति प्रक्षालनाद्धिपंकस्येतिन्यायेन-प्रतिपादनवैयर्थ्यापातात् ॥ किंच ब्रह्मनिरूपकमहावाक्ये त्वन्म-ते सृष्टिनिरूपकाणि वाक्यान्यसंगतानिस्युः॥ तदनिरूपकत्वा-त्॥नन्वस्तिसंगतिरध्यारोपापवादलक्षणा ॥ तथाहि॥ शुद्धब्रह्म-णोदुर्ज्ञेयत्वेन तज्ज्ञापनाय जगज्जननमुक्त्वा कर्तृत्वभोक्तृत्वे प्रति-पाद्य तद्द्वारा सोपाधिके ब्रह्मणि बुद्धौ सिद्धायां शाखारुंधती-न्यायेन पूर्वोक्तमपोह्य कर्तृत्वाद्यपेतं ब्रह्म पश्चाद्बोध्यतइतिचेत्॥ नैवंवक्तुंयुक्तं ॥ जगदप्रतीतिप्रसंगात्॥ तथाहि॥ नहिजगत्प्रती-तिः श्रुतिसिद्धा येन पूर्वंबोधयति पश्चान्निषेधतीत्युच्येत किन्तु लोकसिद्धा॥ तथाच तत्र कर्त्रपेक्षायां कर्त्तारमेवोपदिशतीति-वक्तुंयुक्तं नतु लोकसिद्धमेव जगदनूद्य तत्र कर्तृत्वं बोधयित्वा पश्चान्निषेधतीति॥ तथासति कार्यस्य प्रतीतिसिद्धत्वेन कर्त्रंतर-स्याभावाच्च जगतएवाऽसंभवेनाऽनुवादोबाधितविषयः स्यात्॥स्वा-रूढशाखाच्छेदनवन्मातावंध्येतिवाक्यवच्च सर्वार्थतत्त्वप्रतिपादि-का श्रुतिः कथमेवं वदेत् सर्वतोबलवतीह्यन्यथानुपपत्तिः॥ ननूप-लब्धिमात्रेण न वस्तुसत्त्वं वक्तुं शक्यं॥ स्वप्नादिषु तथाप्रसंगात्॥ तथाच निषेधिकायाः श्रुतेः प्रपञ्चासत्त्वमेवाभिप्रेतमितिचेत् त-र्हि प्रतीतिमुपपादयतु देवानां प्रियः॥ न तावद्वासनयेति वक्तुं

शक्यं ॥ तस्याअनुभवजन्यत्वेन जगतश्चासत्त्वेन पूर्वमनुभवासंभवात् ॥ नचानादित्वेन तदुपपत्तिः ॥ सर्वेषामनुभवानां वासनाजनकत्वानियमेन कदाचित्कस्यचिदर्थस्याप्रतीतिप्रसंगात् ॥ नियमे वा सर्वदा तदुद्बोधानियमेनापि तथाप्रसंगः ॥ उद्बोधकंच न दृष्टं ॥ अन्योन्याश्रयप्रसंगात् ॥ नाप्यदृष्टं ॥ दृष्टसामग्रीसंपादनद्वारैव तस्य कारणत्वात् ॥ वैधर्म्याच्चनस्वमादिवदिति तत्त्वसूत्रविरोधाच्च ॥ ३ ॥ ॥ अथ द्वितीयस्तु स्यादित्यादिर्विरोधाच्चेत्यन्तस्तृतीयः खण्डः खण्ड्यते ॥ ॥ तत्र जडवर्गस्य जीवस्य च धर्माणां ब्रह्मणि निषेधोन सम्भवतीत्युक्तं विष्णौजीवगेतिश्लोके ॥ ब्रह्मणिविशेषाननिरूप्य तत्र तन्निषेधे विशेषाणां मिथ्यात्वं नस्यादित्यपि तत्रैवोक्तम् ॥ उपासनार्थमपि क्वचिद्विशेषाणामनुवादइति ब्रह्मनिरूपकमहावाक्यप्रकरणेपि सृष्टिनिरूपकवाक्यानां नासंगतिरितिच तत्रैवोक्तम् ॥ तथाहीत्यादिनाऽध्यारोपापवादस्वरूपकथनन्त्वज्ञानात् ॥ अस्थूलमनण्वित्याद्युक्तोक्तस्यैतस्यैवाक्षरस्यप्रशासनइति वचनस्य गतिस्तु चतुर्थपञ्चमश्लोकयोरुक्तेति तद्विरोधोन ॥ अतोनिर्विशेषवाक्यानां तद्विरोधेन दौर्बल्यापादनं सुवर्णसूत्राख्यतट्टीकोक्तं नकिञ्चित् ॥ यद्यपि सविशेषवाक्यमात्रदर्शनेन जगदुत्पत्तिवर्णने कर्तुरपेक्षया तदुपदेशस्तात्पर्यविषयइति वक्तुं युज्येत तथापि निर्विशेषवाक्यदर्शनेन तदप्यनुवादकोटिगतमेव ॥ अनुवादस्य तु बाधितविषयत्वमिष्टमेव ॥ स्वारूढशाखाच्छेदनादिदृष्टान्तस्तु विषमः ॥ अथरथानूरथयोगान्पथःसृजति यदाकर्मसुकाम्येषुस्त्रियंस्वमेऽनुपश्यतीत्यादौ व्यभिचारीच ॥ बाधितत्वेन ज्ञातस्यापीश्वरेण निर्माणन्त्वैन्द्र-

जालिकवत् ॥ एतेन तट्टीकोक्तं सर्वज्ञस्य मायिकपदार्थनिर्माण-मसंगतमिति निरस्तम् ॥ श्रुतीनां सर्वार्थतत्त्वप्रतिपादकत्वंतु अथ-रथानृइत्यादौ व्यभिचारि ॥ तात्पर्यविषयसर्वार्थतत्त्वप्रतिपादकत्व-न्त्विष्यते ॥ तात्पर्यविषयस्तु निर्विशेषं ब्रह्मैव ॥ प्रतीतिविषयेत्वि-यं व्यवस्था ॥ सद्विलक्षणस्य जगतः स्वप्नवत्प्रतीतिः ॥ हेतुभूतवा-सनायाः सत्यविषयकानुभवजन्यत्वे गौरवादनुभवजन्यत्वमेवा-ङ्गीक्रियते ॥ यावद्भिः संस्कारैः स्मृतिरूपमध्यासरूपं वा कार्य-मुत्पाद्यते तावतामनुभवेनोत्पत्तिर्जीवाऽदृष्टेनचोद्बोधः ॥ अदृष्टस्य दृष्टसामग्रीसम्पादनद्वारा कार्यहेतुत्वनियमस्तु अदृष्टस्य हेतुत्वमन-ङ्गीकुर्वतस्तेऽसङ्गतः ॥ सुषुप्त्युत्तरे स्वप्ने जागरणे चादृष्टमात्रस्य हे-तुत्वं वदन्त्या पुनश्चजन्मान्तरकर्मयोगात्तएवजीवःस्वपितिप्रबुद्ध-इति श्रुत्या विरुद्धश्च ॥ अदृष्टेन स्वकार्योत्पत्तये या दृष्टसामग्री सम्पाद्यते सापि तत्कार्यमेवेति तत्रापि दृष्टसामग्र्यपेक्षायां मू-लच्छेदकर्यनवस्थाऽऽपद्येत अनपेक्षणेतु नियमभङ्गइत्यप्रामाणि-कोऽयं नियमः ॥ सति सम्भवे इति वा नियमशरीरे निवेशनी-यम् ॥ वैधर्म्याच्चेतिसूत्रविरोधस्त्वीशानःसृजतीत्यादिश्लोकव्या-ख्यायामुद्धृतः ॥ इतितृतीयखण्डखण्डनम् ॥ ३ ॥ ॥ ननु जी-वाविद्यैव जगत्प्रतीतौ हेतुः ॥ तथाहि ॥ जीवब्रह्मणोरभेदबोधक-श्रुत्या भेदस्यच तत्रैव ज्ञाननिवर्त्यत्वोक्त्या भेदस्यातात्त्विकत्वम-ज्ञानकृतत्वं च निरूपितं ॥ यतः परमार्थतोभिन्नस्याभेदासंभवः ॥ ज्ञानमप्यज्ञानस्यैव निवर्त्तकं ॥ तथाचानादिरविद्यैवाऽज्ञानरूपा-ऽहमज्ञइत्यनुभवसिद्धा भावरूपा तदवच्छेदिका मंतव्या ॥ जी-वब्रह्मविभागस्यानादित्वात् बंधोऽस्याऽविद्ययाऽनादिरिति वच-

नात् ॥ तथाच विचित्रपरिणामशीलया तयैव दोषरूपया वि-
चित्रं जगत्प्रतीयते ॥ युक्तंचैतत्॥कार्यस्य तुच्छत्वेन तत्कारणेना-
पि तादृशेनैव भवितव्यं ॥ कारणसजातीयत्वात्कार्यस्य ॥ यथा-
च मुखसंबंधमात्रेण दर्पणादिकं बिम्बप्रतिबिम्बभेदनिमित्तं तथा
चिद्रूपब्रह्मसम्बन्धमात्रेण तद्भेदनिमित्तं ॥ सतत्कृततदध्यासवशा-
त्स्वस्मिन्नज्ञत्वं कर्तृत्वभोक्तृत्वे मन्यमानोजीवोविधिनियोज्यता-
दिभावं मनुते ॥ ततः शमदमादिभिर्गुरूपसत्तितदुपदेशश्रवणमन-
ननिदिध्यासनैश्चाधिष्ठानरूपस्यात्मनोऽद्वैतकूटस्थचिदेकरसत्वलक्ष-
णस्वरूपज्ञानेनाज्ञाननिवृत्त्या तत्कार्यरूपप्रपञ्चस्यापि निवृत्तेर्ब्रह्म-
वेदब्रह्मैवभवतीत्यादिश्रुतिनिरूपितोमोक्षः संपद्यते ॥ रज्जुस्वरूप-
ज्ञानेन प्राचीनसर्पानुभवतत्कृतभयनिवृत्त्या स्वास्थ्यमिव॥ननु ब्र-
ह्मणः सर्वज्ञस्याऽविद्यासम्बन्धोऽशक्यवचनः॥अज्ञत्वापादकत्वात्॥
नच जीवाश्रयैव सेतिवाच्यं ॥ऐक्यांगीकारात्तयोः ॥ एतेन जीव-
स्याप्यज्ञत्वमनुपपन्नं वेदितव्यमितिचेत् न जपाकुसुमारुणस्फटि-
कस्तंभश्रेणिगतपुरुषप्रतिबिम्बस्यारुणत्ववज्जीवस्याज्ञत्वावभासोप-
पत्तेः ॥ तद्बिम्बस्योज्वलतेव ब्रह्मणः सर्वज्ञत्वोपपत्तेरविद्याश्रयत्वे-
न नाभेदानुपपत्तिरित्येवंप्राप्ते ब्रूमः ॥ पूर्वं जीवस्वरूपं विचारणी-
यं यस्य सा शक्तिः॥तत्र न तावत् ब्रह्मप्रतिबिम्बोजीवइति पक्षो-
युक्तिसहः॥तथाहि ॥ ब्रह्मणोनीरूपत्वेन प्रतिबिम्बाश्रयस्याज्ञान-
स्य चास्वच्छत्वेन क कस्य प्रतिबिम्बः स्यात् ॥ रूपवतएव प्रति-
बिम्बनियमात् ॥ दृष्टानुसारिणी हि कल्पनोचिता ॥ अन्यथा वा-
युदारुणोरपि बिम्बत्वप्रतिबिम्बाश्रयत्वप्रसङ्गात् ॥ ननु दर्पणादा-

वाकाशप्रतिबिम्बोदृश्यते न तावद्देशीयप्रभामण्डलस्यैव रूपवत्वेन तत्र प्रतिबिम्बप्रतीतेः ॥ किञ्च ॥ यत्र यदस्ति तत्र तन्न प्रतिबिम्बते ॥ दर्पणरेखावत् ॥ तथाच सर्वगतस्य ब्रह्मणोऽविद्यायामपि सर्वगतायां सत्त्वेन कथं प्रतिबिम्बः स्यात् ॥ नच संयोगसम्बन्धेन तत्र वर्त्तमानत्वं प्रतिबिम्बे प्रयोजकं एतयोश्च न संयोगोविभुत्वात् अतोनानुपपत्तिरितिवाच्यं ॥ संयुक्तस्यापि प्रभामण्डलस्य तथाप्रतीतेः ॥ नच यदंशे संयोगः तदंशे न तथेतिवाच्यं ॥ बिसिनीसूत्रमात्रान्तरिताङ्गुलीतलभागस्थप्रभायाअपि दर्पणे प्रतिबिम्बात्॥ किञ्च ॥ द्वासुपर्णासयुजा गुहांप्रविष्टौपरमेपरार्द्धे गुहांप्रविष्टावात्मानौहितद्दर्शनादित्यादिश्रुतिन्यायनिर्णीता जीवपरमात्मनोरेकत्र स्थितिर्बिम्बप्रतिबिम्बपक्षे न संगच्छते॥ तयोर्लोके तथाऽदर्शनात्॥४॥ ॥अथ ननु जीवाविद्यैवेत्यादिस्तयोर्लोके तथादर्शनादित्यन्तश्चतुर्थः खण्डः खण्ड्यते॥ ॥तत्र यद्यप्यस्मन्मतोपपादनप्रयासोमूलटीकयोरस्मन्मताज्ञानपूर्वकत्वेन नं नोरोचते तथापि विस्तरभयान्नतद्दूषणाय प्रयत्यते ॥ मायायाः स्वच्छत्वं रूपरहितस्य प्रतिबिम्बो यत्र यदस्ति तत्रापि तत्प्रतिबिम्बश्च मायायां प्रतिबिम्बतेइतिश्लोकव्याख्यायाम्प्रत्यपादि॥इतीयं कल्पना दृष्टानुसारिण्येव॥ किञ्च त्वदुक्तन्याये कल्पनाशब्देन श्रौतार्थज्ञानस्यापि ग्रहणे स्वर्गादिरलीकः स्यात् ॥ तज्ज्ञानस्य दृष्टानुसारित्वाभावात् ॥ अर्थापत्तेर्व्यतिरेक्यनुमितेर्वा ग्रहणे नात्रतन्न्यायावतारशङ्कापि॥श्रौतप्रतिबिम्बप्रमायाः कल्पनात्वाभावात् ॥ किञ्च प्रभायारूपमात्रत्वेन गुणत्वं मन्यमानस्य ते तत्प्रतिबिम्बस्वीकारे कुतोन रूपवतएव प्रतिबिम्बइति नियमविरोधः ॥ सकिरणायाः प्रभायाः प्रति-

बिम्बस्वीकारे तु न मानम् ॥ किञ्चैवं गमनमप्यालोकस्य सकि-
रणस्यैव स्यादिति त्वया सिद्धान्तपरतया मन्यमानेन गुणाद्वालो-
कवदितिसूत्रेण विरोधः स्यात् ॥ द्वासुपर्णा गुहांप्रविष्टौपरमइत्या-
दिश्रुतेः गुहांप्रविष्टावात्मानौहिइत्यस्य सूत्रस्य चाविरोधो मा-
यायांप्रतिबिम्बतेइतिश्लोकव्याख्यायामुक्तः ॥ एवं टीकोक्तस्य
रूपंरूपमित्यादिश्रुतिव्याख्यानस्य दूषणमपि तत्रैवोक्तम् ॥ किञ्च
गुहांप्रविष्टावित्यत्र च्छायातपावित्युक्तत्वेन सा श्रुतिः प्रतिबिम्ब-
त्ववादिन्येव॥छायास्यादातपाभावेप्रतिबिम्बार्कयोषितोरितिमेदि-
नीकोशेन छायाशब्दस्य प्रतिबिम्बपरत्वज्ञानात् ॥ मायायाब्रह्मा-
श्रितत्वे जीवाश्रितत्वेवा ब्रह्मणोयथा नाज्ञत्वं तथोक्तं तृतीयश्लो-
कव्याख्यायाम् ॥ इतिचतुर्थखण्डखण्डनम् ॥ ४ ॥ ॥अपरंच॥
अविद्यायां ब्रह्मप्रतिबिम्बोजीवइति मोक्षश्चाविद्यानाशइति वद-
तस्तव मते जीवस्वरूपनाशएव मोक्षइतिसंपद्यते॥तथाचात्महान-
मपुरुषार्थइति मोक्षस्याऽपुरुषार्थत्वमापद्येत ॥ जीवस्यालीकत्वं
च स्यात् ॥ तथासति कोऽपि पारलौकिकप्रयत्नं नकुर्यात् ॥ तथा-
हि ॥ मुमुक्षुर्हि मोक्षस्वरूपं बद्धत्वेन स्वस्वरूपं च ज्ञात्वा तत्साध-
ने यतिष्यते ॥ तथाचोक्तोभयस्वरूपाज्ञाने सर्वं मिथ्येति ज्ञात्वा
प्रवृत्तिश्चाविद्याध्यासकृतैवैहिकी पारलौकिक्यपीति ज्ञात्वा च
वरमैहिक्येव नतु पारलौकिकी स्वरूपहानिहेतुत्वादिति सर्वाऽप्र-
वृत्तौ निवृत्तिमार्गएवोच्छिद्येत तूष्णीं वा तिष्ठेत्सर्वोऽपि निषिद्ध-
विहितयोश्चाविशेषात् कुतोऽपि न निवर्त्तेतैवेति सन्मार्गमात्रोच्छे-
दनायेदृशं मतं प्रवर्त्तयन् व्यवहारमात्रे वेदमपि प्रमाणत्वेनोररी-
कुर्वन् प्रच्छन्नबौद्धोऽसि वेदमपि स्वाऽज्ञानकल्पितं ब्रुवन्नतिधृष्टो-

ऽसि ॥ नन्वखिलप्रपञ्चस्यैव तथात्वात्तन्मध्यपातित्वेन वेदेऽपि तथात्वं ब्रवीमि ॥ बाढं ब्रवीषि निरङ्कुशत्वात्ते तुण्डस्य नतु युक्तियुक्तं ब्रवीषि॥तथाहि ॥ नहि प्रतिबिम्बिताम्रतरुकदम्बफलाऽऽदानाय प्रसारितबाहुः प्रतिबिम्बत्वं जानन् दृष्टचरः कश्चित् ॥ एवं वेदे तथात्वं जानंस्तदुक्तस्वर्गापवर्गादिफलकयागसंन्यासादिषु बह्वायाससाध्येषु सर्वबंधुपरित्यागेन सर्वसुखवैमुख्येन च कोवा प्रवर्तेत ॥ ननु स्वप्ने कल्पितफलार्थं प्रवृत्तिर्दृष्टचरा ॥ सत्यं दृष्टचरा तदा तत्सत्यमेवेति विदुषो नतु स्वप्नमिमंपश्यामि नपारमार्थिकमिति स्वप्नएव विदुषइति गृहाण ॥ ननु विशेषदर्शनस्य स्वसजातीयस्यैव भ्रमस्य निवर्त्तकत्वात्प्रकृतेच प्रापञ्चिकभ्रमस्याऽपरोक्षरूपत्वाच्छाब्दं ज्ञानं न तन्निवर्त्तनसमर्थमिति प्रवृत्तिरुपपद्यतइतिचेत् ॥ नैतत्सारं ॥ प्रतिबिम्बितत्वेनानुमितासत्वानामपि तरूणां चाक्षुषप्रतीतिवच्छाब्दज्ञानानंतरमपि प्रपञ्चप्रतीतिरास्तां नाम नतु जातु प्रवृत्तिः॥अन्यथा तत्फलार्थापि प्रवृत्तिः स्यात्॥प्राग्जातस्य यागब्रह्मज्ञानयोः स्वर्गमुक्तिफलकत्वज्ञानस्य पश्चाज्जातेन तन्मिथ्यात्वज्ञानेन बाधे बाधकाभावः॥उभयोरपि शाब्दत्वात्॥ननु द्वैतप्रतीतिरेवाऽनर्थरूपा तन्निवृत्तिश्चाऽपरोक्षब्रह्मज्ञानं विना न भवतीति तदर्थं प्रवृत्तिरितिचेत्॥अत्र मिथ्यात्ववादी प्रष्टव्यः॥तदनर्थहेतुत्वैतत्कार्यकारणभावाऽवगतिस्तवकुतइति॥श्रुतितइति यदि ब्रूयात्तदा सवक्तव्यः निःश्वासितमस्यवेदाः योब्रह्माणंविदधातिपूर्वंयोवैवेदांश्चप्रहिणोतितस्मै वेदोनारायणःसाक्षात्स्वयंभूरितिशुश्रुम वेदैश्चसर्वैरहमेववेद्योवेदांतकृद्वेदविदेवचाहमित्यादिस्वस्मृतिविरुद्धं यदज्ञानकल्पितत्वं स्वस्य लौकिकवाक्यावैशिष्ट्यापादकं कथं श्रु-

तिर्यक्कुमर्हतीति स्वयमेव विचारय॥किञ्च पूर्वं वेदानां पारमार्थिक-सत्त्वं ज्ञात्वा तदौदासीन्येन वा तच्छ्रवणे प्रवृत्तस्त्वदुक्तरीत्याच श्रुते-स्तदुक्तसाधनानां चाऽज्ञानकल्पितत्वं श्रुत्वा स्वामिकभोजनेन पर-मार्थतस्तृप्तिवदसत्तुल्यैर्गुरुवाक्यैः कथं परमार्थसद्रूपं ब्रह्म फलिष्य-तीति शंकयाऽवधारणेन वा न कश्चित्प्रवर्त्तेत॥ननु यतएवाऽवधारणं ततएव प्रवृत्तिरपीतिचेन्नैवं॥पूर्वं तथाऽवधारणेऽपि तादृशानामेव त-दुक्तसाधनानामतादृशफलकत्वं श्रुत्वोक्तदृष्टान्तन्यायेन बाधितार्थ-त्वं जानन्नेकतरबाधोपराशक्यः श्रुतित्वाविशेषादित्यपि जानंस्तद-र्थेसंदिहानस्तन्निर्णयार्थं प्रवृत्तो निःश्वसितमिति योब्रह्माणमिति नामरूपेव्याकरवाणीति ऐतदात्म्यमिदंसर्वमिति आत्मानंस्वयम-कुरुत तत्सत्यमित्याचक्षते कथमसतःसज्जायेतेति वेदोनारायणः वेदैश्चसर्वैः अहंसर्वस्यप्रभवः तेनेब्रह्मह्रदा आनंदमात्रकरपादमु-खोदरादि जन्माद्यस्ययतः आनंदमयोऽभ्यासादित्यादिश्रुतिस्मृति-न्यायसहस्रैर्बाधितत्वाऽवधारणात्त्वदुक्तरीत्या न विचारकस्य प्रवृ-त्तिः संभवति ॥ संप्रतितु विचारकाणामप्यासुरसर्गोत्पन्नत्वेन भ-गवन्मायामोहितानां न बाधज्ञानं पूर्वोक्तमिति तथैव प्रवृत्तिः ॥ अतएव ज्ञानिनामपिचेतांसिदेवीभगवतीहिसा बलादाकृष्यमो-हायमहामायाप्रयच्छतीति मार्कण्डेयेनोक्तं ॥ यतस्तथैवहरीच्छा॥ तदुक्तंपाद्मादौ ॥ द्वापरादौयुगेभूत्वाकलयामानुषादिषु स्वागमैः-कल्पितैस्त्वंचजनान्मद्विमुखान्कुरु मांचगोपाययेनस्यात्सृष्टिरे-षोत्तरोत्तरा इत्यादि ॥ फलंतु तेषामन्धंतमएव ॥ मामप्राप्यैवेति-वचनादित्यलमतिप्रसंगेन ॥ ५ ॥ ॥ अथाऽपरश्चेत्यादिरलम-तिप्रसङ्गेनेत्यन्तः पञ्चमः खण्डः खण्ड्यते ॥ ॥ यथाच जीवस्वरू-

पनाशोनमोक्षो यथाच जीवस्यनालीकत्वं तथाऽष्टमश्लोकव्याख्यायामुक्तम् ॥ प्रत्युत त्वन्मते मुक्तौ जीवस्वरूपनाशइत्युक्तं सप्तमश्लोकव्याख्यायाम् ॥ ब्रह्माऽतिरिक्तं सर्वं मिथ्येति निश्चयस्तु श्रवणादेः परम् ॥ तदानींतु न कापि प्रवृत्तिरिष्यते ॥ अतएव जनकादयः संन्यासेऽपि न प्रावर्त्तन्त ॥ याज्ञवल्क्यादीनां तु श्रौतादिकर्मस्वप्रवृत्तिरूपएव संन्यासोजीवन्मुक्तिसुखानुभवाय विक्षेपजिहासयेत्यवेहि ॥ तस्मात्संन्यासे कर्मान्तरेवा ज्ञानात्प्रागेवप्रवृत्तिः ॥ तदानीं हि वेदास्स्वर्गादयश्च कल्पिताइति ज्ञानं नाऽस्तीति तत्र प्रवर्त्तते ॥ शास्त्रीयं कल्पितत्वज्ञानंतु असम्भावनादिदोषात्संदिग्धमिवेति नानादिकालिकां कर्मादिश्रद्धां परोक्षामपि बाधितुमीष्टे श्रवणादिभिरसम्भावनादिनिवृत्त्या संदेहनिवृत्तौ तु तदपि तां बाधितुमीष्टएव ॥ तथाचश्रुतिः ॥ यत्रत्वस्यद्वैतमिवभवतितदितरइतरम्पश्यतिइत्याद्या यत्रत्वस्यसर्वमात्मैवाभूत्तत्केनकम्पश्येदित्याद्याच ॥ अधिकन्तु अस्मत्कृतदण्डधारणव्यवस्थायां द्रष्टव्यम् ॥ किञ्च लिपौ सत्यपि कल्पितवर्णत्वज्ञाने ऽकल्पितार्थज्ञानाय यथा तत्र प्रवृत्तिः सत्यपिकल्पितत्वज्ञाने दर्पणादिस्थमुखादिषु तद्दर्शनेच यथा प्रवृत्तिस्तथा संन्यासऐहिकामुष्मिकसाधनेष्वपीति न शास्त्रीयमार्गोच्छेदोबाधितानुवृत्त्याव्यवहारस्याचार्यैः साधितत्वात् ॥ नहि प्रतिबिम्बितेत्यत्रदृष्टान्तदार्ष्टान्तिकयोर्वैषम्यं ॥ दृष्टान्ते कल्पिते प्रवृत्त्यदर्शनेन दार्ष्टान्तिके कल्पितेन प्रवृत्त्यभावस्य कथनात् ॥ प्रतिबिम्बिताम्रतरुफलादानेतु न प्रवृत्तिरध्यासाऽनुवृत्तावपि अभिमतसाधकत्वाऽज्ञानात्पुरोवर्त्तिनि तत्साधकत्वज्ञानस्यैव प्रवृत्तिं प्रति हेतुत्वात् कस्य बाधितहेतोः सा-

धकताज्ञानं किम्प्रतिच तदितितु प्रमाणबलाद्यवस्थाप्यं नतु दृ-
ष्टान्तमात्रेणातिप्रसङ्गात् ॥ प्रत्युत त्वन्मते एव सर्वमार्गोच्छेदइत्यु-
क्तं सर्वात्मेत्यस्य व्याख्यायाम् ॥ मुक्तेरपारलौकिकताया नतस्य-
प्राणाइत्यादिश्रुतिसिद्धत्वेनाऽस्मन्मतोपपादनाऽवसरे तद्यत्नस्य पा-
रलौकिकत्वोक्तिश्चिन्त्या ॥ वेदस्तु न व्यवहारमात्रबोधकः कि-
न्तु साक्षात्परम्परया वा ब्रह्मबोधकएवेत्युक्तं सर्वेवेदायत्पदमित्या
दिश्रुतिस्मृतितात्पर्यवर्णनावसरे चतुर्थश्लोकव्याख्यायाम् ॥ प्र-
त्युत पुष्टिमार्गवर्त्तिनस्तेमते एव प्रमाणमार्गपरत्वे नाऽभिमतस्य वे-
दादेर्व्यवहारमात्रपरत्वम् ॥ वेदस्याऽज्ञानकल्पितत्वे महिमापगम-
कथनं तु तन्महिमस्वरूपाज्ञानमूलकमेव ॥ तन्महिमाद्यबाधितता-
त्पर्यविषयार्थकत्वम् ॥ इदंचाऽज्ञानकल्पितत्वे नापैति मानाभावात्
तथेश्वरनिःश्वसितत्वं तथाब्रह्मणेदत्तत्वञ्च॥अतएव नलौकिकवा-
क्यावैशिष्ट्यम् ॥ असत्त्वंतु कल्पितस्य नाऽऽश्रीयते अनिर्वचनी-
यस्य तु हेतुत्वमस्येवेत्युक्तं प्राक् ॥ अतः श्रुतीनां कल्पितत्वेऽपि न
हेतुत्वाभावः ॥ ततोऽनिर्वचनीयत्वाऽवधारणेऽपि तत्र गुरुवाक्या-
दौच प्रवृत्तिः स्वप्नसूचितसमृद्धाविव तत्र विश्वासात्फलस्यावि-
संवादित्वात् ॥ अत्र संदेहोद्विविधश्रुतिभिरेव तासामेकतरविधया
निर्धारणकथनं तु निर्धारणरीत्यज्ञानाच्छ्रुतित्वाविशेषादित्यस्य
विस्मरणाच्च॥तद्रीतिस्तु उपक्रमादिभिस्स्वार्थे तात्पर्यवत्त्वज्ञानाऽ-
ज्ञानाभ्यां बलवत्त्वाबलवत्त्वज्ञानम्॥निःश्वसितं योब्रह्माणमित्या-
देस्तु गतिरुक्ता एवञ्चाऽशास्त्ररीत्या प्रवर्त्तमानस्त्वद्गुरुरेवाऽऽसुरइति
प्रथमश्लोकोदाहृतकौर्मवाक्यैर्निश्चिनु ॥ अतोमार्कण्डेयपुराणवा-
क्यं तद्विषयमेव ॥ इदमपि यक्षानुरोधोबलीतिन्यायेनोक्तम् ॥ ब-

स्तुतस्तु ज्ञानिनामिति श्लोके ज्ञानिपदमोहपदयोः प्रकरणाऽनुरोधादर्थान्तरपरत्वमेवेति तत्प्रकरणं दृष्ट्वाऽवधारय॥किञ्चेदानीतनत्वेन त्वदभिमतेभ्यो भगवत्पादादिभ्यः प्राचीनैः कृतेषु भागवतादिष्वपि त्वयाऽऽसुरमोहनाद्यर्थतया वर्णितस्य जगन्मिथ्यात्वादिकथनस्य दर्शनात्तत्कर्तॄणां व्यासादीनामप्यासुरत्वं स्यात् ॥ किञ्च पाद्मे बङ्गदेशजकायस्थविशेषकृतः प्रक्षेपोऽस्तीति विद्वद्गोष्ठीगम्यमित्युक्तम् ॥ अतोन तद्विद्वदादरणीयम् ॥ किञ्च वक्ष्यमाणत्वद्रीत्याऽऽसृष्टेराचसंहारं कर्त्तव्यस्येशेन प्राक्संकल्पितत्वेन किमिदं नियोजनं तद्विस्मृतिमूलकम् ॥ नियोगंकरिष्यामीत्यपि तदैव संकल्पितमासीदिति चेद्यर्थः ससंकल्पइदानीतनेनोपपत्तेः ॥ सर्वान्संसारेमज्जायिष्यामीति पूर्वसामान्यसंकल्पेनोपपत्तावयंच संकल्पोव्यर्थः ॥ सुव्याख्याताचवङ्गजकायस्थेन हरेर्दयालुता ॥ त्वयाच तच्चरणसेवया लब्धोऽयं श्लोकोविप्रशापादेव ॥ किञ्च शिवस्य नामानुषेषु भावइतीदमसंगतम् ॥ किञ्च भगवत्पादमुनेर्द्वापरे नाऽवतारः किन्तु द्वैपायनस्यैवेति तत्परोऽयं श्लोकः स्यात्॥ तथाच सुव्याख्याता व्यासभक्तिः ॥ किञ्च श्रीकृष्णोद्वापरेऽभूदिति बहुसंमतम् ॥ सचशिवस्यांशइति पुराणे बलदेवकृष्णयोस्तदीयसितकृष्णकेशावतारत्वकथनादवगम्यते ॥ सितश्चकृष्णश्चकश्चतेषामीशौ इतितु कदर्थकल्पना॥बहुषु पुराणेषु तादृशशब्दोल्लेखस्य निस्स्वारस्यकत्वापत्तेः॥विष्णोरीशद्वयसत्त्वे मानाभावाच्चअधिकंतु विस्तरभयान्नोल्लिख्यते ॥ शिवाऽवतारत्वं कृष्णस्य कृष्णजन्मखण्डेऽपि स्थितम् ॥ श्रीकृष्णएवच गोवत्सादिरूपोऽभूदिति मानुषादिष्वित्यादिपदं संगतम् ॥ एवञ्च त्वदभिमतातिरिक्तायास्तल्ली-

लायास्त्वयाऽऽसुरमोहफलकत्वस्य वक्ष्यमाणत्वेनोद्धवसंवादगतश्लो-
कादिषु भागवतस्थेषु त्वया मोहार्थतायाउक्तत्वेन श्लोकस्यानाग-
मत्वे मानाभावेनच श्रीकृष्णपरमेवेदं वाक्यं स्यादिति सुव्याख्याता-
हरिभक्तिः ॥ततोन्धंतमश्च तवैवेत्युक्तम्॥इति पञ्चमखण्डखण्डनम्॥
॥ ५ ॥ ॥ अपरंच लोकेहि द्रष्टुरेव दर्पणादिदोषसम्बधात्प्रति-
बिम्बदर्शनं दृश्यते॥तथाच परमात्मन्यविद्यासम्बधाऽनङ्गीकाराज्जी
ववद्द्रष्टृत्वं तस्य न स्यात्॥तथासति श्रुतिर्द्रष्टृत्वनियामकत्वबोधिका
बाधितविषया स्यात्॥एतदनुरोधेन द्रष्टृत्वाऽङ्गीकारे पूर्वोक्तन्यायेना
ऽविद्यासम्बधित्वे जीवतुल्यताऽऽपत्तिरिति महद्व्याख्यानकौशलं प्र-
च्छन्ननास्तिकस्य ॥ किञ्चैवं गुहांप्रविष्टावितिश्रुत्यर्थबाधः ॥ जी-
वाऽज्ञानकल्पितत्वाद्गुहायाः परमात्मनस्तददर्शित्वेन सहप्रवेशाऽनु-
पपत्तेः ॥ जीवन्मुक्त्यनुपपत्तिश्च ॥ तथाहि ॥ अन्तःकरणे अवि-
द्यायां वा त्वया प्रतिबिम्बोवाच्यः ॥ अन्तःकरणपक्षे जीवन्मुक्त-
स्य तत्सत्वे संसारित्वमेवस्यात् ॥ तदसत्त्वे परममुक्तिरेवेति क्वजी-
वन्मुक्तिः ॥ अविद्यापक्षस्तु सुतरामसंगतः ॥ तस्याऽपरोक्षब्रह्मज्ञा-
नवत्त्वेनाऽज्ञानस्य निवृत्त्या तत्प्रतिबिम्बरूपजीवस्वरूपस्याऽपि
निवृत्तत्वाज्जीवन्मुक्तस्य देहः स्पंदितुमप्यसमर्थः स्यात् ॥ नच प्रा-
रब्धमात्रशेषा सा तदाऽस्तीति सर्वमुपपद्यतइति वाच्यम्॥ब्रह्मसा-
क्षात्कारैकनाश्यायास्तस्यास्तस्मिन् सति वक्तुमशक्यत्वात्॥प्रतिब-
न्धकाभावात् ॥ तेनाऽनिवृत्तौ कदाऽप्यनिवृत्तिप्रसंगश्च॥भोगैकना-
श्यंतदितिचेत् तर्ह्यविद्यातत्कार्यातिरिक्तं तदिति किं वक्तुमुद्यतो-
ऽसि॥नहि रज्जुज्ञानानंतरं केनाप्यंशेन तस्मिन् सर्पज्ञानं तत्कृतभ-

यादिकं वा ऽनुवर्तते॥अनुवर्त्तते कंपादिरितिचेत्॥अनुवर्त्ततां नाम पूर्वकारणरज्जुस्वरूपसत्कंपोनतु तेनाऽन्यत्किंचित्कर्त्तुं शक्यं ॥ एवं प्रारब्धेनाऽपि देहविद्यमानतैव संपादयितुं शक्या नतु भोगादिरपि ॥ अध्यासाभावात् ॥ सुषुप्तौ तथोपलम्भात् ॥ अपरंच सर्पज्ञानजनितकम्पोवेगाख्यसंस्कारवशादनुवर्त्तते प्रकृतेचाऽज्ञानकार्यप्रारब्धे संस्काराऽभावात् ज्ञाननाश्यत्वाऽवश्यंभावाच्च ॥ ज्ञानेसति कथं तदनुवृत्तिर्भवेत् ॥ प्रवचनानुपपत्तिश्च ॥ जीवन्मुक्तिनिरूपकश्रुतिस्मृतिपुराणविरोधात्सा नाऽस्तीति न वक्तुं शक्यं ॥ तस्मात्प्रतिबिम्बोजीवइतिपक्षोऽसंगतः ॥ ६ ॥ ॥ अथापरश्चलोकेहीत्यारभ्येतिपक्षोऽसङ्गतइत्यन्तः षष्ठः खण्डः खण्ड्यते ॥ ॥ तत्र द्रष्टृत्वनियामकत्वे न शुद्धस्य किन्तु शबलस्येति कर्तृत्ववत्तदुपपत्तिर्मायासम्बन्धस्याऽवच्छेदरीत्या प्रतिबिम्बरीत्या वा सत्त्वात् ॥ अतएव मायायां प्रतिबिम्बते इत्येतद्व्याख्यानाऽवसरे निर्णीतार्था जीवेशावाभासेनकरोतिमायाचाविद्याचस्वयमेवभवतीति श्रुतिः कार्योपाधिरयंजीवःकारणोपाधिरीश्वरइतिस्मृतिश्च संगता ॥आवरणस्य तत्राऽभावादीश्वरस्य नाऽज्ञत्वम् ॥ एतावन्तमेव मायाविद्ययोर्भेदं वदन्ति यन्मायायानाऽऽवरकत्वादि अविद्यायास्तु तदपीतीश्वरे जीवाद्वैलक्षण्यस्योपपत्तिः॥प्रकारान्तरं तूक्तं प्राक् एवञ्च गुहाद्रष्टृत्वेन तत्प्रवेशोव्याख्यातः ॥ जीवकल्पितद्रष्टृत्वादेः प्रवेशस्य च स्वप्नस्येव श्रुतावनुवादे दोषाभावाच्च ॥ यत्तु टीकाकृता चितोरूपाऽभावेन प्रतिबिम्बाऽसम्भवान्न मायायां प्रतिबिम्बईश्वरइत्युक्तं ॥ तन्न ॥ अरूपवस्तुप्रतिबिम्बस्योक्तत्वादुक्तश्रुतिविरोधाच्च ॥ विभुत्वादितु जीववत्पराभेदेन बोध्यम् ॥ ईशशरीरादिकं तु पर-

कल्पितं स्वोपाधिविक्षेपशक्तिकल्पितं वेति न काऽपि हानिः ॥ जीवन्मुक्तेर्व्यवस्था तु तृतीयश्लोकव्याख्यायामुक्ता ॥ ननु ते-नाऽन्यत्किञ्चिदितितु नयुक्तम् ॥ भयाज्ज्वरादेर्दर्शनात् ॥ भोगार्थ शरीरसम्पादनाय स्वीकृतप्रारब्धस्य भोगाऽदातृता तु वक्तुमेव न युज्यते ॥ अज्ञानकार्यस्य देहस्य स्वीकारे तादृशस्य भोगस्याङ्गी-कारे कः प्रतिबन्धकः ॥ सुषुप्तौ भोगाऽभावस्तु देहाद्यभावात् ॥ तात्कालिकभोगार्हकर्माभावाच्च ॥ सुषुप्तिकालेसकलेविलीनइ-तिश्रुतेः ॥ पुनश्चजन्मान्तरकर्मयोगात्सएवजीवःस्वपितिप्रबुद्धइति तच्छ्रुतिशेषेण स्वापादावेव कर्मजन्यताया बोधनाच्च ॥ प्रकारा-न्तरं तूक्तम्प्रागित्युपरम्यते ॥ एवञ्च प्रवचनमपि संगतम् ॥ इति ष-ष्ठखण्डखण्डनम् ॥ ६ ॥ ॥ स्यादेतत् ॥ नवयं प्रतिबिम्बं जीवं ब्रूमः किन्त्वङ्गुल्यादिसंपर्काच्चंद्रादिद्वैताभासवदविद्यातोब्रह्माऽप्यने-कवदाभासमानद्वित्वादिसंख्यायोगि जीवपदवाच्यमिति ॥ नैत-द्विद्वदादरणीयं ॥ तथाहि ॥अविद्यासम्बन्धाद्ब्रह्मणोऽनेकवदवभा-सः कस्येति विचारणीयं ॥ नतावद्ब्रह्मणः॥तत्र भ्रमायोगात्॥नाऽपि जीवस्य ॥ तादृशाऽवभासविषयत्वात् ॥ नहि दोषवशाद्गृहीतचं-द्राणामेव स्वाऽनेकत्वाऽवभासः सम्भवति ॥ तेषामलीकत्वात् ॥ द्रष्टरि सत्येव तेषांभानाच्च ॥ दोषाऽसम्बन्धादेव न तस्य ॥ किञ्चै-वं जीवात्मनियामकत्वस्य परमात्मन्यसम्भवः॥ तथाच यआत्मा-नमंतरोयमयतीत्यादिश्रुतिर्बाधितविषया स्यात् ॥ अपरंच अवि-द्याब्रह्मणोः कः सम्बन्धः ॥ न तावत्संयोगः ॥ तयोर्विभुत्वेन तद-नङ्गीकारात् ॥ नाऽप्यध्यासः ॥ तस्याऽप्यभावात् ॥ नाऽपि स्वरू-

---

१ उभयमाप्नोकर्मणीति नियमात्षष्ठ्यनुपपत्तिः

पलक्षणः ॥ मुक्ताऽऽत्मन्यपि तत्संभवेन संसारित्वाऽऽपादकत्वप्रसङ्गात् ॥ आस्तां वा यः कश्चित्सम्बन्धः सोऽप्यनादिर्वाच्यः ॥ तथाच ब्रह्माऽविद्यातत्संबन्धानामनादित्वेन जीवविभागस्याऽप्यनादित्वादविद्यासंबन्धजीवविभागयोः कार्यकारणभावाऽसंगतिः ॥ एककालीनत्वात् ॥ ७ ॥ ॥ अथ स्यादेतन्नवयमित्यादि एककालीनत्वादित्यन्तः सप्तमः खण्डः खण्ड्यते ॥ ॥ यद्यपि प्रतिबिम्बवादेनोपपत्तौ द्विचन्द्रदृष्टान्तेन जीवे भेदादिसाधनाय प्रकारान्तरं नापेक्षितं तथापि जीवस्य प्रतिबिम्बत्वावच्छिन्नत्वे अनङ्गीकुर्वद्भिरस्मदीयैस्तत्पक्षस्य लिखितत्वात्तद्दूषणोद्धारः क्रियते ॥ तत्र तावदनेन दृष्टान्तेनैकस्मिन्भेदप्रतीत्यसम्भवोनास्तीत्येवोपपाद्यते नतु तादृशत्वमेवेशजीवयोः ॥ एवञ्च नियामकत्वद्रष्टृत्वादि स्वाप्नदृष्टान्तेनोपपाद्यते ॥ स्वप्ने देवदत्तस्यैकस्यैव नियन्तृत्वद्रष्टृत्वादेर्दर्शनात् ॥ सार्वज्ञ्यादितु शबलस्य नतु शुद्धस्य ॥ ब्रह्मणि मायाकृतस्याऽऽवरणस्याऽभावेऽपि तत्कृतस्य विक्षेपस्योपपादितत्वादनेकाऽवभासोपपत्तिः ॥ तादृशाऽवभासविषयस्याऽपि जीवस्य तादृशाऽवभासे किम्प्रतिबन्धकम् ॥ किमध्यासात्प्रागसत्वम् उत जडत्वम् विषयाविषयिभावविरोधोवा ॥ नाद्यः ॥ अनादित्वाज्जीवभ्रमस्य ॥ न द्वितीयोऽनङ्गीकारात् ॥ न तृतीयः ॥ मानाभावादहमस्मीतिप्रतीतिविरोधाच्च ॥ उदाहरणेन तत्साधनन्तु उक्तबहुविधश्रुतिबाधितम् ॥ उपाधिमच्च ॥ तथाहि ॥ जीवोन जीवाऽवभासवान् तदवभासविषयत्वात् ॥ योयदवभासविषयः सन तदवभासवान् ॥ यथा द्वितीयश्चन्द्रइत्यत्र जडत्वमुपाधिश्चन्द्रादौ तत्सत्वाज्जीवे तदसत्त्वाच्च ॥ जीवेतरईशेऽपि तदसत्त्वेन न पक्षेतरत्व-

समत्वम् ॥ दृष्टान्ते द्वित्वेन दर्शनं तु न चन्द्रात्मनः किन्तु तन्मण्ड-
लस्येति तत्राऽस्ति जडत्वम् ॥ इदञ्चेशजीवयोर्द्वित्ववच्चन्द्रादेरिव
पदार्थान्तरत्वमाश्रित्योक्तम्॥एकस्मिन्भेदप्रतीतिमात्रे सदृष्टान्तइत्यु-
क्तं ॥ तत्रतु तथाहीत्यादिविकल्पपूर्वकदोषाऽनवसरएव जीवस्य
तदवभासे सर्वोपपत्तेः ॥ विभुद्वयस्य संयोगोनास्तीतिनिर्मूलम् ॥
एकदेशावच्छेदेन विद्यमानयोः कालाकाशयोरसम्बन्धे माना-
भावात्सम्बन्धान्तरस्याऽसम्भवाच्च ॥ कर्मजत्वनियमस्तु जन्यसं-
योगविषयकस्तत्रैवसम्भवात् ॥ विभागोऽपि नित्यस्तयोः स्यादि-
तितु न शङ्क्यम् ॥ तस्य संयोगनाशकैकस्वरूपत्वेन विरोधेन सं-
योगवत्यङ्गीकर्तुमशक्यत्वात् ॥ अध्यासोऽपि जीवस्याऽनादिर्भव-
त्येव सएवेशाविद्ययोः संबन्धः सएवच बन्धोऽस्येत्यनेनोच्यते ॥
स्वरूपंत्वविद्यायाएव ब्रह्मण्यविद्यासम्बन्धइत्यविद्यानाशे मुक्ता-
त्मनोन संसारिता ॥ तन्नाशेऽपि नाऽन्येषां मुक्तिर्मायायाबहुत्वा-
त् ॥ पराऽस्यशक्तिर्विविधैवश्रूयते इन्द्रोमायाभिरित्यादिश्रुतेः॥मा-
यायाएकत्वपक्षे मुक्तात्मनस्तद्विनाशेऽपीतरेषां दृष्ट्या विद्यमान-
त्वाच्च ॥ यथाहि शुक्तौ रजतं पश्यतां दशानां पुरुषाणां मध्ये ए-
कस्य शुक्तिसाक्षात्कारेण तद्रजतनाशेऽपि इतरेषां दृष्ट्या तद-
स्त्येव एवं ज्ञानीतरदृष्ट्या मायासत्त्वे न बाधकम् ॥ वस्तुतोनाशेऽ-
पि कल्पितसत्त्वस्यानपायात् ॥ एतेन मायानाशे सर्वमुक्तिस्स्या-
दिति तट्टीकाकारोक्तिः प्रत्युक्ता ॥ एवञ्च पराऽस्यशक्तिरितिश्रुत्यु-
क्तस्येश्वरशक्तित्वस्याऽपि मायायां न विरोधएकमुक्तया ज्ञानेन
विनाशेऽपि स्थायित्वात् ॥ ईशशक्तेरनाशे मानाभावाच्च ॥ इति-
सप्तमखण्डखण्डनम् ॥ ७ ॥ ॥ ननु श्रुतिबोधितः कार्यकाकार-

णभावः तर्हि तन्निर्वाहाय जीवविभागस्याऽर्वाचीनतामुरीकुरु ॥ बंधोऽस्याऽविद्ययानाऽदिरिति वाक्यात्सोप्यनादिरेव मंतव्यइतिचे- त् ॥ मैवं ॥ नहि सर्वात्मना तत्र सादित्वनिषेधः किंतु घटपटादि- साधारणतन्निषेधः ॥ यथा देवेषु मरणनिषेधोऽमरनाम्ना ॥ अ- न्यथाऽविद्ययेति करणत्वबोधकतृतीयांतंनवदेत् ॥ तच्च बंधलक्ष- णकार्यात्पूर्वकालीनत्वं विना ऽस्यान निर्वहति ॥ ननु बन्धनैक- स्वभावायास्तस्याजीवस्य चाऽनादित्वे कंचित्कालं न बंधइत्यत्र कोहेतुः ॥ तदा जीवस्वरूपं कीदृशमित्यपि विचारणीयं ॥ मुक्त- मिति तु न वक्तुं शक्यं ॥ साधनाभावात् ॥ अग्रेबंधाच्च ॥ नवा बद्धं ॥ तस्य भावित्वात् ॥ एतदुभयाऽतिरिक्तावस्था चाऽप्रसिद्धे- ति नैवं युक्तमितिचेत् ॥ नैतत्साधु ॥ श्रियापुष्ट्येतिवाक्ये मुख्या- सु द्वादशशक्तिषु गणनादविद्यायाभगवच्छक्तित्वेन तदिच्छाधीन- त्वात् ॥ तथाच यद्बंधे तदिच्छा तमेव सा बध्नाति नान्यं ॥ अतएव शुकसनकादीनां सर्वदा मुक्तैव ॥ तेषु तथेच्छाऽभावात् ॥ अ- तएव श्रुतिरपि एषह्येवसाधुकर्मकारयतितंयमेभ्योलोकेभ्यउन्नि- नीषति एषएवाऽसाधुकर्मकारयतितंयमधोनिनीषतीति तदिच्छा- धीनत्वमेवाह॥जीवस्वरूपं चाऽग्रे वक्ष्यामः॥८॥ ॥ अथ ननुश्रु- तिबोधितइत्यारभ्याऽग्रेवक्ष्यामइत्यन्तोऽष्टमः खण्डः खण्ड्यते॥तत्र बन्धोऽस्याविद्ययेतिवाक्यस्य तृतीयश्लोकव्याख्यायामर्थउक्तः ॥ श्रियापुष्ट्येत्यादिश्लोके पाठमात्रेण नाऽविद्यायाजीवशक्तित्वम- पलपितुं युक्तं ॥ जीवेशावाभासेनकरोतिमायाचाविद्याचस्वयमे- वभवतीति श्रुतिविरोधात् ॥ भगवदाराधकत्वेऽप्यविद्यायान जी- वशक्तित्वविरोधः ॥ एवमीश्वराधीनप्रवृत्तिनिवृत्तिकत्वेऽपि तदज-

न्यत्वान्नानादित्वाविरोधो भृत्यस्य राजाधीनप्रवृत्त्यादिमत्वेऽपि रा-
जाऽजन्यत्वस्य दृष्टत्वात् ॥ तच्छक्तित्वेऽपि तदधीनोत्पत्तिकत्वं मा-
यायान युज्यते वक्तुं ॥ मानाभावात् ॥ ग्राहकतर्काभावाद्वह्निश-
क्तेस्तदधीनोत्पत्तिकत्वाभावाच्चव्याप्तिग्रहाऽभावेऽनुमानाप्रवृत्तेः ॥
तृतीयश्लोकोक्तमनादित्वमपि स्मरणीयम् ॥ पूर्वमबद्धस्य भगव-
दिच्छया बन्धोक्तावपि तत्रत्यमेव स्मरणीयम् ॥ किञ्च शुकादीनां
नित्यमुक्तत्वे न मानम् ॥ किञ्चैवं मुक्तिज्ञानयोः कार्यकारणभा-
वोजन्यमुक्तिविषयकत्वेन संकोच्यइति गौरवम् ॥ किञ्च संसार-
स्य सादित्वे तुरुष्कादिवत्त्वयाऽपि वचनं किञ्चिन्मानं वाच्यं तच्च
न वेदादिस्थं ॥ तत्रानुपलम्भात् ॥ तुरुष्कपन्थस्थं तु तवैव श्रद्धा-
विषयतार्हम् ॥ विप्रशापजन्यस्य चेतसि तमःप्रवेशस्य दुरुच्छेद-
त्वात्॥प्रकृतियान्तिभूतानिनिग्रहःकिंकरिष्यतीतिवचनात्॥ एषह्ये-
वसाध्वितिश्रुतेर्बन्धस्येश्वरेच्छाधीनतायां प्रमाणतयोपन्यासस्तु कौ-
शलं ते ख्यापयति॥श्रुत्यर्थस्तूक्तोजीवस्वरूपं त्वदभिमतमग्रे खण्ड-
यिष्यामइत्यलम् ॥ इत्यष्टमखण्डखण्डनम् ॥ ८ ॥ ॥ अन्यच्च ॥
अविद्यासंबन्धमात्रेण जीवभावं वदतः शुद्धब्रह्मण्येवच तत्सम्बन्धं
वदतस्तव मते जीवभावानापत्तौ हेत्वभावान्निरवयवत्वाच्चांशभेदेन
तथात्वस्य वक्तुमशक्यत्वाच्च ॥ सर्वज्ञत्वादिविशिष्टपरमात्माऽसि-
द्ध्या सर्वश्रुत्युपप्लवः॥किञ्च जीवपरमात्मनोरनादिसिद्धं भेदं वदन्
पारमार्थिकं कुतोन ब्रूषे यतः श्रुतिरनयोरभेदं बोधयति ॥ सच
परमार्थतोभिन्नयोर्न संभवतीत्यवास्तवोभेदोऽत्र वाच्यः ॥ तादृ-
शश्च भेदोबिम्बप्रतिबिम्बयोराभासतदाश्रययोश्च दृष्टचरोलोकइ-
ति तथाऽत्रापि ब्रवीमि ॥ अतएव महावाक्ये भागत्यागलक्षणा-

ऽपि ॥ बाढं ब्रवीषि परं पूर्वापरालोचनरहितः ॥ तथाहि स्यादेत-
देवं यदि तत्त्वमसीत्येतन्मात्रं महावाक्यं स्यात् ॥ नत्वेवं किंतु सं-
पूर्णः प्रपाठकः ॥ तत्रोपक्रमे ॥ अपिवा तमादेशमप्राक्षोयेनाऽश्रुतं
श्रुतं भवत्यमतं मतमविज्ञातं विज्ञातमित्येकज्ञानेन सर्वविज्ञानं
प्रतिज्ञातं ॥ तदेकमेवचेत्सर्वं भवेत्तदोपपद्यते ॥ यथा सुवर्णखण्डाः
सुवर्णकार्यं च सर्वं सुवर्णमिति सुवर्णज्ञाने तज्ज्ञानं भवति अतो-
ब्रह्मविज्ञानेन सर्वविज्ञानं वक्तुं सर्वस्य ब्रह्मरूपत्वं सदेवसौम्येत्या-
रभ्य निरूपितं ॥ तत्रैतदात्म्यमिदं सर्वमिति जडस्य सर्वस्याऽपि
तदात्मकत्वमुक्तं ॥ ततोजडस्य नाशित्वदर्शनेनाऽब्रह्मत्वशंकानि-
रासायाह ॥ तत्सत्यमिति ॥ तेनाऽऽविर्भावतिरोभावावेव श्रुत्यभि-
मतौ॥नाशोत्पत्तिप्रतीतिर्भ्रांतेः ॥ ९ ॥ ॥ अथाऽन्यच्चाऽविद्येत्या-
दिर्नाशोत्पत्तिप्रतीतिर्भ्रान्तेरित्यन्तोनवमः खण्डःखण्ड्यते॥ ॥तत्र
मायायाम्प्रतिबिम्बतइत्यत्र मायायाः परिच्छिन्नत्वादि तत्र ब्रह्म-
प्रतिबिम्बश्च प्रत्यपादि ॥ तथाच कथं सर्वस्य ब्रह्मणोजीवभावउ-
पाध्यतिरिक्तस्य तत्सम्बन्धाभावेन जीवभावे प्रयोजकाभावात् ॥
ततः सुस्थितं सार्वज्ञ्यमित्युक्तम्प्राक्॥पादोऽस्यविश्वेत्याद्याः श्रुतयः
स्मृतिसूत्रे चोक्ते॥तदेकमेवचेदित्यादितु निरनुयोज्यानुयोगः॥सर्व-
स्यैकतायाअस्माभिः स्वीकृतत्वात्॥छान्दोग्यस्थं प्राथमिकं मृद्दृष्टा-
न्तम्परित्यज्य द्वितीयं सुवर्णदृष्टान्तं वदतस्तव याऽऽशा सुवर्णाविका-
रित्वविषया सातु तत्रत्यविकारशब्देन निरस्तेति चतुर्थश्लोकव्या-
ख्यायामुक्तमस्माभिः ऐतदात्म्यमित्यत्रैतदात्मा यस्य सर्वस्य सएत-
दात्मेति बहुव्रीहिः ॥ यथा पीतमम्बरं यस्य विष्णोःसपीताम्बरो-
विष्णुरित्यत्र समभिव्याहृतविष्णुपदार्थस्यान्यपदार्थत्वबोधनाय

विग्रहे विष्णुपदं यस्येतिषष्ठ्यन्तसमानविभक्तिकं केचित् प्रयुञ्जते नतु विष्णुपदार्थत्वेन तदन्तर्भावेण समासः॥ एवमत्रापि समभिव्याहृतसर्वपदार्थस्यान्यपदार्थत्वबोधनायैव यस्येति षष्ठ्यन्तसमान विभक्तिकं सर्वस्येति पदं विग्रहे बोध्यम्॥तेन न सर्वमित्यस्य वैयर्थ्यम्॥सर्वनाम्नोविशिष्य बोधकतायाः सन्निकृष्टपदेन पर्यवसानात्॥यथा वैश्वदेव्यामिक्षेत्यत्र साऽस्यदेवतेति सर्वनामार्थे विहितस्य तद्धितस्याऽऽमिक्षापदेन विषयविशेषोबोध्यते ॥ तदाहुर्भाट्टाः ॥ आमिक्षांदेवतायुक्तांवदत्येषहितद्धितः आमिक्षापदसान्निध्यात्तस्यैवविषयापर्णम् ॥ एतदात्मशब्दाद्भावे ष्यञ् ॥ तेन एषआत्मा इदंसर्वमित्यर्थोयुक्तः नतु मयूरव्यंसकादित्वात्समासे भावे ष्यञि एषआत्मा तन्मयमित्यर्थउचितः॥आत्मशब्दस्य मयडर्थकत्वे एतदात्मशब्दस्य मयूरव्यंसकादिषुपाठे च मानाभावात् ॥ भावार्थकष्यञर्थस्याऽन्वयाऽनुपपत्तेश्च ॥ एतेन तट्टीकाकारस्य बहुव्रीहौ सर्वशब्दवैयर्थ्यभ्रमः मयूरव्यंसकादिसमासादिभ्रमश्च प्रत्युक्तः॥ अत्रच सर्वशब्देन जडस्यैव ग्रहणमित्यत्र न मानं तेन सर्वशब्देन चिदचिच्च गृह्यते ॥ तत्सत्यमित्यत्र तत्त्वमसीत्यत्रेव तच्छब्देन कारणं गृह्यते प्रकरणात् नतु कार्यम् मानाभावात् ॥ अन्यथा सआत्मेत्यत्रापि कार्यस्यैव तच्छब्देन ग्रहणे तत्त्वमसीत्यत्रापि तस्यैवग्रहणं स्यात्कारणप्रकरणस्य विच्छेदात्॥एवंच तन्निष्ठस्य मोक्षोपदेशात् हेयत्वावचनाच्चेति सूत्रविरोधः ॥ ब्रह्मणः सर्वकार्यात्मकत्वेन तद्गदसत्त्वशङ्काप्रसक्ता सा तत् सत्यमित्यनेन निवारिता ॥ सर्पादिनानाभावभानेन तत्तदात्मिकाया रज्ज्वायथा न स्वीयरज्जु-

रूपपरित्यागएवं तत्तदात्मकत्वेऽपि सतोन सद्रूपपरित्यागइतिभा-
वः ॥ एवंच जगतोमिथ्यात्वं सूपपन्नम् ॥ सर्वपदार्थस्य सत्त्यतायां
तात्पर्यें तु तस्य सन्निकृष्टतया सन्निकृष्टपरामर्शकमिदंपदं प्रयु-
ञ्जीत नतु तत्पदम् ॥ सआत्मेति वाक्यन्तु तत्त्वमसीत्यत्रासम्भाव-
नानिवृत्त्यै ॥ यतः सआत्माऽतस्तत्त्वमसीति फलितार्थः ॥ आत्म-
शब्दश्च निरुपपदः प्रत्यगात्मनि रूढः ॥ तस्मादेतद्वचनाविश्वासेन
जगतोनित्यतयाऽऽविर्भावतिरोभावावेवेति कल्पना भ्रान्तिरेव ॥
तस्यभावस्तत्त्वमिति व्याचक्षाणस्तट्टीकाकारोऽतिभ्रान्तोभावप्रत्य-
यार्थानन्वयात् ॥ मध्यमपुरुषार्थान्वयार्थं त्वंपदाध्याहारे गौरवाच्च
इतिनवमखण्डखण्डनम् ॥ ९ ॥ ॥ नन्वाविर्भावतिरोभावौ नित्या-
वनित्यौ वा ॥ नाद्यः ॥ सततं घटोपलंभाऽनुपलंभप्रसंगाभ्यामनि-
र्वाच्यतापत्तेः ॥ तयोर्धमत्वेन विरोधात्तादृग्धर्मासिद्धौ तयोरपि
वक्तुमशक्यत्वेन शून्यवादश्चापद्येत ॥ साधने प्रवृत्तिश्चाऽनुपप-
न्ना स्यात् ॥ किंच वर्त्तमानस्य वस्तुनोदर्शनयोग्यतातदयोग्य-
तात्मकौ हि तौ तथासति क्व भगवच्छक्तित्वं ॥ एवंसति घटोपलं-
भानुपलंभयोः कादाचित्कत्वे हेतावुच्यमानेतत्कारणस्तोमपरंपर-
योस्तथात्वं तथेति वाच्यं ॥ एवमीश्वरेच्छापर्यंतं धावने तस्याअ-
पि अनित्यत्वे न पूर्वोक्तदूषणोद्धारोऽपसिद्धांतश्च ॥ नचेतरसहृ-
कार्यभावान्नोक्तदूषणमिति वाच्यं ॥ उक्तरीत्या तस्यैव निरूप-
यितुमशक्यत्वात् ॥ नाप्युक्तयोग्यतात्मकं तत्त्वमिति वक्तुं शक्यं ॥
वाध्वाद्यव्यापकत्वात् ॥ नच दर्शनपदमनुभवपरमिति वाच्यं ॥ अ-
तीताऽनागतयोरपि चाक्षुषत्वप्रसंगात् ॥ एवंसति तिरोभावोच्छे-
दश्च ॥ किञ्च तौ प्रतिव्यक्ति भिन्नावभिन्नौ वा ॥ नांत्यः ॥ यु-

गपत्सकलोपलंभप्रसंगात् ॥ नचाऽवच्छेदभेदान्न तत्प्रसंगइति वा-
च्यं ॥ विचाराऽक्षमत्वात् ॥ तथाहि ॥ अवच्छेदकोहि घटादिस्त-
थाच तत्तदवच्छिन्नआविर्भावइत्यागतं तथाचाऽवच्छेदकस्य नि-
त्यत्वात्सदोपलंभः स्यादनुपलंभोवा ॥ नच तत्तत्कालोपाध्यवच्छे-
दभेदान्न तत्प्रसंगइति वाच्यं ॥ तस्याऽपि त्वन्मते घटतुल्यत्वात्॥न-
ह्येकदोपलभ्यमानानां तथात्वमुपपन्नं आविर्भावस्तत्तदवच्छेदेने-
ति वक्तुं शक्यं ॥ तत्राऽप्युक्तविकल्पैरनवस्थाऽऽपातात् ॥ तिरो-
भावोऽप्येतेन व्याख्यातः ॥ नाद्यः ॥ आविर्भावतिरोभावौ शक्ती-
वै मुरवैरिणइति वाक्यविरोधात् ॥ नचाऽनंतशक्तिमत्त्वेन तदुपप-
त्तिरेकजातीयकार्यकरणस्यैकयैव संभवति सत्यनेकतत्कल्पने
मानाभावाद्गौरवाच्च ॥ उक्तरीत्या कादाचित्कत्वहेतुरपि न निरू-
पयितुं शक्यः ॥ नद्वितीयः ॥ उक्तविरोधात् ॥ भगवद्धर्माणां नि-
त्यत्वात्॥तथासत्युत्पत्तिस्तयोर्वाच्या॥तर्हिघटादीनामेव तामङ्गीकुरु
किमंतर्गडुभ्यामेताभ्यामपसिद्धांतश्च॥तदुत्पादकं दंडमुद्गरादिकमेव
त्वयावाच्यं तच्च घटतत्ध्वंसोत्पादकमेव ॥ तिरोभावश्च घटादेर्न
वक्तुं शक्यः ॥ तथासति वस्तुसत्तया लौकिकप्रत्यक्षाऽविषयत्वे-
ऽपि ध्वस्तोघटोयोगिनोपलभ्येत ॥ रूपवतः सतोयोगिप्रत्यक्षवि-
विषयत्वनियमात् ॥ नचैवं प्रमाणाभावात् ॥ प्रजाश्वतुल्यकाली-
नानाऽधुनासंतिकालिताइति श्रीभागवतवाक्याच्चेति प्राप्ते॥अत्रो-
च्यते तत्त्वरूपं तच्छ्रुत्वाऽपास्य संशयान्॥ब्रह्मवादे कृतात्मानःप्राप्नु-
वंतु हरिं बुधाः ॥ १॥ अनुभवविषयत्वयोग्यताऽऽविर्भावस्तदविष-
यत्वयोग्यता तु तिरोभावः ॥ ते च वस्तुसत्त्वेनैवाऽवच्छिद्येते॥नह्य-
लीके ते संभवतः॥तयोर्धर्मत्वेन निराश्रयत्वाऽसंभवात्॥किञ्च भा-

वित्वेन भूतत्वेन च व्यवह्रियमाणयोर्वस्तुनोः सत्ता त्वयाऽप्युररी-
कार्या॥तयोर्घटादिधर्मत्वेन तदभावे निराश्रयत्वप्रसंगात्॥एतेनवर्त-
मानप्रागभावप्रतियोगित्वं भावित्वं वर्त्तमानध्वंसप्रतियोगित्वं ध्वस्त
त्वमितिनिरस्तं॥नच कालोपाधिरेव तदाश्रयइति वाच्यं॥तत्र तद्वै-
शिष्ट्यप्रतीतिप्रसंगस्य दुर्निवारत्वात् ॥ ननु यथा तन्त्वधिकरणक-
घटनिरूपितसमवायस्य काले सत्त्वेऽपि तत्समवेतत्वेन नपटे प्रती-
तिस्तेन सम्बन्धेन तत्राऽसत्त्वात्तथाऽत्र तत्प्रतियोगित्वाभावान्न
तथा प्रतीतिरिति चेत् ॥ न ॥ प्रतियोगित्वस्य स्वरूपसम्बन्धविशेष-
त्वेनांऽगीकारात्तस्य च स्वरूपद्वयात्मकत्वात्तस्य चाऽत्राऽपि स-
त्वात् ॥ ननु तत्सत्वेऽपि सविशेषोनात्रेति चेत् हंत सकोवा यत्रेदृ-
शी तव श्रद्धा ॥ नदृष्टः प्रमाणाभावात्॥ननु तद्वयसत्त्वेऽपि वैशि-
ष्ट्याऽप्रतीत्यन्यथानुपपत्त्या सम्बन्धान्तरमन्तरेण विशिष्टप्रत्ययजन-
नयोग्यत्वलक्षणः सकल्प्यतइतिचेत् ॥ मैवं ॥ उक्तरूपस्याऽपि
कालएव सत्वं त्वया वाच्यं ॥ तथाचोक्तदूषणभिया तत्समवाय-
स्य प्रयोजकत्वं वाच्यं ॥ तथाच तदा समवाय्यभावेनोक्तयोग्य-
त्वसमवायस्य कुत्राऽपि वक्तुमशक्यत्वात्कालाश्रयत्वस्याऽप्य-
सिद्धेः ॥ जन्यभावस्याऽन्यत्र समवेतस्यैव कालाधारत्वनियमात्॥
अन्यथाऽसतोप्याश्रयः कालइत्यंगीकारआपद्येत ॥ नह्यन्यधर्मस्य
कालाश्रितत्वेनैव सिद्धिः क्वचिद्दृष्टचरा ॥ तथासत्यन्यधर्मत्वव्या-
हतेः॥ अतोभावित्वभूतत्वव्यवहारकालेऽपि घटादिसत्तोरीकार्या॥
किञ्च त्वदुक्तयोग्यता केनाऽवच्छिद्यतइति पृच्छामः ॥ तत्रचेद्य-
दाकदाचिद्वस्तुसत्तयैवाऽवच्छिद्यतइति ब्रवीषि तदा यदाकदाचि-
दिति त्यज ॥ अप्रयोजकत्वाद्गौरवाच्च ॥ तथा सम्बन्धान्तरमन्तरे-

णेतिच ॥ स्वरूपस्य सम्बन्धत्वे सिद्धे सम्बन्धान्तरपदं सार्थकं भ-
वेत् ॥ तथाचाऽऽत्माश्रयः ॥ नच षोढा संनिकर्षाऽभावेऽपि तथा-
त्वं तदर्थइतिवाच्यं ॥ योगजधर्मेऽतिव्याप्तेः ॥ नच लौकिकतज्जन-
नयोग्यत्वं विवक्षितमितिवाच्यं ॥ व्याप्तिवैशिष्ट्यज्ञानजनकसा-
मान्यप्रत्यासत्तावतिव्याप्तेः ॥ नच जन्यलौकिकप्रत्यासत्तिं विना-
ऽपि तथात्वं तदर्थइति वाच्यं ॥ योगजधर्मेऽतिव्याप्तेः ॥ नच सा-
मान्ययोगजधर्मज्ञानलक्षणषोढाप्रत्यासत्त्यभावेऽपि तथात्वं तदर्थ-
इतिवाच्यम् ॥ अप्रसिद्धेः ॥ नह्युक्ततदभावे तथात्वं क्वचित्सिद्धं ॥
विवादास्पदीभूतभावित्वादेस्तु पूर्वोक्तयुक्त्या निराश्रयत्वप्रसंगस्य
दुर्निवारत्वेन तदाऽपि धर्मसिद्धावनुमानादिना तज्ज्ञाने तत्समवे-
तोक्तप्रतियोगित्वमपि विषयीभवतीति नोक्तप्रत्यासत्त्यभावइति
सर्वमनवद्यं ॥ १० ॥ ॥ अथ नन्वाविर्भावतिरोभावावित्यादिः
सर्वमनवद्यमित्यन्तोदशमः खण्डः खण्ड्यते ॥ ॥ तत्र तावदनुभ-
वपदं साक्षात्कारमात्रवाचकं ॥ ज्ञानान्तरादुत्तरमनुभवामीत्यनुव्य-
वसायाऽनुदयात् ॥ योग्यतापदं तु तदुक्तार्थनिष्कर्षार्थमनुवादमा-
त्रं ॥ तथाच साक्षात्कारविषयत्वमाविर्भावस्तदभावास्तिरोभावइति
तट्टीकासंक्षेपः ॥ तौचेद्वस्तुसत्त्वावच्छिन्नौ तर्हि कुतोनातीतादेश्चा-
क्षुषत्वं युगपत्सकलोपलम्भशक्त्यानन्त्ययोरन्यतरच्च ॥ वस्तुनोघ-
टादेः सत्त्वस्य सर्वदाऽङ्गीकारात् कुतोवा शून्यवादाऽनिर्वचनीयता-
वादीन कुतस्तरां साधने ऽप्रवृत्तिर्नेत्याद्यूह्यम् ॥ योधर्मः सधर्मि-
स्थइति व्याप्तिस्तु धर्मलक्षणसम्बन्धाश्रयाणामनिरुक्त्या शक्य-
ग्रहा ॥ धर्म्यसिद्धौ धर्मत्वासिद्ध्या हेतोः स्वरूपासिद्धिश्च ॥ धर्म-
पदार्थस्य वक्तुमशक्यत्वादिति न तद्बलाद्भावित्वाद्याश्रयतयाघ-

टादिनित्यतासिद्धिः॥ यत्तु तट्टीकाकृता कपाले घटस्य भावित्वं नास्ति॥ अप्रतीतेः॥ नापि तन्नित्यं॥ घटाद्यभावप्रसंगेन शून्यवादस्य प्रत्यक्षविरोधस्य चापत्तेः॥ तस्माद्भावित्वमनित्यं जन्यं च तेन भावित्वं पूर्वकाले न तिष्ठतीत्यर्थात्तदा घटसत्तासिद्धेत्युक्तं॥ तत्र वाच्यं घटादेरपि भावित्वात्प्राक्सत्त्वे तदाऽपि प्रत्यक्षं स्यादिति॥ तदसत्त्वे भावित्वस्य चाऽसत्त्वे शून्यवादोऽभ्युपगम्यतां॥ लाघवात्॥ श्रुत्यनुसाराद्वाऽनिर्वचनीयवादः॥ किञ्च भावित्वाऽभावमात्रेण कथं घटादेः सत्त्वं॥ सिकतासु तैलस्य भावित्वाऽभावेऽपि सत्त्वाऽभावात्॥ किञ्च भावित्वस्य जन्माङ्गीकारेण यदा तज्जन्म तदा घटाऽभावात्कथं सत्त्वमुच्यते॥ किञ्च सर्वस्य ब्रह्मात्मकत्वेनाऽऽविर्भावादेः सर्वान्तर्गतत्वेन ब्रह्माऽऽत्मकतया नित्यत्वं वदता भावित्वं किं सर्वानन्तर्गतं बुध्यते येनैवं प्रलप्यते॥ एवं भूतत्वेऽपि विचार्यम्॥ किञ्च भेदभूतत्वभावित्वानामनित्यत्ववादिनस्ते तेषां भूतत्वभावित्वे क्वेति स्वमादिपदार्थभूतत्वादि क्वेतिच वद॥ तस्मादनिर्वाच्यमेवेदं सर्वं ब्रह्मात्मकं च॥ यद्भूतंयच्चभव्यमितिश्रुतेः॥ एवं त्वन्मते सर्वस्य ब्रह्मरूपतया ब्रह्मणः सर्वाधारतया सर्वान्तर्गतकालोपाधौ सर्ववैशिष्ट्यधीर्दुर्वारा॥ एवमाकाशादावपि सादुर्वारा॥ नच कालोपाधिरित्यादिनु नैयायिकोवदेन्नानिर्वचनीयतावादीति जितमनिर्वचनीयतावादिना॥ नैयायिकं प्रति यत्त्वयोक्तं तन्न दूष्यते ग्रन्थविस्तरभयादित्यलम्॥ इतिदशमखण्डखण्डनम्॥ १०॥ ॥ ननु ममतु यथाकथंचिद्गतिः काचन भवित्री तवतु नकाऽपि॥ तथाहि॥ त्वन्मते घटादेः सदा सत्त्वेन भावित्वं न वक्तुं शक्यं॥ श्रुतिस्मृतिलौकिकव्यवहा-

रसिद्धत्वेन नेष्टापत्तिः कर्त्तुं शक्या ॥ नच लौकिकप्रत्यक्षविषय-त्वगतं भावित्वं घटादावुपचर्यतइति वाच्यं ॥ तस्याऽपि घटसमा-नयोगक्षेमत्वात् ॥ नहि प्रपञ्चातिरिक्तं तत्॥स्वोक्तदूषणभियाऽपि नैवं वक्तुं शक्यं ॥ तथासति घटस्याऽपराधः कोवेति नविद्मः ॥ तथाच जीर्णपर्णाऽऽकीर्णविविधमतभवनमये पुरे स्वयमपि वसन् दूषणदहनमुद्भावयन्निजभवनदाहं किं नानुसन्धत्सइतिचेत्॥वत्स नवेत्सि किं युक्तिकनकपंकसंघट्टितविविधनिगममहामणिविरचि-तब्रह्मवादभवनंमम ॥तथाहि॥ सहैतावानास ऐतदात्म्यमिदंसर्वं त त्सत्यं पुरुषएवेदꣳसर्वंयद्भूतंयच्चभाव्यमित्यादिश्रुतिभ्यः प्रपञ्चस्य ब्रह्मात्मत्वमवगम्यते ॥ अत्र सर्वपदेनाऽसंकुचितवृत्तिना भूतभव्य-योरपि प्राप्तावपि तदुक्तिर्या सा पुरुषस्य नित्यत्वेन तदात्मकस्य वर्त्तमानदशैव सम्भवतीति भावित्वभूतत्वव्यवहारोऽप्रामाणिकइ-ति शङ्कानिरासायेति ज्ञायते ॥ तथाच धर्माणामपि ब्रह्मरूपत्वात् घटादिषु तदात्मकतत्सत्त्वं नविरुद्धं ॥ स्वतःसिद्धप्रामाण्यश्रुतिवा-क्यबलात् ॥ नन्वेवं दर्शनसमयेऽपि तद्व्यवहारापत्तिर्वैपरीत्यापत्ति-श्च विरोधोच्छेदश्चेतिचेत् ॥ यथा पृथिव्यात्मकएव तस्मिन् गंधा-त्मकतत्सत्ता नाऽपरस्मिंस्तथा यदा यस्मिन्यथा व्यवहाराभावनि-यमस्तदा तस्मिन्नेव तथाविधविरोधात्मकतत्सत्त्वमिति तथेति नो-क्तदूषणगन्धोऽपीति बुध्यस्व ॥ यत्रोक्तनियमाभावस्तत्र तु न त-था ॥ तथाचोक्तमाश्रमवासिके पर्वणि गांधारीं प्रति बादरायणे-न ॥ देवाश्चदानवाश्चैवतथाब्रह्मर्षयोमलाः तएवनिधनंप्राप्ताःकुरु-क्षेत्रेरणाजिरइत्युपक्रम्य धृतराष्ट्रादिभीष्मांतानां स्वरूपमुक्त्वा गां-धार्यादुःखनिवारणायाह ॥ सर्वेभवन्तोगच्छन्तुनदींभागीरथींप्रति

ततोद्रक्ष्यथसर्वांस्तान्येहतास्मिन्रणाजिरेइति॥ ततोधृतराष्ट्रपाण्ड-
वादयः सस्त्रीकास्तत्र गत्वा स्नात्वा निशायां जातायां व्याससमीपं गताः॥ ततोव्यासोमहातेजाःपुण्यंभागीरथीजलं अवगाह्या-
जुहावाथसर्वान्लोकान्महामुनिः पांडवानांचयेयोधाःकौरवा-
णांचसर्वशः राजानश्चमहाभागानानादेशनिवासिनः ततःसुतुमु-
लःशब्दोजलांतर्जनमेजय प्रादुरासीद्यथापूर्वंकुरुपांडवसेनयोः त-
तस्तेपार्थिवाःसर्वेभीष्मद्रोणपुरोगमाः ससैन्याःसलिलात्तस्मात्समु-
त्तस्थुःसहस्रशः इत्यादिना सर्वान्नामपूर्वकं निरूप्याह॥ एकांरा-
त्रिंविहृत्यैवतेवीरास्ताश्चयोषितः आमंत्र्यान्योन्यमाश्लिष्यततो-
जग्मुर्यथागतमित्यादि॥ एतच्छ्रुत्वा जनमेजयः पप्रच्छ कथंचत्य-
क्तदेहानांपुनस्तद्रूपदर्शनमिति तदा वैशंपायनआह॥ अविप्र-
णाशःसर्वेषांकर्मणामितिनिश्चयः धर्मजानिशरीराणितथैवाकृत-
योनृप महाभूतानिनित्यानिभूताधिपतिसंश्रयादिति॥ एतदग्रे
अविनाशीतथानित्यःक्षेत्रज्ञइतिनिश्चयः भूतानामात्मभावोयो-
ध्रुवोसौसंप्रजानतामित्याद्यनेकमुक्त्वाह अदर्शनादापतितःपुनश्चा-
दर्शनंगतः नाहंतंवेद्मिनासौमांनचमेऽस्तिविरागतेति॥ नचेदं मा-
यया प्रदर्शितं व्यासेनेति वाच्यं॥ तथावचनाभावात्॥ प्रसादा-
त्तस्यवैमुनेरितिवाक्याच्च॥ पतिव्रतानां तासां स्वस्वभर्त्तृभिः सह
विहारकथनाच्च॥ गंगास्नानादिसाधनोपदेशानुपपत्तेश्च॥ अदर्श-
नादापतितइत्यत्र ल्यब्लोपे पंचमीति॥पुनःशब्दाच्च दर्शनात्पूर्वं व-
स्तुसत्ता प्राप्यते॥ एवंसति यद्यद्देशकालावच्छेदेन यथा प्रती-
तिर्भगवतेच्छाविषयः कृताऽस्ति तत्तद्देशकालावच्छेदेन तथा प्र-
तीतिर्भवतीति सिद्धं॥ इदंच यथा तथा परात्तुतच्छ्रुतेरित्यधिकर-

णेनिरूपयिष्यामः ॥ ११ ॥ ॥ अथ ननुममयथाइत्यादिर्निरू- पयिष्यामइत्यन्तएकादशः खण्डः खण्ड्यते ॥ ॥ तत्र प्रमाणा- न्तरबाधेऽपि घटादिषु भूतादिव्यवहारः स्वतःसिद्धप्रामाण्यश्रुतिब- लाच्चेदङ्गीक्रियते तर्हि युगपद्भूतभाविव्यवहारावापद्येताम्॥ विनि- गमकान्तराभावात्॥ भवद्यवहारश्च लुप्येत ॥ तादृक्छ्रुत्यभावा- दीदृक्छ्रुतिविरोधाच्च ॥ किञ्चाऽनया श्रुत्या घाटादौ भूतादितादा- त्म्यं न विधीयते किन्तु ब्रह्मण्येव ॥ तथाच स्वमादिषुभूतत्वादेरु- भयसिद्धत्वात्तत्तादात्म्यपरेयंश्रुतिरस्तु॥ घटादिषु तदाश्रयत्वकल्प- नेमानाभावात्॥यदिच भूताद्यभिन्नब्रह्माऽभिन्नतया घटादौ भूता- दिव्यवहारस्तदभिन्नाभिन्नइतिन्यायात्तर्हि तेनैव न्यायेन तस्मिन्प- टादिव्यवहारोप्यस्तु॥ पुरुषएवेदंसर्वं सर्वंखल्विदंब्रह्मेत्यादिश्रुतेः प- टादेर्ब्रह्मण्यभेदबोधिकायाः सत्त्वात् ॥ किञ्च यदा यस्मिन्यथेत्या- दिपङ्क्तौ सप्तम्यन्तयत्तच्छब्दाभ्यां घटादेर्घटत्वादिना वर्तमानघट- त्वादिना तत्तद्यक्तित्वादिना वा ग्रहे घटादेस्तत्तद्रूपाणां च सर्वेषु समयेषु सत्त्वाद्यवहाराणां च नित्यत्वात्कालिकनियमाभावोक्ति- रयुक्ता ॥ किञ्च यदा भूतत्वादिविरोधात्मकतत्सत्त्वं नाङ्गीकृतं तदा स्वमादिसत्त्ववद् घटादिसत्वंनिर्म्मानम् ॥ पृथिव्यादिषु तु पृथिवीत्वादिनैव गन्धादि स्वीक्रियते द्रव्यस्याऽऽद्यक्षणे निर्गु- णत्वे मानाभावात् ॥ किञ्चाऽस्तु पृथिव्यादौमायया जागरे गन्धः स्वमे तथा दृष्टत्वात् ॥ नच मायिके माययाऽस्तुगन्धो- जागरे तत्त्वाऽभावात्कथं तथा गन्धः स्यादिति वाच्यम्॥ मायि- कत्वस्य जागरेऽप्युपपादितत्वात् ॥ तस्माद्यद्भूतंयच्चभव्यामित्यत्र

पुरुषएवेदंसर्वमिति इदंशब्दसमानाधिकरणसर्वशब्दार्थएव यच्छ-ब्दसमानाधिकरणाभ्यां भूतशब्दभव्यशब्दाभ्यां निर्दिश्यते ॥ सर्व-शब्दस्याऽसंकुचितवृत्तिता तत्रैव भवति यत्र समानाधिकरणेदमा-दिशब्दनिर्देश्योयदादिप्रतिपाद्योन भवति ॥ अतएव तवैवेदं सर्वं यन्मम गृहे यच्च मद्भ्रातुर्गृहेइत्यादौसंकुचितवृत्तिता ॥ सर्वनाम्नां बुद्धिविषयधर्मोपलक्षितबोधकताया एव सत्वात् ईदृशविषये संकुचितार्थस्यैव बुद्धिविषयत्वाच्च ॥ श्रुतौतु चकारेण भवतोग्रहण मित्यसंकुचितार्थवृत्तितैव सर्वशब्दस्य फलति ॥ यत्तु केचिद्विल-ग्नादशनान्तरेषुसंदृश्यन्तेचूर्णितैरुत्तमाङ्गैरित्यर्जुनज्ञानाऽनुवादात्तस्य ध्वस्तविषयकंज्ञानमिति तट्टीकाकारस्तन्न ॥ चूर्णितशब्दस्य ध्व-स्तार्थकत्वाभावात् ॥ उत्तमाङ्गानां चूर्णितत्वेन ज्ञाने स्वप्नादिष्विव मायया भाविनोऽपि चूर्णितत्वस्य वर्त्तमानतया च ज्ञाने बाध-काभावात् तथोक्तमित्यत्र वचेः किं कर्मेति विचार्यं ॥ देवाश्चेत्या-दिवाक्यानामुपक्रमादिकर्मत्वात् देवाश्चेत्यस्यैव तत्कर्मतया तदे-वोक्तमुपक्रम्येत्युक्तिस्तु न श्लिष्टा उक्तपदवैयर्थ्याऽऽपादिकाच ॥ दुःखवारणायाहेति वाक्ये आहातिरिक्तमसङ्गतम् ॥ उक्तिमात्र-स्यैव तत्त्वेऽपि प्रथमप्रतिज्ञायाएव तत्त्वौचित्यात् ॥ आश्रमवासि-केतिहासाद्युद्धमृतानां तेषां तत्पत्न्यादीनां चाऽवशिष्टकर्मकत्वेन व्यासप्रसादगङ्गास्नानाद्युद्बुद्धैस्तादृशकर्मभिः पूर्वोदाहृतकाशीमृत-सतीपतिन्यायेन मायिकशरीरोत्पत्तिः स्वप्नवत् ॥अतएवाऽविप्रणा-शइतिश्लोकः अदर्शनादापतितइतिच सङ्गतम् ॥ तत्र तेषां सर्व-कर्मनाशोनाऽभूत्किन्तु किञ्चित्कर्मैव नष्टमित्यवशिष्टकर्मजन्यं शरी-रादिकमभूदिति अविप्रणाशइत्यस्य तात्पर्यार्थः ॥ ननु सर्वाणि

कर्माणि नित्यानीति टीकोक्तेऽर्थेतात्पर्यं ॥ प्रमाणाभावात् ॥ सर्व-
कर्मसत्त्वेऽतिप्रसङ्गाच्च ॥ नित्यानीत्यस्याऽविच्छिन्नप्रवाहकाणी-
त्यर्थः ॥ नित्यंस्यात्संततेपिच शाश्वतेत्रिष्वितिमेदिनीकोशात् ॥
भूतानां जीवानाम् ॥ भूतंक्ष्मादौपिशाचादौजन्तौक्कीबंत्रिषूचिते
इति मेदिनीकोशात् ॥ भूतानां शरीराणामात्मभावआत्मत्वेनज्ञा-
नमसौ ज्ञानिनां ध्रुवः वामदेवस्येव सर्वात्मभावत्वात्सएवाऽर्थादज्ञा-
निनामध्रुवोऽभिमानरूपत्वादिति तट्टीकोक्तोऽर्थस्तु हेयः ॥ भूतश-
ब्दे आत्मभावशब्देच लक्षणायां गौरवात् ॥ ध्रुवशब्दस्याऽपि क-
स्मिंश्चिदर्थे ऐच्छिकवृत्तिकल्पनापत्तेश्च ॥ अदर्शनाद् अज्ञानात् ॥
दृशेर्ज्ञानसामान्यार्थतायादृष्टत्वात् ॥ अतएवाऽदर्शनंलोपः पश्या-
र्थैश्चानालोचने इति पाणिनिसूत्रे संगते ॥ एतेन तथा वचनाऽ-
भावान्न माययादर्शनमिति प्रत्युक्तं ॥ मायायाएव तादृशशक्ति-
कत्वाच्च॥ल्यब्लोपे पञ्चमीतु अध्याहारे गौरवान्नोचिता ॥ अध्या-
हारः कस्य ल्यबन्तस्येत्यत्र विनिगमकाऽभावाच्च ॥ ग्रामादागतः
पुनर्ग्रामंगतइतिवदुपपत्तिरत्र ज्ञेया ॥ एतेन नाऽस्तिदर्शनमस्येत्य-
दर्शनं मूलकारणमक्षरं तम्प्राप्येह संघात आगतः यथा सुदीप्ता-
त्पावकादित्यादि टीकोक्तं प्रत्युक्तम् ॥ नाहं तं वेद्मि इत्यादितु ते-
षामदर्शनादुत्तरं स्थितानामनुभवाभिलापयोरनुवादः ॥ यत्तु तं
संघातं शरीररूपत्वेन न वेद्मि ब्रह्मवित्त्वादसौ संघातोमामात्मानं
नवेत्ति चिदंशस्य तिरोहितत्वाच्च पुनर्मे विरागताऽपि नाऽस्ति दो-
षज्ञाने हि दुष्टासु पुरुषोविरज्यते ब्रह्मैव सर्वमिति ज्ञानान्नास्तीत्य-
र्थ इति ॥ तन्न ॥ वैशंपायनादेस्तज्ज्ञानादिप्रसक्तेरभावेनाऽप्रसक्त-
प्रतिषेधस्य तादृशक्लिष्टार्थकत्वस्य चाऽयुक्तत्वाच्चिदंशातिरोभाव-

विषये तूक्तम्प्राक् ॥ पतिव्रतानां तु सति प्रत्यभिज्ञाने काशीमृत-
सतीभार्यावर्त्तविहारे न दोषः ॥ व्यावहारिकात्मैक्यसद्भावाच्च ॥
नोचेत्पत्न्या कौमारे ऊढानां वयोन्तरे तेन विहारे पातिव्रत्यं हीये-
त ॥ शरीरस्य परिमाणादिभेदेन भेदात् ॥ अतएव कायव्यूहं धृत-
वता योगिना स्वमदृष्टेन च पत्न्या विहारे नदोषइत्यलम् ॥ इच्छा-
मात्रस्य नियामकत्वं त्वसकृत्प्राग्दूषितम् ॥ परात्तुतच्छ्रुतेरित्यत्र व-
क्ष्यमाणं तु तत्रैव निराकरिष्यामः ॥ इत्येकादशखण्डखण्डनम् ॥
॥११॥ ॥एतेन घटोपलम्भाऽनुपलम्भयोः कादाचित्कत्वमनुपपन्नं
तादृक्तद्धेतोर्वक्तुमशक्यत्वादिति निरस्तं॥लौकिकप्रत्यक्षाऽविषय-
त्वेऽपि वस्तुसत्तायायोगिप्रत्यक्षविषयत्वं स्याद्भूतभाविनां वस्तूना-
मित्यपि ॥ यतस्तथा तदिच्छा न तत्र चकास्ति॥फलबलकल्प्या-
हिसा ॥ अस्तु वा तद्विषयत्वं ॥ बाधकाभावात् ॥ उक्तप्रमाणैर्व-
स्तुसत्त्वे सिद्धे तस्य न्यायप्राप्तत्वाच्च ॥ अनागतमतीतंचवर्त्तमान-
मतीन्द्रियं विप्रकृष्टंव्यवहितंसम्यक्पश्यन्तियोगिनइतिवाक्याच्च ॥
एवंसत्यस्मिन्कालेऽस्मिन्देशे इदं कार्यमेवं भवत्वितीच्छाविषयत्व-
माविर्भावः तदातत्रतथातन्माभवत्वितीच्छाविषयत्वं तिरोभाव इ-
त्यपि सुवचं॥ एतयोरेवोक्तयोग्यतारूपत्वात्॥नच तत्तद्देशकालयो
रपि नित्यत्वाद्युगपत्सकलोपलम्भप्रसङ्गोऽनुपलम्भप्रसङ्गोवा स्या-
दिति वाच्यं॥अस्मिन् सृष्टिकालात्मके स्थूले कालोपाधौ तदवय-
वात्मकतत्तत्कालोपाधौ क्रमिके तस्यतस्य पुरुषस्य तत्तदुपलम्भो-
भवत्वितीच्छाविषयत्वस्य तत्त्वात् ॥ अत्रैतदिच्छाप्रकारत्वापन्ना-
नां तत्तद्देशकालादीनामाविर्भावात्मकैतदिच्छाविषयत्वादेतदेवा-
ऽऽविर्भावरूपं तेषामपीति बुध्यस्व ॥ भगवदाविर्भावस्य भगव-

च्छक्तित्वमिति नानुपपत्तिः काचित् ॥ एवंसति यत्कालावच्छेदे-
न सर्वेषां मिथोनाऽनुभवविषयत्वं भगवदभिमतं सप्रलयकालइ-
ति निगद्यते ॥ यदवच्छेदेन मिथोनुभवविषयत्वं तथा ससृष्टिका-
लइत्युच्यते ॥ सर्वत्र विशिष्टेच्छैव नियामिकेति सर्वमनवद्यं ॥
आविर्भूयाऽरविन्दाक्षभक्तिमाविष्करोति यः॥ सोऽव्यान्नः पितृप-
द्रेणुस्तिरोधानं च दुर्लदां ॥ १२ ॥ ॥ अथैतेन घटोपलम्भानु-
पलम्भयोरित्यादिस्तिरोधानंचदुर्लदामित्यन्तोद्वादशः खण्डः ख-
ण्ड्यते ॥ ॥ तत्र लोकविरुद्धविविधेच्छानां फलबलेन कल्पना-
तोमायिकत्वकल्पना लघ्व्युचिता च बाधकाभावान्न्यायप्राप्तत्वा-
च्च॥ योगिप्रत्यक्षविषयत्वे तु उक्तयुक्त्या लौकिकप्रत्यक्षविषयत्व-
मपि स्यात् ॥ पश्यन्तीति दृशिरार्षं ज्ञानमाह तच्च लौकिकप्रमा-
तिरिक्तमिति योगशास्त्रज्ञेभ्यः शिक्षय ॥ तदेव सम्यग्दर्शनम् तच्च
योगप्रसादजम् ॥ अन्यथाऽतीन्द्रियादिज्ञानस्य दुष्करत्वात् ॥ कि-
ञ्चाऽऽविर्भावलक्षणे प्रकारार्थकैवंपदं व्यर्थमिदं कार्यमितीच्छायां
सप्रकारस्यैव गृहीतत्वात् ॥ एवं तत्रत्यभवतुपदार्थघटकभावस्यो-
त्पत्तिरूपत्वेऽपसिद्धान्तव्याघातौ ॥ आविर्भावरूपत्वे आत्माश्रयः॥
किञ्चेदन्त्वंदुर्निरूपम् ॥ किञ्च तादृशेच्छाविषयत्वस्याऽऽविर्भाव-
त्वे तादृशेच्छाक्षणआविर्भावः स्यात् ॥ इच्छाविषयत्वस्य सत्त्वा-
त्॥ एवञ्च कार्यात्पूर्वत्वाभावेनेच्छायाहेतुत्वमपि न स्यात्॥एवं त-
त्क्षणे तिरोभावोऽपि स्यात् ॥ एवं विषयत्वमात्रस्य तिरोभावत्वे
कार्येण सह देशोऽपि तिरोभवेत् ॥ अत्रेदंमाभवत्वितीच्छाविषय-
त्वस्य तत्र सत्त्वात्॥एतयोःस्नेहोनश्यत्वितीच्छायां पुरुषद्वयस्याऽपि
नाशः स्यात्॥किञ्च कालादेर्मिविशेषस्य ग्रहणे युगपत्सर्वोपलम्भ-

इदंशब्दानर्थकत्वंचेति॥ अस्मिन्सृष्टिकालात्मके इत्यादित्वत्प्रलपि-
तरीत्या सविशेषग्रहणे विशेषायदि नित्यास्तर्हि सएवदोषः॥यद्यनि-
त्यास्तर्ह्यपसिद्धान्तस्तद्विषयकेच्छान्तरापेक्षायामनवस्थाच ॥ एव-
मिच्छायास्तद्विषयत्वाभावात्तदाविर्भावार्थमिच्छान्तरापेक्षायाम-
नवस्था ॥ एवं प्रलयलक्षणे सर्वशब्दोपादानादसम्भवो योगिनां
त्वन्मते नित्यमुक्तानां च मिथोऽनुभवविषयत्वात् ॥ तदा तेऽपि
तिरोभवन्त्यतिरोभूतावा न किञ्चिज्जानन्तीति कल्पनेतु गौरवम्॥
किञ्च तदानीं ज्ञानाऽभावेऽप्यधुनाऽनागतमतीतंचेत्युक्तरीत्या प्रल-
यकालिकपदार्थविषयकानुभवसत्त्वात्तस्य तद्विषयत्वस्यच नि-
त्यत्वात्प्रलयकालेऽपि सत्त्वेनासम्भवः॥ सर्वशब्दस्याऽनुपादाने-
त्वतिव्याप्तिः॥ एतेन सृष्टिलक्षणमपिप्रत्युक्तम् ॥ अतिव्याप्तेः ॥
तस्मादिच्छायाअनियामकत्वान्मायैव नियामिका॥ भगवदावि-
र्भावेऽपि सैव॥ आविर्भावतिरोभावौशक्तीविमुरवैरिणइत्यत्राऽनु-
पस्थितपदार्थान्तरस्य सम्बन्धापेक्षयोपस्थितमुरवैरिपदार्थस्यैव सं-
बन्धउचितइति मुरवैरिणआविर्भावतिरोभावौ तच्छक्तिरूपौ इ-
त्यर्थः॥ तच्छक्तिश्च मायैव॥मायिनंतुमहेश्वरमितिश्रुतेः॥ तस्या-
अनेकात्मकत्वं तु इन्द्रोमायाभिरिति श्रुतिसिद्धम् ॥ तथाचाऽऽवि-
र्भावादेर्भगवद्धर्मत्वस्वीकारे न किञ्चिन्मानं नेहनानास्तीत्यादिश्रु-
तिविरोधश्च॥ जगतोब्रह्माऽभेदेन जगद्धर्माणां ब्रह्मधर्मत्वकथने-
त्वतिप्रसङ्गः॥ एतेन बहुस्यांप्रजायेयेतीच्छाद्वयम् ॥ प्रथमा प्रका-
राऽविषयादेशकालपुरुषादिविषयाच ॥ द्वितीयातु प्रकारविषया
प्रशब्दोपादानात् इति टीकोक्तं प्रत्युक्तम्॥ कालादीच्छायाः का-
लिकादिविषयत्वेऽनवस्थाप्रसङ्गः कालाद्यानन्त्यंच ॥ तस्यैव का-

लस्य तदाधारत्वेत्वात्माश्रयः तदविषयकत्वेतुलक्षणाव्याप्तिः ॥ तस्माद्बहुभावप्रकारएव प्रजायेयेत्यनेनोक्तइतीयमेकैवेच्छा ॥ इच्छायाएकत्वं टीकोक्तन्तु तृतीयश्लोकव्याख्यायां प्रत्युक्तम् ॥ इति द्वादशखण्डखण्डनम् ॥ १२ ॥ ॥ ननु तत्तद्देशकालयोरपि नित्यत्वात्सकलोपलम्भप्रसङ्गोनुपलम्भप्रसङ्गश्च स्यादितिचेत् ॥ ननु तत्तद्देशकालावच्छिन्नतत्तत्पुरुषतत्तद्व्यवहाराव्यवहारावपि स्तएवेति किमनुपपन्नं तर्हि तावधुनाऽप्युलभ्येतामितिचेत् ॥ मैवं॥अनुपलम्भावच्छेदककालावच्छिन्नत्वात्पुंसां तदनुपलम्भात्॥ तत्तत्कालस्यभिन्नत्वात्तत्तदवच्छिन्नपुरुषस्याऽपि भिन्नत्वाद्युगपत्सत्वाच्च तदुपलम्भाऽनुपलम्भयोर्युगपत्सत्त्वं न विरुद्धं॥ नच योऽहं पूर्वं घटमन्वभूवं सएवाऽहमधुनानाऽनुभवामीति प्रत्यभिज्ञाऽनुपपत्तिः ॥ सर्वस्य ब्रह्मात्मकत्वेन तस्य चैकत्वेन तदुपपत्तेः ॥ नचैवमतिप्रसङ्गः॥उपलम्भाऽनुपलम्भयोरपि ब्रह्मात्मकत्वात्स्वेच्छया यत्र यदुपलम्भरूपेणाऽऽविर्भवति तत्र तथा यत्रचयदनुपलम्भरूपेणाऽऽविर्भवति तत्र तथेतिनियमात् ॥ यथा पृथिव्यामेव गन्धरूपेणाऽऽविर्भावोन जलादिषु ॥ अतएवाचार्यैः श्रीभागवततत्वदीपे अथवासर्वरूपत्वान्नामलीलाविभेदतः विरोधांशपरित्यागात्प्रमाणंसर्वमेवहीतिनिरूपितं ॥ ब्रह्मणः सर्वरूपत्वेनाऽनुष्णत्वरूपत्वेनाऽपि वह्निरनुष्णइत्यादिवाक्यान्यपि प्रमाणानि कुतः यतः सर्वत्राऽखण्डब्रह्मज्ञानेन विरोधांशास्फूर्त्त्या विरोधांशस्त्यक्तएवेति वाक्यार्थः॥ अतएव पूर्वमेव वाचारम्भणंविकारइतिनिरूपितं॥ ततः पूर्वोत्तरयोर्जडजीवयोः सदात्मकत्वेमध्येहेतुमाह ॥ सआत्मेति ॥ एवं जडस्य तदात्मकत्वमुक्त्वा जीवस्याप्याह ॥ तत्त्वम-

सीति ॥ अस्योपदेशान्मुहुरुक्तवान् ॥ आवृत्तिरसकृदुपदेशादिति ब्रह्मसूत्रात् ॥ अतः संपूर्णमहावाक्यमुपदेशः ॥ तत्र यथैतदात्म्य-मित्यत्र न भागत्यागलक्षणा सदंशे तथा तत्त्वमसीत्यत्रचिदंशेऽपि न सेत्यवगन्तव्यं ॥ तथाच सर्वस्यैव ब्रह्मवाक्यत्वात्तदेकदेशएव तत्त्वमसीतिवाक्यं जीवब्रह्मणोरभेदं बोधयतीति न वक्तुं शक्यं ॥ वाक्यभेदप्रसंगात् उपक्रमविरोधाच्च ॥ अपरंच त्वन्मतेजीवस्या-ऽऽभासत्वेनाऽलीकत्वात् सआत्मेत्यनेन तत्पदार्थं निरूप्य न त्व-मसीत्येव वदेन्नतु तत्त्वमसीति ॥ सत्तावाचकधातुमध्यमपुरुषप्र-योगानुपपत्तिश्च ॥ १३ ॥ ॥ अथ ननुतत्तद्देशकालयोरपीत्या-दिः प्रयोगानुपपत्तिरित्त्यन्तस्त्रयोदशः खण्डयः खण्ड्यते॥ ॥तत्र तत्तत्कालभेदम्पुरुषआरोप्योपलम्भाद्यभावसमर्पणतोवरं घटादे-रनित्यत्वकल्पनमेव ॥ कार्यसामग्र्यनुपयुक्तेनोपाधिना कार्यवैल-क्षण्ये कुण्डलिनोदेवदत्तस्योपलम्भे दण्डिनस्तस्यानुपलम्भप्रसङ्गा-त् उपलम्भादेर्नित्यत्वेन दोषतादवस्थ्याच्च॥ किञ्च परस्परमीशेन च सर्वाऽभेदवादिनस्ते कथं कालभेदः कथंचोपलम्भानुपलम्भा-देर्युगपत्सत्त्वं प्रमाणविरुद्धं त्वमनुषे ॥ स्वगुरूक्त्या विरोधमात्रा-पलापे तु वैनाशिकाद्युक्तमपि किन्नाङ्गीकरोषि श्रुत्यादेः प्रा-माण्येऽप्यप्रामाण्यकथने तव भीतेरभावात् कथंच व्याससूत्रा-णि तत्तन्मतदूषणपराणि सङ्गतानि ॥ प्रमाणविरोधेऽपि सर्वेषां मतानां सुस्थत्वात् ॥ एतेन त्वद्गुर्वादिग्रन्थास्त्वत्कथाश्च व्याख्या-ताः ॥ वह्निरनुष्णइत्येतादृशवाक्यस्य सुस्थत्वे इतरत्र तदभावस्य वक्तुमशक्यत्वात् ॥ किञ्चेश्वरः सर्वमितिवा नाऽस्ति किञ्चिदिति-वा उक्त्वाविरमस्व ॥ प्रमाणविरोधस्याऽकिञ्चित्करत्वात् ॥ तथा-

पि परेण दूषणाऽभिधाने ईश्वरेच्छेत्युक्त्यैव सर्वत्र विरमस्व ॥ किञ्चेश्वरेच्छयाऽतिप्रसङ्गवारणे सर्वं सर्वस्य कारणमित्यङ्गीक्रियतां ॥ कुलालादितः पटादिरूपेणाऽऽविर्भावरूपातिप्रसङ्गस्य भगवदिच्छाभावेन वारयितुं शक्यत्वात् ॥ यत्तुईश्वरेच्छायाएव नित्यकार्यव्यवहारनियामकत्वं तट्टीकाकारेणोक्तं ॥ तन्न ॥ तथापिं सर्वस्य सर्वात्मकत्वेनातिव्याप्तेरनिवृत्तेः ॥ इदं जडत्वेन व्यवहार्यमिदं नेतीच्छयैवाऽतिप्रसङ्गवारणात्तत्तल्लक्षणप्रणयनवैयर्थ्यापत्तेश्च ॥ अथापि ग्रन्थविस्तरादिव्यसनाक्रान्ततया तत्प्रणयनं तर्ह्यतिव्याप्तिरुक्तैव ॥ सर्वेषां धर्माणां सर्वाऽभेदस्य च ब्रह्मणि सत्त्वात् ॥ तस्या अदोषत्वे तु परेणाऽपि यत्किञ्चिद्वस्तुत्वादिलक्षणमुक्त्वा जीयेत ॥ सर्वेषां नाम्नां प्रमाणानां चातिप्रसङ्गे स्वगुरुवाक्येनेष्टापत्तिं स्वीकुर्वंस्तट्टीकाकारोप्येवम्परास्तः ॥ वाचारम्भणमिति श्रुत्यर्थः प्रागुक्तः ॥ ऐतदात्म्यमित्यस्य जडमात्रपरत्वं च दूषितम् ॥ ऐतदात्म्यमित्यत्रापि लक्षणाऽस्त्येव ॥ सविशेषनिर्विशेषयोर्विरोधेनैक्यासम्भवात् ॥ नहि वयं त्वद्गुरुवत्क्वापि विरोधोनेति ब्रुवन्तो न जिह्मीमोयजमानः प्रस्तरइत्यस्य श्रूयमाणेऽर्थे प्रामाण्यप्रसङ्गात् ॥ यजमानस्य वह्नौ प्रक्षेपप्रसङ्गाच्च ॥ ब्रह्महत्यादिकरणेऽस्मिन्नपीच्छया प्रवृत्तिरस्त्येवेत्युक्तौ तूत्तरं प्रागुक्तम् ॥ नचैतदात्म्यमित्यत्र तथा लक्षणायां सर्वपदैतदात्म्यपदयोरन्यतरवैयर्थ्यमेकलक्षणयैव निर्वाहादिति टीकोक्तदोषप्रसङ्ग इतिवाच्यं ॥ सत्सर्वयोः परिचयार्थमुपयोगात् ॥ नचैकस्मिन्महाप्रकरणे एकत्र वाक्ये लक्षणाऽभावे वाक्यान्तरेऽपिसानास्तीतिनियमः ॥ फलप्रमाणयो

रभावात् ॥ वायव्यमित्यत्र तदभावेन वायुर्वैइत्यादावपि तदभाव-
प्रसङ्गाच्च ॥ किञ्च त्रयोविंशखण्डे वक्ष्यमाणेन तत्त्वमसीत्यस्यौप-
चारिकाभेदबोधकत्वपरेण स्वग्रन्थेन विरोधः ॥ नह्यस्मिन्प्रकरणे
औपचारिकार्थानि वाक्यानि त्वदभिमतानि ॥ किञ्चाऽत्राऽस्माकं
नलक्षणा किन्तु विशेषणरूपस्य भागस्य त्यागेन लक्षणासादृश्ये-
न च भागत्यागलक्षणया व्यवहारइत्यन्यत्रविस्तरः ॥ तत्त्वमसी-
त्यस्य सर्वेण प्रकरणेन पदैकवाक्यताप्यमूला ऽसङ्गताच ॥ वा-
क्यैकवाक्यतातु सङ्गतैव ॥ एवञ्च तत्त्वमसीत्यस्य प्रकरणेन
वाक्यैकवाक्यत्वेऽपि पृथग्वाक्यार्थसत्त्वेन प्रकृतस्याऽभेदस्य बो-
धने न कोऽपि विरोधइति जडांशे विवर्त्तवादोयुक्तएव ॥ चिदंशे
तु न तदुपयोगइति जीवस्य नालीकत्वमित्युक्तं मायायामित्यस्य
श्लोकस्य व्याख्याने ॥ ततोनत्वमसीतिकथनोपालम्भोन युक्त-
स्तथाच हेयत्वावचनाच्चेत्यस्य नाऽसङ्गतिरिति तट्टीकोक्ततदस-
ङ्गतिदोषोऽकिञ्चित्करः ॥ तुष्यतुदुर्जनइतिन्यायेनाऽप्युच्यते ॥
कस्तस्यार्थः सत्ताऽभावस्य तिङर्थेऽन्वयबोधनं न सम्भवति ॥
तयोः सम्बन्धस्य वृत्त्यनियामकत्वात्तदनियामकस्य च प्र-
तियोगिताऽनवच्छेदकत्वात् ॥ तिङर्थस्याऽलीके त्वमर्थेऽयोगा-
च्च ॥ नापि तिङर्थाभावस्त्वमर्थे बोधयितुंशक्यः ॥ तुच्छत्वेना
ऽनुयोग्यप्रसिद्धेः ॥ नाऽपि त्वमर्थाभावोऽन्यत्र॥प्रतियोग्यप्रसिद्धेः॥
तस्मान्नत्वमसीत्यस्याऽर्थासंगतिः ॥ आभासस्याऽलीकत्वे माना-
भावाच्च ॥ मध्यमपुरुषानुपपत्तिकथनं तु युष्मद्युपपदेइतिपाणि-
नीयसूत्रार्थाज्ञानात् ॥ तेनहि युष्मत्पदसामानाधिकरण्ये मध्य-
मपुरुषोविधीयते नतु युष्मत्पदार्थस्यसत्यत्वे ॥ तन्मिथ्यात्वे त्वदा-

रोपिते तदीयसत्यत्वाऽप्रसिद्धेश्च ॥ त्वन्मते यथाऽनुपपत्तिस्तथाऽ-
ग्रे वक्ष्यते ॥ इतित्रयोदशखण्डखण्डनम् ॥ १३ ॥ ॥ किञ्च अ-
विद्यया कृत्वा ब्रह्मण्यारोपितं जगत्प्रतीयते रजतमिवशुक्तिकाया-
मिति हि तव मतं तदसंभवि॥आरोपे ह्यधिष्ठानज्ञानं कारणं॥अत्रच
परांचिखानीतिश्रुतेस्तस्याऽविषयत्वान्नारोपः॥नच ज्ञाननाश्यत्वो-
क्त्याऽस्य ज्ञानस्य चाऽज्ञानमात्रनिवर्त्तकत्त्वेनाऽस्याप्यज्ञानकार्य-
त्वमुच्यतइति वक्तुं युक्तं ॥ विष्णुस्मरणादिना तद्रूपाणां पापानां
नाशात्॥अस्तुवा ब्रह्मज्ञानस्याऽज्ञानमात्रनिवर्त्तकत्वं तच्च संसाररू-
पमेव नतु प्रपंचोभगवत्कार्यत्वात्॥तथाच स्वरूपाऽज्ञानदेहेन्द्रिया-
न्तःकरणप्राणाध्यासरूपपञ्चपर्वात्मकाऽविद्यानाशे तत्कार्यरूपाऽहं-
ताममतारूपसंसारनाशएव ज्ञानकार्यः नतु प्रपञ्चनाशोऽपि॥ब्रह्म-
विदःस्वपुत्रादिदर्शनाऽभावप्रसङ्गात् ॥ नचैवमित्येतत्सर्वं भागवतत-
त्त्वनिबन्धे प्रपञ्चितं पितृचरणैरिति नाऽत्रलिख्यते ॥ वस्तुतस्तु ब्र-
ह्मज्ञानस्य नाऽज्ञानमात्रनिवर्त्तकत्वं क्षीयंतेचास्यकर्माणीतिवच-
नात् पुण्यपापयोरपि निवृत्तेः ॥ एतयोरप्यज्ञानकार्यत्वं पुरस्तादेव
निरस्तं ॥ किंच अविद्यायाअसत्त्वेनाऽङ्गीकारात्तन्नाशोप्यशक्य-
निरूपणः ॥ इतोपि ब्रह्मणि तत्संबन्धोप्यशक्यवचनः ॥ संबन्धस्य
द्विनिष्ठत्वात्प्रकृतेचासंभवात् ॥ तथाच कस्य केन कस्य प्रतीतिः
स्यात् ॥ विभाजिकायाएवाऽभावेन विभागस्याऽप्यभावात्॥अत-
एवासन्नेव प्रतीयतइत्युच्यतइतिचेत्॥अहो मूढता यत्स्वमप्रतीततर-
णिकिरणतापतप्तस्य ततउत्थितस्य जागरितदशादृष्टमरीचिजलधि-
वीचिविभ्रमैस्तदुपशमाभिमानेन सुखिताभिमानोमिथ्यावादिनः॥
असतोपि प्रत्यायिकाह्यविद्या साचासतीति काप्रत्याययेदिति पू-

वोक्तं श्रुत्वाऽप्येवं वदन्मूर्खतां नातिवर्त्तसे ॥ एतेनैव कार्याऽनुरूपेणकारणेन भाव्यमिति कार्यस्य तुच्छत्वेन तत्कारणं तादृश्यविद्योच्यतइत्यपि निरस्तं॥कार्यस्य तु तुच्छत्वाऽतुच्छत्वे पश्चाद्विचारयिष्यामः ॥ संप्रति त्वद्रीत्यैव विचार्यते॥कल्पना हि लोकाऽनुसारिणी तथाच यत्र मायाविनोनटामणिमन्त्रादिनाऽऽम्रकदम्बतरुकदम्बं दर्शयन्ति तत्र दर्शिताऽऽम्रादिकमेवाऽसद्दृष्टमिति ज्ञायते तत्क्षणमेव तददर्शनान्नतु तन्मन्त्रादिसामर्थ्यमपि॥तथासतितद्दर्शनमपि न स्यात्॥सर्वोऽपि तथा प्रदर्शयेदविशेषात्॥तस्मात्त्वदभिमताऽविद्यया जगत्प्रतीतिर्जीवविभागोवा नयुक्तिसहइति न कर्त्तृत्वनिषेधोब्रह्मणि शक्यनिरूपणः ॥ १४ ॥ ॥ अथ किञ्चाविद्ययाकृत्वेत्यादिः शक्यनिरूपणइत्यन्तश्चतुर्दशः खण्डः खण्ड्यते ॥ ॥ तत्र श्रुतौ संसारिणां प्रत्यक्षेन शुद्धात्मनोज्ञानाभावएवोक्तः नतु सर्वथाऽऽत्मज्ञानाभावः ॥ तथात्वे खानिव्यतृणत्स्वयंभूस्तस्मान्नात्मानम्पश्यन्तीत्येववदेत् ॥ किंच मुद्गराभिघातादिजन्यघटनाशं त्यक्त्वा पापनाशे दोषोक्तिस्ते मुधा॥त्वन्मते पापस्याऽनित्यतायावक्तुमशक्यत्वाच्चेदमसङ्गतम्॥किञ्च प्रतिपदविधानेत्यनेन निषेधाद्विष्णुस्मरणेत्यत्र न समासोयुक्तः॥किञ्च विष्णोः स्मरणादिना पापनाशएव भवति नतु निवृत्तिः ॥ विद्वान्नामरूपाद्विमुक्तइतिश्रुतिविरोधात् ॥ अतएव ज्ञानेन प्रपञ्चनिवृत्तिः ॥ नामरूपत्वावच्छिन्ननिवृत्तेरेव श्रुतितोबोधात् ॥ ब्रह्मकार्यत्वस्याऽप्रतिबन्धकत्वात् ॥ देहाद्यविवेकस्य ब्रह्मकार्यत्वाभावे ब्रह्मणः सर्वकर्त्तृत्वहानिः ॥ तत्कार्यत्वेतु तत्रैव व्यभिचारात् ॥ ब्रह्मविद्विषये तूक्तम्प्राक् ॥ यत्तु टीकाकृता नैवात्मनोनदेहस्यसंसृतिःसुविविक्तयोः अविवेकस्त-

योर्योसाविहतस्यैवसंसृतिरिरिति भगवता देहात्मानौ पृथगुक्त्वा तद-
विवेकस्यैव पृथक्कथनादविवेकएव संसारो नतु प्रपञ्चोब्रह्मकृतइ-
त्युक्तम् ॥ तदयुक्तं॥संसारपदावाच्यत्वेऽपि निवृत्तेः स्थापितत्वात् ॥
किञ्च तत्राऽविवेकोयोऽसौससंसृतिरिरिति समानाधिकरणाऽभिला-
पे तथाऽर्थः स्या न्नच तत्रतादृशोऽभिलापोऽस्ति॥तस्मात्तत्र यस्ये-
त्यध्याहृत्य तयोर्योऽविवेकोऽसौयस्य तस्य संसृतिरिरितिवा अवि-
वेकशब्दे बहुव्रीह्याश्रयणेन तयोर्योऽविवेकोविवेकाभाववांस्तस्ये-
तिवाऽर्थः ॥ तथाचात्मनोऽसंगत्वाद्देहस्य जडत्वान्नाध्यासरूपा सं-
सृतिः किन्त्वविवेकतोऽनिर्वाच्यस्योति तात्पर्यम्॥एवञ्चैतच्छ्लोकार्थ-
विप्लवमूलकं प्रपञ्चमायिकत्वपराणां भागवतस्थानेकश्लोकानाम-
र्थविप्लावनं टीकाकारस्यानर्थायैवेति संक्षेपः ॥ सर्वस्याऽपि प्रप-
ञ्चस्याज्ञानकार्यत्वे कर्मणस्तथात्वमर्थसिद्धमिति क्षीयन्तेचाऽस्य-
कर्माणीतिश्रुतिरनुकूलैव ॥ परमार्थदृष्ट्याऽविद्यायानाशाऽभावाद-
यस्त्विष्टाएव ॥ अतएव ननिरोधोनचोत्पत्तिर्नबद्धोनचसाधकः
नमुमुक्षुर्नवैमुक्तिरित्येषापरमार्थता यत्रहिद्वैतमिवभवतितदितरइ-
तरंपश्यति यत्रत्वस्यसर्वमात्मैवाभूत्तत्केनकम्पश्येदित्याद्याः श्रुतयः
बद्धोमुक्तइतिव्याख्यागुणतोमेनवस्तुतइत्याद्याः स्मृतयश्च संगताः॥
किञ्च स्वप्नस्य यथा नाशो यथावा तद्द्रष्टरि तत्संबन्धो यथावा
तत्प्रतीतिस्तथाऽत्राप्यस्तु ॥ यद्यपि जागरदृष्टमरुमरीचिभिर्नस्वाप्न-
तापोपशमस्तथापि जागरमात्रेण तदुपशमोऽस्त्येव ॥ दार्ष्टान्तिकेच
जागरस्थानापन्नमेव ब्रह्मदर्शनमिति गालिमताऽस्मन्मतानभिज्ञाने-
नैव गालयोदीयन्ते ॥ असतोपीन्द्रियादेः स्वप्ने सत्प्रत्यायकत्वं
दृष्टमेव कूटकार्षापणादेः सत्यकार्यहेतुत्वं च दृष्टमसत्यस्याऽस-

त्यहेतुत्वे तु कोदोषः तस्मादिन्द्रजालस्थले यद्यपिकारणस्य मणि-मन्त्रादेर्नमिथ्यात्वं तथापि मिथ्याकार्यस्थले कारणस्यसत्त्यत्व-नियमोन प्रमाणाभावात् ॥ कल्पनायां दृष्टाऽनुसारित्वनियमोन-श्रौतेर्थे इत्युक्तम्प्राक् अतोमायाजन्यत्वस्य दृष्टानुसारित्वाभावेऽपि नदोषः श्रौतत्वात् ॥ दृष्टाऽनुसारित्वन्तूपपादितमेव ॥ यत्तु तत्क्षण-मेव तददर्शनादसत्त्वं साधयति ॥ तद्व्याहतम् ॥ उपलब्धिक्षणेऽनुप-लब्धेरभावात् ॥ तत्क्षणशब्देन कुसत्या स्वल्पकालग्रहणे स्वल्प-कालनष्टघटादौ व्यभिचारः मन्त्रादिसामर्थ्ये सत्त्वाभावे तददर्श-नापत्तिरित्युक्तिरप्ययुक्ता बहुकालं दृश्यमाने स्वमादौ सत्त्वाऽभा-वात्॥तद्दर्शनमित्यत्र तच्छब्देन कार्यग्रहणेतु असतोपीन्द्रियादेरि-त्यादिनाऽनुपदमुक्तेन प्रकारेण व्यभिचारोबोध्यः॥कदाचित्तददर्श-नमस्तीतिचे दिहापि समानम्॥सर्वस्य त्वनिर्वचनीयं सामर्थ्यं ना-स्तीति न तथा दर्शयितुं प्रभवति॥इदं तन्मौर्ख्यप्रकाशार्थ मुक्तम्॥ वस्तुतस्तु तन्मन्त्रादिषु व्यावहारिकं सत्त्वमस्त्येव ॥ तस्मादविद्यया जीवविभागोजगत्प्रतीतिश्च तत्कृतमेव तत्र कर्त्तृत्वं तस्यैवच नि-षेधइति सिद्धम्॥इतिचतुर्दशखण्डखण्डनम्॥ १४॥ ॥ नन्वास्तां शुद्धमेव ब्रह्म जगत्कारणं तेन सहाऽभेदोजीवस्य कथं श्रुत्या बो-ध्यते परस्परविरुद्धधर्मत्वादुभयोः ॥ परमार्थतोभिन्नयोरभेदा-ऽसंभवश्च ॥ नचोपाधिकृतत्वेन भेदस्य तदपगमे तत्संभवइतिवा-च्यं ॥ पूर्वोक्तन्यायेनोपाधेरेव निर्वक्तुमशक्यत्वात्॥नच तात्त्विक-भेदवतोरपि पाथसोर्मेलनेसत्यभेदप्रतीतिवत्प्रकृते नद्यःप्रविष्टाइव-नामरूपेइतिवचनात् ब्रह्मसंबन्धे सति जीवस्तस्माद्भिन्नतया न प्र-तीयतइत्याशयेनाऽभेदः श्रुत्या बोध्यतइतिवाच्यं ॥ तयोरनंत्याव-

यविसावयवैकजातीयद्रव्यत्वेनोभाभ्यामेकं स्वसजातीयकं का- र्यमुत्पाद्यतइति युक्तं तदभेददर्शनं ॥ प्रकृतेतूभयोरपि महत्त्वे स- ति निरवयवत्वेनाऽऽरंभकत्वासंभवाच्च न तथा वक्तुं शक्यं ॥ अ- विनाशीवाअरेअयमात्मानुच्छित्तिधर्मेतिश्रुतेर्नाशाऽसंभवाच्च ॥ किंच जीवब्रह्मणोः कः सम्बन्धः ॥ नतावत्संयोगसम्बन्धः ॥ त- योरजत्वेन तदनङ्गीकारात् ॥ नसमवायः ॥ अनाश्रितत्वादुभयोः॥ नापि स्वरूपसम्बन्धः॥तस्य सार्वदिकत्वेन जीवाऽनुपलब्धिप्रसङ्गा- त् ॥ किञ्चाऽणुजीवपक्षेऽपि ब्रह्मणोव्यापकत्वात्सकलजीवसम्ब- न्धस्य सार्वदिकत्वात्कदाऽपि न ते प्रतीताः स्युः ॥ नाऽपि ब्रह्मसा- क्षात्काराऽनन्तरमेव जीवस्य ब्रह्मभावोब्रह्मवेदब्रह्मैवभवतीत्यादि- श्रुत्या प्रतिपाद्यतइति ज्ञातृज्ञेयभावएव सम्बन्धोवाच्यः॥पारमार्थि कभेदस्यैतदनपनोद्यत्वात् ॥ अन्यथा देवदत्तविष्णुमित्रयोरप्यभे- दापत्तिः ॥ किञ्च सम्बन्धस्य द्विनिष्ठत्वात्संसारिणमपि जीवं ब्रह्म जानातीति ज्ञातृत्वसम्बन्धस्य तादृशे जीवेऽपि सत्त्वात्तस्याऽप्य- भेदापत्तिः ॥ ब्रह्मनिरूपितमेव तत्तदभेदसाधकमितिचेन्न ॥ य- तोवाचोनिवर्त्ततेअप्राप्यमनसासह अदृश्यमदृष्टमित्यादिश्रुतिभि- स्तस्य ज्ञेयत्वनिषेधात् ॥ अभेदोऽपि जीवब्रह्मणोर्न तादात्म्यरूपः॥ सहि धर्मधर्मिभावे भवति॥तस्याऽत्राऽसंभवात्॥पारमार्थिकभेदवतः पारमार्थिकोऽभेदोऽसंभावितइत्युक्तं॥एकविज्ञानेन सर्वविज्ञानप्र- तिज्ञाऽनुपपत्तिश्च ॥ एतेनैव चेतनत्वादिधर्मसारूप्येणौपचारिकए- वाऽभेदउच्यतइत्यपि निरस्तं॥नच तद्विकारत्वेन प्रतिज्ञोपपत्तिः॥त- स्याऽविकारित्वश्रुतेः॥जीवोऽपि नजायतेम्रियतेवाकदाचिदित्यादि- वाक्यैर्न विकार्यः॥ नाऽपि जीवोब्रह्मणोंऽशस्तस्य निरवयवत्वात्॥

अंशोनानाव्यपदेशादिति तत्त्वसूत्रादिकं त्वौपचारिकमंशत्वमाह॥ मुख्येबाधकमुक्तमेव ॥ तस्माद्ब्रह्मोपाधिरेवजीवइति मन्तव्यं ॥ अभेदबोधकश्रुत्यनुरोधात् ॥ नचोक्तन्यायेनाऽविद्यायाउपाधित्वासम्भवान्नैवं वक्तुं शक्यमिति वाच्यं ॥ श्रौताऽनुपपत्तेर्बलिष्ठत्वात्॥ तथाचोपहितस्यैवाभेदसम्भवादभेदसिद्ध्यर्थमुपाधेरपि प्रातीतिकमेव सत्त्वमुरीकार्यं ॥ पारमार्थिकसत्त्वे ज्ञाननाश्यत्वाऽसम्भवात् ॥ तथाच यत्रहिद्वैतमिवभवतितदितरइतरंपश्यतीत्यादिनाऽविद्याऽवस्थायामेव द्वैतदर्शनमुक्त्वा तदभावदशायां यत्रत्वस्यसर्वमात्मैवाभूत्तत्केनकंपश्येदित्यादिना तन्निवारयति श्रुतिरित्याविद्यकत्वं प्रपञ्चस्याऽपि सिद्ध्यतीति यतोवाइमानीत्यादिनाच ब्रह्मकर्तृकत्वंच प्रपञ्चस्य वदतीत्युभयसामञ्जस्यनिमित्तमविद्योपहितमेव ब्रह्म जगत्कारणमुच्यतां ॥ अतएव नाऽन्योऽतोऽस्तिद्रष्टेत्यादिश्रुतिरप्युपपद्यतइत्येवंप्राप्ते ब्रूमः ॥ श्रुतितस्तत्त्वसूत्रैश्चस्मृतिभ्यश्चांशएवसः स्वार्थप्रामाण्यतस्तेषांतेभ्यएवाणुरेवच ॥ भवेदेतदेवं यद्याविद्यकं जीवत्वं स्यात् नत्वेवं किन्तु पारमार्थिकं ॥ नचाभेदबोधकश्रुत्यनुपपत्तिः ॥ अंशांऽशिभावेनैव तदुपपत्तेः ॥ ननु निरवयवत्वं बाधकमुक्तमितिचेत् ॥ सत्यमुक्तं ॥ तत्रेदं विचार्यते ॥ ब्रह्मरूपं जीवस्वरूपं च श्रुतिगम्यं लौकिकप्रमाणगम्यं वेति ॥ तत्र नद्वितीयः ॥ तथाहि ॥ नतावच्चाक्षुषं ॥ अरूपिद्रव्यत्वात् ॥ नाऽपि स्पार्शनं ॥ तद्रहितत्वात् ॥ नाऽपि गन्धादिवद्घ्राणेन्द्रियादिप्रत्यक्षं ॥ अगुणत्वात् ॥ नाऽप्यनुमानगम्यं ॥ परिशेषेण ज्ञानप्रयत्नाधारत्वेनात्मसाधनआवश्यकत्वाल्लाघवाच्च ॥ तादृक्प्रमाणसिद्ध्यैवाऽर्थान्तरत्वेन तदसिद्धेः ॥ यथाकथंचित्सिद्धावपि नोपनिष-

द्विचारितरूपस्य सिद्धिः ॥ तथाच स्वतःप्रमाणैतद्विरोधेन बाधितत्वादनुमानस्य न तत्साधकत्वं ॥ नाऽपिशब्दगम्यं ॥ तस्याऽऽप्तोक्तिरूपत्वेन तत्त्वस्यच यथादृष्टार्थवादित्वेनाऽऽत्मनश्चाऽदृश्यत्वेन तदनुपपत्तेः ॥ अतएव नोपमानगम्यमपि ॥ किन्तु श्रुत्येकसमधिगम्यं ॥ तंत्वौपनिषदंपुरुषंपृच्छामीतिश्रुतेः ॥ सर्ववेदायत्पदमामनन्तीतिच ॥ वेदैश्चसर्वैरहमेववेद्यइति स्मृतेश्च ॥ तदर्थश्च न लोकरीत्या निर्णेतुं योग्यः ॥ अलौकिकत्वात् ॥ तस्य लोकविलक्षणत्वात् ॥ किन्तु स्वयमेव वेदव्यासं कृत्वा तन्मीमांसांच प्रतिज्ञापूर्वकं कुर्वतोवेदव्यासस्य सूत्रैः ॥ तस्यैव तदर्थाऽभिज्ञत्वात् ॥ १५ ॥

॥ ॥अथ नन्वास्तांशुद्धमेवेत्यादिस्तदर्थाऽभिज्ञत्वादित्यन्तः पञ्चदशः खण्डः खण्ड्यते॥ ॥तत्र पूर्वपक्षे आरम्भवादे पूर्वद्रव्यनाशे मानाभावः॥अविनाशीवाअरेइति श्रुतौ अविनाशित्वे हेतुरनुच्छित्तिधर्मेति॥उच्छित्तिर्धर्मोयस्य सतथा नोच्छित्तिधर्मोऽनुच्छित्तिधर्मेत्यर्थो नतु तट्टीकाकारोक्तोबहुव्रीहिपूर्वपदकव्यधिकरणबहुव्रीहिगौरवात् ॥ वृत्तिमत्त्वं धर्मत्वं तदाधारत्वं धर्मित्वमित्यप्ययुक्तं॥सर्पत्वप्रतिबिम्बादेरज्जुदर्पणाद्यवृत्तित्वेऽपि धर्मत्वव्यवहारान्नयनगतपीतत्वस्य शङ्खादिवृत्तित्वेऽपि तदधर्मत्वाच्च ॥ श्रीहर्षोक्तखण्डनचतुर्थपरिच्छेदस्थदूषणैराधेयत्वादेर्निरूपयितुमशक्यत्वाच्च ॥ तयोरजत्वेन संयोगाऽभावसाधनंत्वयुक्तम् ॥ अजयोस्संयोगे बाधकाऽभावात् ॥ अणुत्ववादे जीवस्याऽऽश्रितत्वे बाधकाभावेनोभयोरनाश्रितत्वोक्तिरसङ्गतैव ॥ स्वरूपस्य सम्बन्धत्वेऽन्यतराऽनुपलब्धौ स्वरूपस्य क्वाऽपि सम्बन्धत्वं न स्यात् ॥ तथाच त्वन्मतेऽनि-

त्यत्वेन स्वीकृतानां ध्वंसः स्वाधिकरणे केन तिष्ठेत् ॥ प्रभाकररी-
त्योक्तौ कैवल्यं दुर्निरूपम् ॥ अस्मद्रीत्योक्तौ तु अपसिद्धान्तः ॥
सिद्धान्ते अंशांशिभावेनेत्याद्यसङ्गतम् ॥ औपचारिकत्वप्रसङ्गात् ॥
नहि हस्तादिर्देवदत्तादिर्भवति ॥ हस्तच्छेदादौ देवदत्तादिहनन-
प्रायश्चित्तादिप्रसङ्गात् ॥ अरूपिद्रव्यत्वादित्यप्यसङ्गतम् ॥ आरो-
पे ह्यधिष्ठानज्ञानं कारणमिति वदता मलिनत्वाद्यध्यासोपपत्तये
आकाशादिचाक्षुषस्य त्वया पूर्वत्र सूचितत्वेन त्वट्टीकाकारेण
अवकाशरूपेण वस्तुसामर्थ्यादेव तस्य प्रत्यक्षत्वादिति त्वद्धार्द-
स्योद्घाटितत्वेनच तद्विरोधापत्तेः ॥ नापि स्पार्शनं तद्रहितत्वादि-
त्यत्र तच्छब्देन स्पर्शपरामर्शोऽयुक्तोऽप्रकृतत्वात् ॥ स्पर्शनशब्द-
स्येन्द्रियपरत्वात् ॥ तद्धितार्थोपसर्जनत्वाच्च ॥ नहि भवति चाक्षु-
षं रूपं तत्तैजसमिति अगुणत्वादित्यप्यसङ्गतम् ॥ आत्मगुणस्य
चैतन्यस्य त्वयाऽऽत्मातिरिक्तत्वाऽनङ्गीकारेणाऽऽत्मनोऽगुणत्वाऽन-
पायात् ॥ परिशेषेणेत्येतद्व्याख्यानावसरे चार्वाकमतमुपन्यस्य त-
त्राऽन्ये वदन्तीत्युपक्रम्य बाह्यः पुञ्जः शरीरंवा आत्मा ज्ञानप्रयत्ना-
धारत्वाद्यन्नैवंतन्नैवं घटादिवदिति अनुमानेन शरीरत्वावच्छिन्न-
स्य बाह्यपुञ्जत्वावच्छिन्नस्य वा ऽऽत्मत्वं साधनीयमिति टीकाकृ-
तश्चार्वाकमतानुवादोऽसङ्गतश्चार्वाकस्य प्रत्यक्षैकप्रमाणवादित्वा-
त् ॥ विस्तरभयात्तु तदीयप्रलापान्तरं न दूष्यते ॥ स्वतःप्रमाणेत्य-
सङ्गतम् ॥ अनवस्थादिभयादनुमानेऽपि प्रामाण्यस्य स्वतस्त्वात् ॥
मन्वादेरप्यात्मदर्शनाभावे कीदृशस्य तद्दर्शनं स्यात् तथाच द्रष्ट-
व्यइति न संगच्छेत ॥ किञ्च यथादृष्टार्थवादित्वं नाप्तत्वं ॥ धर्म-
स्याऽदृश्यत्वेन तद्वक्तॄणामनाप्तत्वप्रसङ्गात् ॥ किन्तु यथार्थवादित्वं॥

तच्चाऽऽत्मनोऽदृश्यत्वेऽपि मन्वादेर्युज्यतएव ॥ मन्वादिस्मृतिरूपाऽऽप्तवाक्यानां गीतादिवच्छ्रुतिमूलकत्वेन तन्त्वौपनिषदमित्यादिश्रुतिस्मृतिविरोधोन ॥ न लोकरीत्येत्यप्यसङ्गतम् ॥ लोकवेदाधिकरणविरोधात् पूर्वमीमांसाद्युच्छेदप्रसङ्गाच्च ॥ व्यासेनाऽपि लोकरीत्यैव विचारितत्वाच्च ॥ तस्यैवेत्यप्यसङ्गतम् ॥ यद्वैमनुरिति श्रुतिविरोधात्पूर्वमीमांसायाउच्छेदप्रसङ्गाच्च ॥ तस्मान्मुनीनामविगीतांऽशोक्तावाप्तत्वमेव ॥ व्याससूत्रतद्ग्रथितश्रुत्याद्यर्थनिर्णये तु श्रीभगवत्पादमुनेरेवाऽऽप्तत्वमित्युक्तं प्रथमश्लोकव्याख्यायाम् ॥ तस्माद्विचाराऽशक्तौ श्रद्धामात्रेणार्थग्रहणेच्छायां शाङ्करपादावेव सेवस्व ॥ इतिपञ्चदशखण्डखण्डनम् ॥ १५ ॥ ॥ तत्रच जीवब्रह्मसम्बन्धविचारे ब्रह्मणोंऽशएव जीवइति निर्णीतमंशोनानाव्यपदेशादिति ॥ अस्यार्थः ॥ जीवोब्रह्मणोंऽशएव कुतोनानाव्यपदेशान्नानाविधोयोव्यपदेशः क्वचित्ब्रह्मत्वेन क्वचिदुत्पन्नत्वेन क्वचिदज्ञत्वेन क्वचित्चिद्रूपत्वेन क्वचिदीशितव्यत्वेनाऽणुत्वेनच व्यापकत्वेनच निरूपणादेकस्यैव विरुद्धधर्माश्रयत्वं ब्रह्माऽतिरिक्तस्य न सम्भवतीति ब्रह्मांऽशएव जीवइत्यर्थः ॥ अथवा नानाव्यपदेशाद्भेदेन व्यपदेशात्तथेत्यर्थः ॥ श्रुतिश्च यथाग्नेःक्षुद्राविस्फुलिङ्गाव्युच्चरंत्येवमेवास्मादात्मनःसर्वेप्राणाइत्युपक्रम्य सर्वएवात्मानोव्युच्चरन्तीति कपूयचरणारमणीयचरणाइतिच ॥ यत्तु जीवस्य ब्रह्मोपाधित्वमङ्गीकृत्य विस्फुलिङ्गस्यौष्ण्यमिव चेतनत्वं साधारणोधर्मोजीवेश्वरयोरित्यौपचारिकमंशत्वं व्याख्याय नानाव्यपदेशदर्शनं श्रुतौ यथाग्नेःक्षुद्राविस्फुलिङ्गाः यआत्मनितिष्ठन्नात्मानमंतरोयमयतीत्यादेः ॥ तत्तूपेक्ष्यं विद्वद्भिः ॥ पूर्वाऽपरविरोधा-

त् ॥ तथाहि ॥ नहि तन्मतीयजीवस्याऽभासत्वेन प्रतिबिम्बत्वेन-वा ऽलीकस्य नियमनं तस्मिन् स्थितिर्वा ज्ञानैकघनस्य परमा-त्मनः सम्भवति॥नवा विस्फुलिङ्गौष्ण्यदृष्टान्तेन चेतनत्वं साधारणं धर्ममादायौपचारिकमंशत्वमपि व्याख्यातुं शक्यं॥ततएवअंशत्वाव-गमप्रकारस्तुश्रुत्यैव यथाग्नेःक्षुद्राइत्यादिनोक्तः ॥ इदमत्रज्ञेयं ॥ ब्र-ह्मणोनिरंशत्वं सांशत्वं वा न लोकासिद्धं येन तदनुरोधेन किञ्चि-द्वक्तुं शक्यं किन्तु वैदिकसमधिगम्यं ॥ एवंसति यथैवसानिरूपयाति तथैव तदिति मन्तव्यं॥अतएव नैषा तर्केण मतिरापनेया अलौकि-कास्तुयेभावानतांस्तर्केणयोजयेदित्यादिका श्रुतिर्लौकिकयुक्त्यै-तत्बाधनं निषेधाति॥अन्यथा सर्वत्र लौकिकयुक्त्यनुसारिण्येवार्थे श्रुतेस्तात्पर्यवत्त्वेन नैषातर्केणेत्यादिश्रुतिर्व्यर्था विरुद्धार्थाच स्यात्॥ लोकेऽपि यत्र वस्तुस्वभावएव कार्यहेतुर्न तत्र युक्तिसंभावना ॥ यथाऽयस्कान्तसंनिधौ लोहपरिभ्रमणे ॥ नच तत्र मणिनिष्ठा दे-वताऽऽकर्षिकेतिवाच्यं ॥ अस्याअपि लोहस्यैवाकर्षणे हेत्वपेक्षा-यां देवतास्वभावस्यैव तथात्वेन वक्तव्यत्वआवश्यकत्वाल्लाघवाच्च मणिस्वभावस्यैव तत्त्वेन वक्तुमुचितत्वात् ॥ तथाऽत्राऽपि श्रुतिब-लाद्वस्त्वेव तादृशमिति मन्तव्यं न युक्तिरपेक्षणीया ॥ तथाच सैव निष्कलंनिष्क्रियमित्यादिना सांशत्वं निराकृत्य यथाग्नेरित्यादिना जीवस्य ब्रह्मांशत्वमप्याह ॥ व्यासोप्यतएवेममेवार्थं दृढीकर्तुं हे-त्वंतराण्याह मंत्रवर्णादिति अपिस्मर्यतइतिच ॥ मंत्रवर्णश्च पा-दोस्यविश्वाभूतानीति भूतानां जीवानां पादत्वेनांशत्वमेवाह ॥ स्मृतिश्च ममैवांशोजीवलोकेजीवभूतःसनातनइति जीवस्य ब्र-ह्मांशत्वमेवाह ॥ अतएवाभेदश्रुतिरुपपद्यते ॥ नहि विस्फुलिङ्गो-

नाऽग्निः एवं जीवोऽपि ब्रह्मांशत्वात् ब्रह्मैव ॥ तर्ह्यसार्वज्ञ्यानुपप- त्तिः नहि विस्फुलिङ्गेन दाहकः प्रकाशोवा ॥ अल्पप्रकाशवदल्प- ज्ञत्वोपपत्तावपि भ्रमस्तु नोपपद्यतेजातु ॥ नच देहसंबन्धकृतम- नीशत्वादीतिवाच्यं ॥ तस्याऽपि जीवभावोत्तरकालीनत्वात् ॥ त- स्मादीश्वराद्भिन्नएवाऽनीशत्वादिविशिष्टोनित्यबद्धएवेश्वरप्रसादज- ज्ञानतोमुक्तोभवतीति नांऽशोभवितुमर्हति ॥ श्रुतिश्च प्रलयसमये भगवदुदरान्तःस्थानां जीवानां पुनः सर्गसमये ततोनिर्गमनप्रका- रमेवाह विस्फुलिङ्गदृष्टान्तेन ॥ नान्योऽतोऽस्तिद्रष्टेत्यादिश्रुतिरपि जीवादिसर्वपदार्थविषयकदर्शनादिमत्त्वं सर्वदाऽन्यस्मिन्निषेधति नतु परिच्छिन्नदर्शनादिकमपि॥यथा पार्थएव धनुर्द्धरइत्यत्र नहि पार्थादन्योन धनुर्धरः किन्तु यथा स तथा नान्यइति तथेहापी- तिचेत् ॥ बाढमेवमङ्गीकुर्मोयदि वेदार्थतामरसतरणेर्भगवतोबादरा- यणस्य सूत्रैः सप्रमाणनिदर्शनैः अंशोनानाव्यपदेशादित्यादिभि- स्त्वदुक्तं न विरुध्येत नचैवं॥किञ्च विस्फुलिङ्गदृष्टान्तेन यद्यात्मना- मेवोत्पत्तिं वदेत्तदा त्वदुक्तः प्रकारउपपद्येतापि नचैवं किन्तु सर्वेषां प्राणानां लोकानां देवानां भूतानामपि तथैव सृष्टिमुक्त्वा सर्वएवाऽऽत्मानोव्युच्चरन्तीत्यवदत् ॥ नच त्वं प्राणानां नित्यत्वं तथा सृष्टिं वा मनुषे येन तत्क्रमपठितानामात्मनां तथात्वमवादीः ॥ नचात्मनां निर्गमनप्रकारमेवाह प्राणादीनामेवोत्पत्तिमाहेत्यपि वक्तुं शक्यं ॥ वाक्यभेदप्रसङ्गात् विनिगमकाऽभावाच्च ॥ यद्यपि यथाग्नेरितिश्रुत्यैव जीवस्यांऽशत्वं तदभावोवा न निश्चेतुं शक्यः ॥ चिन्तामणिकामधेनुकल्पतर्वादिभ्यइवाऽपि ब्रह्मणः सकाशात्प्राण्यु- त्पत्तेः संभवात्तथापि सूत्रैस्तदुपदर्शितश्रुतिस्मृतिभ्यश्चांऽशत्वमे-

वाऽवगम्यते ॥१६॥ ॥अथ तत्रचजीवब्रह्मसंबन्धविचारेइत्या-
दिरंशत्वमेवावगम्यतइत्यन्तः षोडशः खण्डःखण्ड्यते॥ ॥तत्र ता-
वन्नानाशब्दस्य नानाविधार्थकत्वं कुतः नञ्शब्दाद्विविनञ्भ्यां-
नानाञाविति स्वार्थे नाञ् सच भेदं वक्तुमर्हति ॥ विरुद्धधर्माब्रह्म-
ण्यपि न सम्भवन्तीत्युक्तम्प्राक् ॥ किञ्च विरुद्धधर्माऽऽश्रयत्वेन
ब्रह्माऽतिरिक्तत्वाऽभावसिद्धावपि तदंशत्वं केन सिध्येत॥अभेदमा-
त्रेणांशत्वोक्तौ तु ब्रह्मणोऽप्यं शत्वं स्याद्विभुत्वेऽपि विरोधस्याऽभा-
वेनांऽशत्वाऽव्याघातात् ॥ जीवस्याऽप्यनणुत्वमुक्तम्प्राक् ॥ भे-
दव्यपदेशमात्रस्यांशत्वसाधकत्वन्तु वदन्व्याख्यादिरीतिमजानन्नु-
पेक्ष्यएव ॥ किञ्चाऽन्यथाचापीत्यादिसूत्रांशं विसस्मारेति भाति ॥
अधिकंतु नात्माऽणुरितिश्लोकव्याख्यानावसरे उक्तम् ॥ कपूय-
चरणारमणीयचरणाइत्यत्र चरणशब्दआचरणवाचीति तदुपन्या-
सोऽत्र भ्रमादेव ॥ आभासस्य नालीकत्वमित्युक्तमसकृत् ॥ किञ्च
स्वामप्रपञ्चंयदीश्वरोनयमयति तर्हि सर्वनियामकत्वविरोधः ॥ य-
दि यमयति तर्हि तत्र व्यभिचारः॥एवं स्थितावप्यूह्यम् ॥ अस्मा-
कं यादृशमंशत्वं संमतं तादृशं प्रागुक्तम् ॥ अमृतत्वफलकमात्म-
ज्ञानमुपक्रम्य श्रोतव्यइत्युक्त्वा मन्तव्यइत्युक्त्या मननरूपस्तर्क-
आत्मज्ञानउपयुज्यतएव ॥ तर्कनिषेधस्तु श्रुतिप्रतिकूलतर्कविष-
यः ॥ अतएव श्रुतौन तर्केणापनेयेत्युक्तम् ॥ त्वयापिच श्रुतिर्लौ-
किकयुक्त्यैतद्बाधनं निषेधतीत्युक्तम्॥अत्रत्याऽनंशत्वसाधकतर्क-
स्तु निष्कलंमहान्तजइत्यादिश्रुत्यनुगृहीतएव ॥ अतएवाऽपामसो-
मममृताअभूम अक्षय्यंहवैचातुर्मास्ययाजिनःसुकृतमित्यादिभ्यो-
नकर्मणानप्रजयाइत्यादेः प्राबल्यम् ॥ न्यायोपबृंहितत्वात् ॥ श्रु-

तिप्रतिकूलइत्यत्र श्रुतिरपि स्वार्थे तात्पर्यवत्येव ज्ञेया ॥ अतएव यजमानः प्रस्तरइत्यादौ तर्केणश्रुत्यर्थबाधः ॥ अतएव स्मृत्योर्विरोधेन्यायस्तुबलवान्व्यवहारतइत्याह याज्ञवल्क्यः॥अन्यथा स्मृतीनां श्रुतिमूलकत्वाऽभावे श्रुतितोदौर्बल्याऽनुपपत्त्या स्मृतिविरोधस्थले स्मृतितुल्यार्थश्रुतिद्वयकल्पनायाआवश्यकत्वेन तयोरपि विरोधे तर्केणाऽन्यतरश्रुतिसंकोचस्याऽशक्यतया याज्ञवल्क्योक्तिर्न सङ्गच्छेत ॥ नच ब्रह्मप्रमाणेष्वेव तर्कविरोधोऽकिञ्चित्करइतिवाच्यम् ॥ श्रुतित्वाविशेषे श्रौत्याअन्यथानुपपत्त्यास्त्वदुक्तरीत्या बलवत्त्वेच जीवस्यैवेतरस्याऽपि ब्रह्मणोभिन्नतायास्ततउत्पन्नतया त्वत्संमत्या च संभवेनांशोनानेतिसूत्रव्याख्यावसरोक्तश्रौतविरुद्धधर्माऽन्यथाऽनुपपत्त्या जीवस्यैवेतरस्याऽपि ब्रह्माऽभेदेन सर्वोपपत्तावन्यत्र पक्षपातस्याऽनुचितत्वात् ॥ अत्रचाथवासर्वरूपत्वादिति त्वज्जनकवाक्यमप्यनुकूलं स्यात् ॥ किञ्च तर्कस्य ब्रह्मण्यप्रवृत्त्या श्रुत्युक्तस्य विरुद्धस्यापि ब्रह्मण्यङ्गीकारे श्रुत्यादिविरोधपरिहारपरद्वितीयाऽध्यायसूत्राणां तद्व्याख्यानपरत्वज्जनकग्रन्थविरोधपरिहारपरत्वप्रलापस्याप्यसंगतिः स्यात् ॥ लाघवेन परिभ्रमणस्य मणिस्वभावत्वमीश्वरकृतत्वेन श्रुतेर्बलीयसीत्वमितिवदता न्यायस्य लोके श्रुतौचोपकारकत्वं स्वीकृतं ॥ न्यायमनादृत्य श्रुतिबलादेव विचारयता तु मोक्षस्य कर्मतत्त्यागोभयसाध्यत्वं जीवस्य ब्रह्मांशत्वं तदनंशत्वंच स्वीकार्यमुभयाविधश्रुतिदर्शनान्न्यायानपेक्षणाच्च ॥ सूत्रयोस्तु सप्तमश्लोकेंऽशोनानेतिसूत्रव्याख्यावसरे ममैवांशइतिस्मृतेर्याव्यवस्थोक्ता तादृश्येव बोध्या॥ मन्त्रवर्णस्याऽप्युपाधिपरिच्छेदेन परिच्छेदं वदतस्तस्यैव गतिः ॥ यत्तु

टीकाकारेणाऽतएवाभेदश्रुतिरित्यत्राऽतएवेत्यस्य तादात्म्यादेवेत्यु- क्त्वा भेदसहिष्णुरभेदस्तादात्म्यमिति तादात्म्यलक्षणोऽभेदइत्याद्यु- क्तं तदयुक्तं ॥ निम्बार्कादिमतप्रवेशापत्तेः ॥ भेदाभेदयोर्विरोधे- नैकत्रावस्थानाऽयोगाच्च ॥ शब्दार्थयोस्तादात्म्यं तच्च भेदसहिष्णु- रभेदइति वदतां केषांचिच्छाब्दिकानांत्वयं भावः ॥ शब्दार्थयो- र्भेदोवास्तवोवैकल्पिकोऽभेदश्च ॥ विकल्पस्तु शब्दज्ञानानुपातीव- स्तुशून्योविकल्पइति पतञ्जलिलक्षितइतिदिक् ॥ विस्फुलिङ्गाना- मप्यभेदं वदन्नेवं प्रष्टव्यः ॥ किमिमे विस्फुलिङ्गात्मकवन्हेरभिन्ना उतापादानवन्हेः ॥ नाद्यः॥जीवस्य तादृशदृष्टान्तेन स्वस्मादेवाऽभे- दसिध्या ब्रह्मणस्तदसिद्धेः॥अन्त्ये व्युच्चरणात्प्रागूर्ध्वं वा॥नान्त्योऽ- नुभवविरोधात्॥नाद्यो वन्हेस्सावयवत्वेन स्वघटकतादृशावयवा- द्विस्फुलिङ्गस्याऽभिन्नत्वेऽपि तादृशसर्ववन्ह्यभेदे मानाऽभावात् ॥ नहि पटावयवएकस्तन्तुस्सर्वपटाऽभिन्नोव्यपदिश्यतेऽतिप्रसङ्गात्॥ कथञ्चानेन दृष्टान्तेन सर्वदा ब्रह्माभेदवादिनस्ते इष्टसिद्धिः ॥ कि- ञ्चैवं प्राणादेरपि तदंशत्वं स्यात् तस्मादुपाधिनिर्गमेनैव जीवनिर्गम- इति युक्तमित्युक्तम्प्राक्॥यद्यपि यथाऽग्नेरित्यादिस्वदुक्तं संगच्छते परन्तुतत्राऽपि चिन्तामणीत्याद्युक्तिर्न युक्ता॥घटाकाशवज्जीवाऽवि- र्भावसम्भवादितिहि वक्तुं युक्तम्॥यत्तु टीकाकारोघटसंवृतमाका- शमित्यस्यां श्रुतौ लयाभावेन सादृश्यमभिप्रेतमित्याह॥तन्न ॥ उ- पात्तधर्मं परित्यज्याऽनुपात्तधर्मेण सादृश्यस्वीकारे ऽतिप्रसङ्गात्॥त- स्माद्विभुत्त्वेन नयनाभावप्रयुक्तमेव सादृश्यं तच्च नाऽणुत्वे घटते ॥ इतिषोडशखण्डखण्डनम् ॥ १६ ॥ ॥ नचैवमसार्वज्ञ्याऽनुपप- त्त्यादिदूषणाभासः॥सर्वज्ञत्वादिधर्माणां भगवदिच्छयैव तिरोभूत-

त्वात् ॥ यतः सूत्रकारोऽपीमामेवाऽऽशङ्कामपाकर्तुमेवमेव जगाद
पराभिध्यानात्तु तिरोहितं ततो ह्यस्य बन्धविपर्ययाविति॥अस्य जी-
वस्यैश्वर्यादि तिरोहितं तत्र हेतुः पराभिध्यानात् परस्य भगवतोऽ-
भिध्यानं ह्यस्य जीवस्य च सर्वतोभोगेच्छा तस्माद्धेतोः ऐश्वर्या-
दिसद्भावे वैचित्र्याभावाद्भोगो न भविष्यतीति जीवे तिरोभावं कृ-
तवान् स्वधर्माणां ततएव तिरोभावात् बन्धो भगवद्धर्मविपरीतधर्म-
वत्वं चेत्यर्थः॥ ऐश्वर्यादितिरोभावाद्दीनत्वं पराधीनत्वंच वीर्य-
तिरोभावात्सर्वदुःखसहनं यशस्तिरोभावात्सर्वहीनत्वं श्रीतिरोभा-
वाज्जन्मादिसर्वापद्विषयत्वं ज्ञानतिरोभावाद्देहाद्यहंबुद्धिः सर्ववि-
परीतज्ञानमपस्मारसहितस्येव वैराग्यतिरोभावाद्विषयासक्तिः आ-
नन्दांशस्तु पूर्वमेव तिरोहितो येन जीवभावः॥अतएव नेतरोऽनुपपत्तेः
भेदव्यपदेशाच्चेत्यादिना जीवस्याऽऽनन्दमयत्वं न्यषेधत्सूत्रकारः॥न
नु कारणसाम्ये कथमेकेषां जडत्व मेकेषांचेतनत्वं जीवे ज्ञानस्यापि
तिरोहितत्वेनाऽल्पज्ञत्वमपि कथमिति चेत् ॥ अत्राहुराचार्याः ॥ स-
च्चिदानन्दरूपे ब्रह्मणि अस्त्यंशत्रयं स्वरूपभूतं॥सत्यंज्ञानमानंदंब्रह्मे-
तिश्रुतेः॥यःसर्वज्ञइति श्रुते र्धर्मरूपमपि ज्ञानमस्तीति मंतव्यं भगवा-
निति नामव्युत्पत्त्याच ॥ तत्रच स्वरूपात्मकेन सदंशेन जडोद्गमः पू-
र्वमुक्तः ॥ पश्चाच्चिदंशादेव जीवानां तद्रूपाणामेवोद्गमउक्तः ॥ अ-
तोजडेषु सन्मात्रकार्यत्वाच्चित्तिरोभावः ॥ जीवेषु चित्कार्यत्वेन
चिद्रूपत्वात्सत्त्वेनचोपलभ्यमानत्वादानन्दांशतिरोभावएव॥एतयोः
सच्चितोरपि तिरोभावे स्वरूपहानिरेव स्यात् तिरोहितंतु धर्मरूपं
भगशब्दवाच्यं ज्ञानमतः सर्वमनवद्यं ॥ अत्र नियामिका भगवद्दि-

च्छैवेति ज्ञेयं॥एतयोर्भेदाऽभेदविचारमग्रे वक्ष्यामः॥१७॥ ॥अथ नचैवमसार्वज्ञ्येत्यादिर्विचारमग्रेवक्ष्यामइत्यन्तः सप्तदशः खण्डः खण्ड्यते॥ ॥भगवदिच्छया जीवस्यैश्वर्यादितिरोभावे वैषम्यादिदोषोभगवतोभोगेच्छाभावश्चोक्तः॥त्वदुक्तेऽर्थे सूत्रस्य विषयवाक्याऽलाभोऽतस्तत्रस्थपदमात्रार्थपर्यालोचने अभिध्यानशब्दस्येच्छायां रूढौ प्रमाणाऽभावेन योगेन तथाऽर्थाऽलाभेनच परस्याऽज्ञानस्याऽभिध्यानादभिचिन्तनादभिनिवेशात्स्वस्वरूपं तिरोहितं ततः पराभिध्यानात्तज्जन्य तिरोधानाद्वा बन्धो विपरीतधर्मवत्त्वंचेति सूत्रार्थः॥ इदञ्च श्रुत्यर्थमपर्यालोचनम्प्रत्युक्तम्॥वस्तुतस्त्वयमर्थः॥तिरोहितमपि ईश्वरस्याऽभिध्यानाच्चिन्तनात् आविर्भवतीत्यध्याहारः हि यस्मात्तत एवेशादेवास्य जीवस्य बन्धविपर्ययौ बन्धतदभावौ ईश्वराऽज्ञानेन बन्धस्तज्ज्ञानेन तदभावइतीश्वरस्य बन्धतदभावहेतुत्वम्॥ तथाच श्रुतिः ॥ ज्ञात्वादेवंसर्वपाशापहानिःक्षीणैःक्लेशैर्जन्ममृत्युप्रहाणिः तस्याऽभिध्यानात्तृतीयंदेहभेदेविश्वैश्वर्यंकेवलआप्तकामः ॥ ज्ञात्वाइत्यस्योपपत्त्यर्थं पूर्वार्द्धं लभ्यते इतिशेषः॥तृतीयं बन्धमोक्षापेक्षया सर्वपाशापहानिजन्मादिप्रहाण्यपेक्षयावा तृतीयमणिमादि॥ देहभेदे देहनाशे॥ क्रममुक्तिरुत्तरार्द्धेनोक्ता॥ तथाच बन्धतदभावयोरज्ञातज्ञातेश्वरप्रयुक्तत्वम्॥ एवंच बन्धस्याऽज्ञानप्रयुक्तत्वाद्दीनत्वादिकं तत्प्रयुक्तमेव॥अनन्दांशस्तु पूर्वमेवतिरोहितइत्यसंगतम्॥ जीवभावस्याऽनादित्वात् सादित्वेपि पूर्वमानन्दांशतिरोभावस्ततोजीवभावस्ततोबन्धविपर्ययावितिक्रमे मानाभावः॥ नेतरोऽनुपपत्तेः भेदव्यपदेशाच्चेतिसूत्राभ्यां यथा जीवस्याऽऽनन्दमयत्वं न निषिध्यते यथाच तस्याऽधिकरणस्याऽर्थस्तथा शारी-

रकभाष्यभामतीनिबन्धादितोज्ञेयम् ॥ अस्माभिस्तु विस्तरभिया नप्रतन्यते ॥ जडानां सदंशादेवोद्भवइति सत्त्वेनोपलम्भोजीवानां चित्त्वेनचोपलम्भइतितु निष्प्रमाणम् ॥ चिन्मात्रकार्यस्य जीवस्य सत्त्वेन प्रतीतौ सन्मात्रकार्यस्याऽऽकाशादेरपि चित्त्वेन प्रतीत्यापत्तिः ॥ सत्कार्यत्वाऽभावेऽपि जीववदेवसत्त्वेन प्रतीत्युपपत्त्या सत्कार्यत्वस्याऽप्यनापत्तिश्चाऽधिकंतूक्तं सप्तमश्लोकव्याख्यायाम् ॥ नेहनानास्तीत्यादिश्रुतिविरोधान्ननिरुपाधौ धर्मरूपं ज्ञानं किन्तु सोपाधावेव त्वन्मते यथाऽऽकाशादेश्चितस्तिरोभावेऽपि नस्वरूपहानिर्यथावा स्वप्नस्य सतोऽपि तिरोभावेऽपिन सा तथा जीवजडयोस्तदहान्युपपत्त्या स्वरूपहान्यापत्त्युक्तिरयुक्तैव ॥ इति सप्तदशखण्डखण्डनम् ॥ १७॥ ॥ ननु ब्रह्मरूपाणामेव जीवानां सहजगुणांस्तिरोहितान्विधाय मिथ्याज्ञानादिदोषयुक्तत्वकरणे तूपस्थितहानिरकृताभ्यागमश्च प्रसज्येतेतिचेत् ॥ न ॥ एतयोर्जीवकृतावेव जीवएव च दूषणत्वात् ॥ तत्राऽपि लोकेऽप्यस्वतन्त्रजीवकृतावेव ॥ दृश्यते हि लोकेऽपि राज्ञां स्वतन्त्रणां स्वविहारार्थं प्राचीनविचित्रभवनप्राकारगोपुरादिभङ्गकरणेन तत्रैव तिरोधानादिकरणं निजसेवकेष्वपि कदाचित्स्थितस्याप्यैश्वर्यादेर्हरणं पुनर्दानं च सेवयासंतोषे किंपुनः सकललोकनियामकस्य सकलजगत्कारणकारणस्य भगवतः स्वदासजीवस्याऽन्यथाकरणे शङ्का नाम ॥ किञ्चैवंसर्गस्थितिसंहारेष्वपि भगवतएव कर्तृत्वात्स्थितं संहृत्य पुनस्तथाकरणेऽपीमौदोषौ प्रसज्येयातां ॥ तथासति जगतोऽनित्यत्वप्रसंगोऽसंभवएव वा स्यात् ॥ यतोभगवान् स्वयमेव येचैवसात्त्विकाभावाराजसास्तामसाश्चये मत्तएवेतितान्विद्धिनत्वहं-

तेषुतेमयि त्रिभिर्गुणमयैर्भावैरेभिःसर्वमिदंजगत् मोहितंनाऽभि-
जानातिमामेभ्यःपरमव्ययमिति मायामोहेन स्वाऽज्ञानमुक्का स्वे-
च्छयैव च माया मोहयतीति निरूपणार्थं स्वाधीनत्वं मायायाः
दैवीह्येषागुणमयीममामायादुरत्ययेति निरूपितवान् ॥ अतोपि भ-
गवदिच्छाधीनतैव बन्धस्याऽपि ॥ एवंसति यस्मिन् जीवे यादृशी-
च्छा तदनुरूपाएवाविद्यादिशक्तयः सत्त्वादिभेदेन तं व्याप्नुवन्तीति
महदैश्वर्यं भगवतः ॥ अतएव महात्मानस्तुमांपार्थदैवींप्रकृतिमा-
स्थिताः भजंत्यनन्यमनसोज्ञात्वाभूतादिमव्ययमिति भगवतोक्तं ॥
भवंतिभावाभूतानांमत्तएवपृथग्विधाः मत्तःस्मृतिर्ज्ञानमपोहनंचे-
त्यपि ॥ अपरंच स्वयौक्तिकेऽर्थेत्विदं दूषणमुद्भाव्यं स्याद्येन तथैव
कल्प्येत नतु श्रुतिसिद्धे॥राजाऽऽज्ञायाः पर्यनुयोगाऽनर्हत्वात्॥ एष-
ह्येवसाधुकर्मकारयतितंयमेभ्योलोकेभ्यउन्निनीषति एष एवासा-
धुकारयतितंयमधोनिनीषतीतिश्रुतिरपीममेवार्थमाह ॥यआत्मनि-
तिष्ठन्नात्मानमन्तरोयमयतीतिच ॥ अतएव नान्योऽतोऽस्तिइत्या-
दिरपि संगच्छते॥अन्यस्य स्वतन्त्रकर्त्तृत्वाऽभावात् ॥ अतएव सू-
त्रकारोऽपि जीवस्य कर्त्तृत्वं निरूप्य तत्स्वतएवेश्वराद्वेत्याशंक्य प-
रात्तुतच्छ्रुतेरिति सिद्धान्तमुक्तवान् ॥ अतोऽकृताऽभ्यागमोजीवे न
दोषाय॥सर्वथा परतन्त्रत्वात् ॥१८॥ ॥ अथ ननुब्रह्मरूपाणामे-
वेत्यादिः सर्वथापरतन्त्रत्वादित्यन्तोऽष्टादशःखण्डःखण्ड्यते ॥ ॥
तत्रोपस्थितहान्यादिकरणदूषणस्य न वाचनिकत्वं येन तस्य स्व-
तन्त्रविषयेसंकोचः क्रियेत किन्तु परदुःखकरणं लोकतोजुगुप्सित-
मितीदृशजुगुप्सितधर्मोऽपि परस्मिंश्चेत्त्वया स्वीक्रियते तर्हि सुव्या-
ख्याताविष्णुभक्तिः सुयत्येत च त्वदीयैः श्रेयसे ॥ जडेषु नोपस्थि-

तद्धानिकृतोदोषोदुःखाभावेनाऽजुगुप्सितत्वात्॥अकृताभ्यागमनन्तु नास्त्येवेति दृश्यतेहीत्यादिना तदुदाहरणमसङ्गतम् ॥ एतेनैव किञ्चै-वं सर्गेत्यादिनिरस्तम् ॥ सेवकेषु यथैश्वर्यादेः पुनर्दानं सेवया सं-तोषे तथा हरणमप्याज्ञोल्लङ्घनादिभीरोषएव ॥ अन्यथाऽपयशो-नरकौ स्यातामेव ॥ तथाचस्मृतिः ॥ अदण्ड्यान्दण्डयन्राजाद-ण्ड्यांश्चैवाप्यदण्डयन् अयशोमहदाप्नोतिनरकंप्रतिपद्यते ॥ अत-एव सूत्रकारः फलमतउपपत्तेरित्याह ॥ अस्मन्मतेतु वैषम्यादिप-रिहारस्तृतीयश्लोकव्याख्यायामुक्तः ॥ मायामोहेनेत्याद्युक्त्या ई-श्वरेच्छाया मायाकृतमोहद्वारा कार्यविशेषं प्रतिहेतुत्वं स्वीकृतं तच्च स्वतन्त्रेच्छाहेतुत्ववादस्य सङ्कोचकमर्द्धजरतीयन्यायाऽऽपाद-कञ्च ॥ तन्न्यायपरिहाराय कार्यान्तरेष्वपि मायादिद्वारकहेतुता-ऽऽपादकञ्च स्वेच्छयैवचेत्यत्र स्वशब्दोपादानं शब्दशक्त्यज्ञानमूल-कं मदिच्छयैवेति प्रयोक्तुमुचितम्॥अन्यथा राजाऽऽज्ञया सेवकै-श्चौरादिदण्डने राज्ञा स्वाज्ञाधीनत्वे तस्य ख्यापिते सेवकाः स्वे-च्छया चोरान्दण्डयन्तीति ख्यापनार्थं राजेदं प्रोक्तवानिति तटस्थः प्रयुञ्जीत प्रयुङ्क्ते तु सेवकामदिच्छयेत्यादि ॥ ईश्वरेच्छावशाद्वि-द्यादिशक्तयोजीवं व्याप्नुवन्ति परन्तु बीजवदीश्वरेच्छायाजलव-द्धेतुत्वमिति तद्व्याप्तिरनादिरित्यादिच प्रागुक्तम्॥भवन्तिइत्याद्यप्येवं व्याख्येयम् ॥ श्रौतेऽर्थे नेदंदूषणमुद्भाव्यमित्यत्र यद्वक्तव्यं तदुक्तं प्राक् ॥ राजाऽऽज्ञायाः पर्यनुयोगानर्हत्वादित्यपि स्मृतिविरुद्धम्॥ अधर्मतःप्रवृत्तन्तंनोपेक्षेरन्सभासदः उपेक्षमाणाःसनृपानरकंया-न्त्यधोमुखा इति कात्यायनस्मृतेः ॥ एषह्येवेतिश्रुतेश्च व्यवस्थो-क्तैव ॥ अन्तर्यमनन्त्वपक्षपातेनैव बोध्यम् ॥ नान्योऽतोऽस्तीत्यादेः

स्वम्नकर्त्तृत्वाऽभावमात्रपरत्वे तु मुख्यार्थत्यागः स्यात्सच बाधकं विनाऽयुक्तोऽन्यथाऽतिप्रसङ्गात् ॥ तस्मादीश्वराद्द्रष्ट्रादेर्भेदनिषेधिकैवेयं श्रुतिः ॥ परात्तुतच्छ्रुतेरित्यस्य तु व्यवस्थोक्तैव ॥ तस्मा त्त्वदुक्तरीत्याऽकृताभ्यागमादिः स्थितएव सच दोषायैवेति स्थितम् ॥ इत्यष्टादशखण्डखण्डनम् ॥ १८ ॥ ॥ येत्विमां शङ्कां परिहर्त्तुं पूर्वजीवकृतधर्माधर्मसापेक्षएवेश्वरः कारयति ॥ अन्यथा स्वर्गकामोयजेत ब्राह्मणोनहंतव्यइत्यादिविधिप्रतिषेधानर्थक्यं स्यात् ॥ ईश्वरस्यैव प्रवर्त्तकस्य निवर्त्तकस्य च सत्त्वात् ॥ अतोविधिनिषेधाभ्यामेव प्रवर्त्तमानं निवर्त्तमानं चेश्वरः प्रवर्त्तयति निवर्तयति च ॥ कस्यचिद्विहिते प्रवृत्तिः कस्यचिन्न कस्यचिन्निषिद्धान्निवृत्तिः कस्यचिन्नेत्यत्राऽपि पूर्वपूर्वतादृक्कर्मैव निमित्तं ॥ प्रवाहस्याऽनादित्वात् ॥ अतोनाऽकृताऽभ्यागमोजीवइतिवदन्ति ॥ तेषामनीश्वरवादएवाऽऽपद्यते ॥ नच कर्मणोजडत्वेन फलसमर्पकत्त्वाऽसम्भवात्तत्समर्पकत्वेनेश्वरसिद्धिः ॥ अन्यथाऽनुपपत्त्या कल्प्यमानस्य तादृशस्यैव कर्मणः कल्पयितुं शक्यत्वात् ॥ ननु कृतप्रयत्नापेक्षस्तु विहितप्रतिषिद्धाऽवैयर्थ्यादिभ्यइति तत्त्वसूत्रात्तथोच्यतइतिचेत् ॥ न ॥ तदर्थानवबोधात् ॥ तथाहि पूर्वोक्तन्यायेन परात्तुतच्छ्रुतेरितिपूर्वसूत्रेणेश्वरादेव कर्त्तृत्वे निरूपिते प्रवर्त्तकत्वेन निवर्त्तकत्वेन चाऽभिमतविधिनिषेधवैयर्थ्यमापतितं ॥ तत्र नहीश्वरः साक्षात्कश्चन प्रवर्त्तयति निवर्त्तयति वा ॥ तत्तद्द्वारैव तथाकरोतीतितु समाधानं न सङ्गच्छते ॥ सर्वस्यैव सन्मार्गमात्रवर्त्तित्वाऽऽपातात् ॥ तथाच विधिनिषेधसत्त्वेऽप्यप्रवृत्तिनिवृत्त्योः सत्त्वेन तदुपपत्त्यर्थं पूर्वकर्मकल्पनं त्वनुपपन्नं ॥ प्रवाहस्याऽनादित्वेन पूर्वपूर्वकर्मणैव प्रवृत्तिनि-

वृत्त्युपपत्तौ विधिनिषेधवैयर्थ्यापातात्॥एवंच सति प्रामाणिकत्वा-ऽभावेनांऽधपरम्परापत्तियागादिकरणस्य धर्मत्वहानिश्च॥फलोद्दे-शाभावेन तज्जनकत्वानिर्वाहकापूर्वकल्पने प्रयोजनाऽभावेनैतस्य कर्मणोनष्टत्वेनाऽयिमकर्मप्रवृत्तिनिमित्तमपि निरूपयितुमशक्यं॥ एतत्समाधानाय प्रवर्त्तकत्वं निवर्त्तकत्वंच विध्यादेरेव॥ तौ जा-नतामप्यप्रवृत्त्यनिवृत्तीतु विचित्रेश्वरेच्छयेति वाच्यं॥ एवमपि सत्यावश्यकत्वाल्लाघवाच्चेश्वरेच्छैव तथाऽस्तु कृतं ताभ्यां॥ एव-श्चाऽन्धपरम्पराऽपि न सम्भवति॥ ईश्वरेच्छाजन्यत्वात्॥दृश्यतेऽ-पि हि विधिमजानतोऽपि बालस्य नैसर्गिकी धर्मप्रवृत्तिः॥ एव-मपि सति न निस्तारः॥ तथाहि॥ नहीश्वरः स्वतन्त्रपुरुषार्थत्वेन कर्म कारयिष्यति किन्तु स्वर्गादि साधयितुं॥ तथासति स्वस्यैत-द्दाने समर्थत्वाद्विहितनिषिद्धफलोपपत्तौ विहितनिषिद्धयोर्याग-ब्राह्मणहननयोर्वैयर्थ्यापत्तिः॥ नचाऽकृताऽभ्यागमदोषपरिहारा-य तथा करोतीति वाच्यं॥ स्वतोजीवस्य कर्तृत्वे हि तत्फलनिरू-पणे सदोषोन स्यान्नतु तादृशं फलं दातुं तादृक् कर्मकारणे॥स्वतः सर्वथैवाऽसमर्थत्वाज्जीवस्य कृतमप्यकृतप्रायमिति न तत्परिहार-इतीश्वराधीनं जीवकर्तृत्वं नोपपद्यतइतिचेत्तत्राह॥ कृतप्रयत्ना-पेक्षस्त्वित्यादि॥ अयमर्थः॥ एकोऽहंबहुस्यामिति प्रपञ्चेन रमणे च्छया हि भगवान् क्रीडार्थं कृतप्रयत्नः तदा क्रीडैव मुख्याऽन्य-त्सर्वमुपसर्जनीभूतं॥तथाच तदपेक्षोभगवान् विचित्ररसानुभवार्थ-मेवं यः करिष्यति तमेवं करिष्यामीति स्वयमेव मर्यादां चकार॥ स्वकृतसेतुपरीप्सयेति धर्मसेतूनांवक्ताकर्त्ताभिरक्षितेत्यादिवाक्य-श्रवणादेवमवसीयते॥ ततश्च स्वकृततद्रक्षणाय ज्ञापनाय च वेदं

चकार ॥ तथाच जीवोत्पादनसमयएवैनं जीवमस्मिन् देशेऽस्मि-
न् कालएतत्प्रयुक्तप्रवृत्तिनिवृत्तिमन्तं विधायैतदेतत्फलं दास्यामी-
त्यामोक्षं प्रतिजीवं विचारितवानिति तदनुसारेणैव ते तथा भव-
न्तीति ॥ एवंप्रकारेण कृतोयः क्रीडार्थं प्रयत्नउद्यमोजीवादिवैचि-
त्र्यादिकरणेन तदपेक्षस्तदधीनएव कारयति भगवान् ॥ कुतएत् ॥
यतोयागादेर्विहितस्य प्रतिषिद्धस्य विप्रहननादेः स्वर्गनरकसाध-
नत्वेनाऽवैयर्थ्यमेवमेव भवेत्॥अन्यथेश्वरस्यैव कारयितृत्वे चोक्त-
न्यायेन तद्वैयर्थ्यं स्यात्॥आदिपदाद्विनाऽपि कर्मतत्फलदानमपि-
नातएव॥अतएव श्रुतिरपि कर्मकारणे फलदानेच्छामेव हेतुत्वेना-
नुवदति यमुन्निनीषत्यधोनिनीषतीति॥आचार्यास्तु यथा पुत्रं य-
तमानं बालं वा पदार्थगुणदोषौ वर्णयन्नपि तत्प्रयत्नाभिनिवेशं
पश्यति तथैव कारयति फलदानार्थं श्रुतौ कर्मापेक्षाकथनात्फल-
दाने कर्मापेक्षः कर्मकारणे जीवकृतप्रयत्नापेक्षः प्रयत्ने तत्कामा-
पेक्षः स्वर्गादिकामेच लोकप्रवाहापेक्षः कारयतीति न ब्रह्मणि दो-
षमन्धोऽपि ॥ नचैवमनीश्वरत्वं ॥ मर्यादामार्गस्य तथैव निर्माण-
त्वात् ॥ यत्र त्वन्यथा तत्र पुष्टिमार्गाङ्गीकारइत्याहुः ॥ अयमपि
पक्षः स्वकृतमर्यादायाएव हेतुत्वेन कथनान्मर्यादाकरणे च क्री-
डेच्छामृते हेत्वन्तरस्याऽसम्भवादस्मदुक्तान्नातिरिच्यते ॥ तस्माद-
स्मदुक्तएव मार्गोन त्वदुक्तः ॥ किञ्च क्रियापूर्वकालीनात्मधर्म-
स्यैव प्रयत्नशब्दार्थत्वेन वक्तुमुचितत्वान्नाधर्मधर्मौ तद्वाच्यौ ॥ कि-
ञ्च त्वदुक्तप्रकारे विधिनिषेधाऽवैयर्थ्यादिभ्यइत्येव स्यान्नतु विहि-
तेत्यादीति दिक् ॥ १९ ॥ ॥ अथ येत्विमांशङ्कांपरि हर्तुमित्या-
दिर्विहितेत्यादीतिदिगित्यन्तएकोनविंशः खण्डः खण्ड्यते॥ ॥अ-

त्र यत्तट्टीकाकारेण कर्मापेक्षेश्वरस्य कारयितृत्वमतं पूर्वमीमांसकानामित्युक्तं तत्तु भ्रमाज्जैमिनिनेश्वरस्याऽनङ्गीकृतत्वात् ॥ धर्मन्तुजैमिनिरतएवेति सूत्रव्याख्यायां तद्गुरुणापि तथैव प्रलपितत्वात् ॥ तदीयग्रन्थमात्रे यतमानावस्तुतोव्यासोक्तिश्रद्धालवः परं मङ्गलाचरणमस्मद्रीत्या चरन्तीति बोध्यम् ॥ एवञ्च तेषामनीश्वरवादएवेत्येतद्भाष्यव्याख्यायाम् कर्मसापेक्षेश्वरकल्पनापेक्षयेश्वराऽनपेक्षकर्मकल्पनस्य लघुत्वादिति हेतुकथनमपि टीकाकारस्य परास्तम् ॥ इष्टापत्तेर्मीमांसकैर्वक्तुंशक्यत्वात् ॥ मूलस्यापि मीमांसकाभिप्रायेण प्रवृत्तौतु सएव दोषः ॥ कर्मापेक्षफलदत्वमते यथा नानीश्वरवादप्रसक्तिस्तथोक्तं तृतीयश्लोकव्याख्यायाम्॥तादृशस्यैव कर्मणइत्यत्र तादृशशब्देन यदि यथोचितफलसमर्पणसमर्थमित्युच्यते तर्हिलोकविरोधो जडस्य तादृशतायालोकेऽभावात् ॥ कल्पनायादृष्टानुसारित्वनियमाच्च॥यदीश्वराद्व्यतिरिक्तश्चेतनस्तर्हि नान्योऽतोऽस्तिद्रष्टेत्यादिश्रुतिविरोधः ॥ तस्मात्कर्मणईशप्रसादादिकं प्रति हेतुत्वमिति कल्प्यतेऽन्यथानुपपत्त्येति न काप्यनुपपत्तिः॥फलमतउपपत्तेरिति सूत्रकारउपपत्तिपदं प्रयुञ्जानउपपत्तेरीदृशविषयत्वमूचे ॥ तादृशेशप्रसादादिना च प्रवृत्तिनिवृत्ती इति न विधिनिषेधवैयर्थ्यं॥प्रवर्तकपूर्वकर्मार्थं तदपेक्षणात्॥तथाच पूर्वकर्मापेक्षामेवोत्तरकर्मप्रवृत्ति भगवानाह स्वभावजेनकौन्तेयनिबद्धःस्वेनकर्मणा कर्त्तुंनेच्छसियन्मोहात्करिष्यस्यवशोऽपितत् इति स्वभावस्तुप्रवर्त्तते इतिच ॥ स्वभावः पूर्वकर्म प्रवर्तते प्रवर्त्तयति अन्तर्भावितणिजर्थः॥केषांचित्कर्मणां फलप्रयो-

जनककर्मप्रत्येवहेतुत्वात् ॥ स्वविषयकविधिनिषेधशास्त्राभावे कर्मणोधर्माधर्मत्वयोरसिध्या फलप्रयोजकत्वाऽभावेनाऽप्रवर्त्तकत्वे निवर्त्तकत्वे च शास्त्रयोर्विधित्वनिषेधत्वयोरनुपपत्त्या स्वरूपमात्रस्याऽकिञ्चित्करत्वेन स्वज्ञानद्वारा विधेर्निषेधस्य च प्रवर्त्तकतायां निवर्त्तकतायां च तद्वैयर्थ्यमापादयितुमशक्यं ॥ बालानां केषांचित्पित्रादिवाक्यं तद्वाक्यप्रयोजकज्ञानहेतुशास्त्रं वा प्रवृत्तिनिवृत्तिकरं केषाञ्चित्तु संस्कारद्वारा पूर्वजन्मसञ्चितशास्त्रज्ञानं तथेति नदोषः ॥ मन्दानां कर्मणां सहायकमन्तरेण फलदातृत्वाभावाच्च विध्यादिज्ञानापेक्षा॥तथाहि ॥ त्रिविधानि खलु कर्माणि भवन्ति अत्युग्राण्युग्राणिमन्दानिच अत्युग्राणान्त्विहैव फलम् ॥ अत्युग्रपुण्यपापानामिहैवफलमश्नुते इति वाक्यात्॥उग्राणां त्वसति प्रतिबन्धके सहायमन्तरेण जन्मान्तरे तान्येव प्रारब्धपदवाच्यानि ॥ मन्दानां त्वितरसाहाय्येन फलदातृत्वम्॥अवश्यमेवभोक्तव्यं कृतंकर्मेतिवाक्ये कर्मपदेन प्रारब्धं गृह्यते ॥ अवश्यमित्यस्य सहायकाऽभावेऽपीत्यर्थः ॥ तथाच प्रारब्धानां कण्ठतोमन्दानामवश्यंपदोपादानेन सिद्धिरित्यन्यत्र स्पष्टम् ॥ तानिच पुनस्त्रिविधानि पुण्यपापयोः प्रवर्त्तकानि तत्र प्रवृत्तिप्रतिबन्धकानि भोगदानिच ॥ एवञ्च विधिनिषेधौ जानतामपि प्रवृत्तिनिवृत्त्यभावौ तु तत्तत्प्रतिबन्धककर्मप्रयुक्तेश्वरेच्छावशाद्वा पूर्वकर्माभावप्रयुक्तेश्वरेच्छाभावाद्वेति बोध्यम् ॥ लाघवन्त्विदमप्रयोजकं॥वैषम्यादिदोषग्रस्तत्वात् ॥ फलमुखस्य कल्पनागौरवस्यादोषत्वाच्च ॥ अन्यथा शून्यवादापत्तिरित्युक्तम् ॥ ईश्वरेच्छायाः प्रयोजकत्वेत्वन्धपरम्परैव ॥ विध्याद्यनपेक्षत्वात् ॥ बालेषु नैसर्गिकप्रवृत्तिदर्शनस्य त्व-

थैवोक्तत्वात् ॥ यत्तु जीवसृष्टिकाले कृतोयोमर्यादारूपोयत्नस्त-
स्य सत्यत्वार्थं यागादिसाफल्यमित्युच्यते ॥ तन्न ॥ त्वदुक्तरीत्या
फलस्याऽपि प्रतिजीवं तदैव विचारिततया कर्मणोऽकरणेऽपि त-
त्सम्भवेन कर्मकरणविषयकेच्छायानिष्फलत्वात् ॥ इच्छामात्रेण
कर्मणः फलं जायतइति त्वदुक्त्या सिध्यति ॥ तत्रच व्यतिरेका-
भावे कर्मणोऽन्यथासिद्धिरेव दुग्धंप्रतिगोकर्णमूलस्येव ॥ ईश्वरे-
च्छाभावेनैवफलाभावस्यसिद्धत्वात्॥वास्तवसूत्रार्थस्तु पूर्वमुक्तोऽ-
वास्तवार्थोदूषितश्च॥तदधीनएव कारयतीत्युक्तव्यापारान्तरं निष्फ-
लं पूर्वसंङ्केतेनैव सर्वसामञ्जस्यादीदृशव्यापारविषयापि तदानी-
मिच्छाऽभूदित्यपि कल्पना व्यर्था गुर्वीच ॥ अस्मादपि त्वदुक्तसू-
त्रार्थोन युक्तः ॥ अन्यथेश्वरस्येत्याद्यप्यसङ्गतम् ॥ अन्यथाऽपि
सार्थकत्वस्योक्तत्वात् ॥ यमुन्निनीषतीत्यादिश्रुत्यर्थोप्युक्तःप्राक् ॥
एतेन साधनञ्चस्वरूपञ्चसर्वस्याहश्रुतिःफलम् नप्रवर्त्तयितुंशक्ता-
तथाचेन्नरकंनहि इति निबन्धाद्युक्तं प्रत्युक्तम् ॥ आचार्यास्तु इ-
त्युक्त्वा लिखिते ग्रन्थे पुत्रादिशब्दत्रयात्कथं द्वितीया ॥ वर्णयते-
र्ब्रुवतिसमानार्थत्वाभावाद्दुह्याजित्यस्मिन्परिगणने भाष्ये याचेः
पृथग्भिक्षेर्ग्रहणेनाऽर्थग्रहणस्याऽमूलत्वाच्च ॥ कथञ्च तथैवनिर्मा-
णत्वादितिभावप्रत्ययसङ्गतिः ॥ अस्मिन्मते पुत्रादेः प्रयत्नाभिनिवे-
शः किंकृतइति वक्तव्यम् ॥ यदीशकृतस्तर्हि अभिनिवेशकारणो-
त्तरं कारणमितिसिध्यति ॥ नचेदृशंतन्मतस्वारस्यम् ॥ यद्यन्यकृ-
तस्तर्हीश्वरस्य सर्वकर्तृत्वहानिः ॥ कामेच लोकप्रवाहाऽपेक्षइत्य-
नेन किं लोकप्रवाहेण जीवस्य यः कामस्तं सउत्पादयतीत्युच्यते
किंवा परमेश्वरोलोकप्रवाहं वीक्ष्य काममुत्पादयतीति॥नाद्यः॥लो-

कप्रवाहसत्त्वेऽपि विरक्तानां कामानुत्पत्तेस्तस्य तत्राहेतुत्वात्प्रमा-
णाभावाच्च ॥ नद्वितीयः॥तत्र लोकप्रवाहस्य हेतुत्वं प्रकल्प्य कर्म-
णोहेतुत्वबोधकानां दुर्दशाकरणापेक्षया कर्मणएव हेतुत्वकल्पना-
या उचितत्वात्सापेक्षताया अङ्गीकृतत्वात् ॥ किञ्चाऽस्मिन्मर्यादा-
मार्गे हरेरनीश्वरत्वम् अमर्यादामार्गरूपपुष्टिमार्गईश्वरत्वम् इति
स्थितम् ॥ एवंचाऽन्यतरस्याप्रामाणिकत्वं वाच्यं ॥ वस्तुनिर्विक-
ल्पस्यायुक्तत्वात् ॥ एतत्पक्षस्य स्वोक्तादनतिरिक्तत्वप्रदर्शनप्रया-
सोऽप्यनुपपन्नः ॥ स्वकृतमर्यादायास्तत्पक्षे हेतुत्वाकथनात् ॥ लो-
कप्रवाहपर्यन्तमेवतद्भ्रमणदर्शनात् ॥ लोकप्रवाहशब्देन मर्यादाग्र-
हणेतु श्लाघ्यं व्याख्याकौशलम् ॥ क्रीडेच्छायाअहेतुत्वम् अति-
रिक्तस्यच हेतुत्वमुक्तंप्राक् ॥ अदृष्टं नास्माभिरिष्यते इत्युक्तम् ॥
प्रयत्नशब्देन व्यापारविशेषोगृह्यते सोऽपि नात्मधर्मइत्यास्तां तावत्॥
अस्मन्मतेच कर्मणां हेतुत्वमिति विहितप्रतिषिद्धावैयर्थ्यादिभ्यइ-
ति सङ्गतम् ॥ विहितत्वादेस्तेषुसत्वात् ॥ इत्येकोनविंशखण्डखण्ड
नम् ॥ १९ ॥ ॥ ननु जीवानां नित्यभिन्नानामेव चेतनत्वाद-
णुत्वेनैकदेशस्थायित्वेन चांशत्वमौपचारिकमेवेतिचेत्॥मुख्येसम्भ-
वति गौणस्यान्याय्यत्वात्॥सूत्रकृतांऽशत्वप्रसक्तदूषणपरिहारानुप-
पत्तिश्च॥जीवानां स्वतन्त्रभिन्नत्वेचैकविज्ञानेन सर्वविज्ञानप्रतिज्ञा-
ऽनुपपत्तिः॥नच योगजधर्मप्रत्यासत्तिवत्तत्त्वज्ञानजनितालौकिक-
धर्मेणैव सर्वज्ञत्वोपपत्तिरिति वाच्यं॥यथासौम्यैकेनमृत्पिंडेनसर्वंमृ-
ण्मयंविज्ञातंस्यादित्यादिश्रौतदृष्टान्तानुपपत्तेः ॥ सदेवसौम्येदमग्र-
आसीदितिश्रुतिविरोधश्च ॥ ननु नात्माश्रुतेर्नित्यत्वाच्चताभ्यइ-
तितत्त्वसूत्रविरोधः ॥ एतदर्थस्तु आत्मा जीवोनोत्पद्यते कुतः अ-

श्रुतेः देवदत्तोजातइति देहोत्पत्तिरेवश्रूयते नात्मनः ॥ किञ्च नि-
त्यत्वादपि नोत्पत्तिर्जीवस्य संभवति ॥ कुतोऽस्यनित्यत्वं तत्राह ॥
ताभ्यः श्रुतिभ्यः इतीतिचेत् ॥ अत्रेदं प्रतिभाति ॥ यथाग्नेःक्षुद्रा-
इत्यादिश्रुतीर्विचारयन्स्वयमेव जीवस्यांशत्वमुक्त्वा यत्पश्चादुत्प-
त्तिं निषेधति सूत्रकारः तेन विस्फुलिङ्गन्यायेन जीवस्य व्युच्चरणं
नोत्पत्तित्वेन सूत्रकारस्याऽभिमतं॥तदा परिच्छिन्नस्य शरीरस्या-
ऽभावेन तस्मिन् जीवाऽऽगमनस्याऽप्यभावोनोत्पत्तिस्वरूपाभावा-
त्॥तदुक्तमनित्येजननंनित्येपरिच्छिन्नेसमागमःनित्यापरिच्छिन्नत-
नौप्राकट्यंचेतिसात्रिधेति॥तथाचानित्यानां प्राणादीनां प्रादुर्भावए-
वोत्पत्तिरिति तेषामेवोत्पत्तिरुक्ता ॥ जीवानां ब्रह्मणः सकाशाद्वि-
भागे तदंशत्वेच वाच्ये तद्बोधत्वं जानन्ती श्रुतिरंशत्वमंशिनः स-
काशाद्विभागवत्त्वमंशिनोंऽशान्महत्त्वं पुनरंशस्यांऽशिनि प्रवेशयो-
ग्यत्वं प्रवेशे सत्यभेदप्रतीतिविषयत्वं पुनर्निर्गमनयोग्यत्वं चाऽग्नि-
विस्फुलिङ्गे प्रसिद्धमिति सर्वधर्मबोधसौकर्यार्थमग्निविस्फुलिङ्गदृ-
ष्टान्तेनोक्तवती॥प्रकृतेऽप्येवं दृश्यते जीवाद्ब्रह्मणोमहत्त्वं॥तदुक्तमधि-
कन्तुभेदनिर्देशादिति॥पुनःप्रवेशश्चोच्यते ब्रह्मैवसन्ब्रह्माप्येति॥ब्रह्म-
भावश्च भगवदुक्तसाधनकरणेन संतुष्टाद्भगवतः आनन्दप्राक-
ट्यात्स्वगुणरूपैश्वर्यादिप्राकट्याच्चेति ज्ञेयं ॥ इदमेवोक्तमस्मिन्नस्य-
चतद्योगंशास्तीतिसूत्रेण ॥ अर्थस्तु अस्मिन्नानन्दमये ब्रह्मण्यस्य
जीवस्य तद्योगं तद्रूपस्य योगं ब्रह्मभावापन्नस्य प्राप्तिं वदति फल-
त्वेनेति ॥ इदमेव ब्रह्मभूतःप्रसन्नात्मानशोचतिनकांक्षति समःसर्वे-
षुभूतेषु इत्याद्युक्त्वा भक्तिलाभाऽनन्तरं विशतेतदनन्तरमित्युक्तं
विजयरथकुटुम्बेन श्रीदेवकीपुत्रेण ॥ प्रवेशाऽनन्तरमभेदप्रतीतिम-

पि श्रुतिराह ॥ तथाहि ॥ सर्वेषां भगवत्येव लयः साक्षात्परम्परा-भेदेनाऽतोमोक्षस्थानं भगवानेवेतिनिरूपणार्थं यथासर्वासामपां-समुद्रएकायनमित्युपक्रम्य वागेकायनमित्यन्तदृष्टान्तार्थं निरूप्य यथासैंधवखिल्यउदकेप्रास्तउदकमेवानुलीयेतेत्यादिना च लये दृ-ष्टान्तं निरूप्य विज्ञानघनएवैतेभ्योभूतेभ्यःसमुत्थायतान्येवानुविन-श्यतिनप्रेत्यसंज्ञास्तीति लयं निरूप्य तन्निरूपणार्थं यत्रहिद्वैतमि वभवतितदितरइतरंपश्यतीत्युपक्रम्य विज्ञातारमरेकेनविजानीया-दित्यन्तेन लयाऽवस्थायां लीनस्य स्वस्मिन्नस्य भगवतोभिन्नत्वेन प्रतीतिराहित्यं न्यरूपयत् ॥ इममेवार्थं सूत्रकारोप्याह गतिसामा-न्यादिति ॥ गतिर्मोक्षः ॥ समानस्य भावः सामान्यं तस्मात् ॥ मो-क्षे जीवब्रह्मणोरभिन्नत्वेनैव निरूपणादित्यर्थः ॥ तेनाऽऽदिमध्याऽ-वसानेषु शुद्धब्रह्मणएवोपादानत्वात्सर्वेषां वेदान्तानां ब्रह्मणि सम-न्वयइति तत्र फलितं॥स्वाऽवतारसमये क्रीडार्थं साक्षाद्योग्यास्तएव भवन्तीति तानप्यवतारयतीति पुनर्निर्गमनयोग्यत्वं ॥ इदमेव मु-क्तोपसृप्यव्यपदेशादितिसूत्रेणोक्तं ॥ नच नसपुनरावर्त्तते अना-वृत्तिःशब्दादिति श्रुतिन्यायविरोधः ॥ एतस्य प्रमाणमार्गपरत्वात् ॥ इदंच पुष्टिमार्गाऽङ्गीकारे भगवान् करोति ॥ नोचेन्मर्यादायां प्रवे-शपर्यन्तत्वमेव ॥ तस्याऽतिशयिताऽनुग्रहविशेषमात्रसाध्यत्वेनाऽ-तिदुर्लभत्वात् ॥ तदुक्तं ॥ भगवान्भजतांमुकुंदोमुक्तिददातिकर्हि-चित्स्मनभक्तियोगमिति ॥ किञ्च संसारे ऽपुनरावृत्तिमाह श्रुतिः ॥ नहि तेषां ततः संसारः ॥ मुक्ताअपि लीलाविग्रहं कृत्वाभजन्तइ-ति वाक्याच्च॥सच चिरकालाप्तसमुदितप्राचीननिरतिशयितकृपा-फलसारनिरुपधिजचरणकमलानुरागविलासाभिलाषबीजासु त-

तोनिजपरिजननिरोधतःप्रियाऽवलोकननिमित्तंकृतप्रतिक्षणवि-
विधव्याजजनितगतागतकर्षितासु ततोदिवाप्रियवनगमनजनित-
विरहतरणितापतातप्यमानांतःकरणकेदारासु ततोनिशामुखेप्रि-
यागमनसंपन्नेष्टावलोकनसिंचनजनितहसितचलितविशदतरलरु-
चिरविलोचनयुगलविदितविविधनिरवधिरसभावाङ्कुरासु ततोऽति-
विपुलकलिंदजापुलिननभोवलयाऽऽगतनिजमुरलिकाकलनिनद-
गर्जिताऽऽनन्दितास्वेव कासुचिद्भूमिषु श्रीमन्नन्दराजकुमारनव-
जलदोनिजानन्दसुधां ववर्षेति तथैव सर्वत्र वर्षिष्यतीति न ज्ञातुं-
शक्यमतोमर्यादया तद्भजनमेव सर्वेषां कर्त्तव्यत्वेन स्थितं तेनैव
सर्वमिति दिक् ॥ एतच्च दशमस्कन्धविवरणे मृत्साभक्षणवरदाना-
र्थागमनादिस्थलेषु पितृचरणैरेव स्फुटं निरूपितमित्यलं विस्तरे-
ण ॥ यद्वा जीवत्वादिवदंशत्वमपि पृथग्धर्मोजीवे निरूप्यतइति
श्रुत्यादौ नाऽनुपपत्तिः काचित् ॥ २० ॥ . ॥ अथ ननुजीवाना-
मित्यादिर्नानुपपत्तिःकाचिदित्यन्तोविंशः खण्डः खण्ड्यते ॥ ॥
तत्र सूत्रकारेण तु प्रकाशादिवन्नैवंपरः स्मरन्तिच अनुज्ञापरिहा-
रौदेहसम्बन्धाज्ज्योतिरादिवदितिसूत्रैर्योदूषणस्य परिहारः कृतः स-
नांशत्वेन प्राप्तस्य किन्त्वभिन्नतया प्रसक्तस्य ॥ अभेदश्च नांऽश-
त्वेन संभवतीति विस्फुलिङ्गानां वन्ह्यभेदोविभागात्पूर्वंपरंवेति वि-
कल्प्य दूषितम्प्राक् ॥ सूत्रत्रयार्थस्तु यथाजीवोऽविद्यावेशवशा-
द्देहाद्यात्मभावमिव गत्वा तद्दुःखेन दुःख्यहमिति मन्यते नै-
वं परोऽविद्यावेशाद्यभावात् ॥ यथावियद्व्यापिसूर्यादिप्रकाशोङ्गु-
ल्याद्युपाधिसम्बन्धादृजुत्वादिभावमापन्नोऽपि वस्तुतस्तद्भावं नाऽऽ-
पद्यते ॥ स्मरन्तिच व्यासादयः परमात्मनोदुःखायमानत्वाऽभावं ॥

तन्मयःपरमात्माहिसानित्योनिर्गुणःस्मृतः नलिप्यतेफलैश्चापिपद्मप-
त्रमिवाम्भसेति ऋतौभार्यामुपेयात् गुर्वङ्गनांनोपगच्छेदित्यादयो-
ऽनुज्ञापरिहारशब्दवाच्याः देहादिसम्बन्धोऽविद्याकृतदेहादितादा-
त्म्याध्यासस्तस्मात् यथाऽग्निसूर्यादेरेकत्वेऽपि श्मशानाद्यमेध्यादि-
सम्बन्धिनः परिहारोनेतरस्यैवमिति ॥ यथाऽग्नेरित्यादिश्रुत्या नां-
ऽशत्वं बोध्यते किन्तूपाधिनिर्गमादाविर्भावइत्युक्तम् पूर्वम् ॥ जी-
वस्य व्युच्चरणं नोत्पत्तिरितितु न सङ्गतम् ॥ व्युच्चरन्तीत्येकस्यैव-
पदस्य सर्वत्र सम्बन्धेनप्राणादिषुवैलक्षण्याङ्गीकारस्याऽनुपपत्तेः ॥
तस्यपदस्याऽऽवृत्तौ लक्षणायां वाक्यभेदे च गौरवात् ॥ प्राणादि-
ष्वपि तथाऽङ्गीकारे वैलक्षण्योपपादनं व्यर्थं स्यादित्युक्तं प्राक् ॥
तदुक्तमित्यादिस्वोक्तिविरोधश्च॥अस्माकन्तु श्रुत्यर्थस्सर्वत्र समान-
एव॥पाश्चात्त्योबोध आत्मांशे औपाधिकोत्पत्तिविषयः॥शाखान्त-
रे तत्पाठाभावादिनेत्युक्तम् ॥ यत्तु टीकाकारः सदंशानांजडानां
स्वरूपान्यथाभावादनित्यत्वव्यवहारः चिदंशानां जीवानां तु ध-
र्ममात्रान्यथाभावान्नित्यत्वमित्याह॥तन्न॥मूलोक्तरीत्या पृथगंशत्व-
कथनस्य निर्मूलत्वात्॥जडस्वरूपान्यथाभावे तदभिन्नस्य सतस्त-
दभिन्नाभिन्नस्य जीवस्य च तथात्वापत्तेः॥धर्मधर्मिणोर्भेदे माना-
भावेन जीवानामपि स्वरूपान्यथाभावस्य दुष्परिहरत्वात् ॥ कि-
ञ्च सुवर्णस्य निर्विकारत्वपरस्वस्वजनस्वगुरुवचनविरोधः ॥ जीव-
विभागस्तु ब्रह्मणः परिच्छिन्नत्वं गमयेत् ॥ विभागोहि अपादान-
रहिते देशे गमनं तच्च विभुत्वे न सम्भवति ॥ खात्खगोविभक्त-
इत्यप्रतीतेः ॥ प्रदेशभेदेन तत्कल्पने तु श्रुतिः क्वापि प्रदेशवाचकं
पदमुपादद्यात् ॥ किञ्चैवं विभागस्यौपचारिकत्वं दुर्वारम् ॥ द्वि-

इप्राणायामस्य सुबोधत्वं स्पष्टोक्तेर्दुर्बोधत्वं वदंस्तूपहास्यएव ॥
अधिकन्तुभेदनिर्देशादित्यस्य त्वयमर्थः ॥ सोऽन्वेष्टव्यःसविजि-
ज्ञासितव्यइत्यादिरूपात्कर्त्तृकर्मादिव्यपदेशरूपाद्भेदव्यपदेशाद्यद-
धिकमल्पज्ञत्वादिधर्मकाज्जीवादुत्कृष्टं मायोपाधिसम्पादितसर्वज्ञ-
त्वादिविशिष्टं तज्जगत्कर्त्रिति ॥ इतरव्यपदेशाद्धिताकरणादिदोष-
प्रसक्तिरिति पूर्वसूत्रेणेतरस्य जीवस्य ब्रह्मात्मत्वव्यपदेशाद्ब्रह्मणश्च
जीवात्मत्वव्यपदेशात्तयोरभेदे ब्रह्मणः कर्त्तृत्वेऽपि जीवस्य कर्त्तृत्वप-
र्यवसानात्तस्य स्वहिताकरणमहितकरणं च दोषः प्रसज्यतइत्यर्थ-
केन पूर्वपक्षपरेण पूर्वसूत्रेणाऽभेदव्यपदेशादेव दोषप्रसक्तेरुक्तत्वा-
त् ॥ तथाचाऽभेदेऽपि मायिकभेदसत्त्वात्तत्त्वेनचोत्कर्षरूपाधिक्य-
सत्त्वात्तत्कर्तृ नतु जीवउत्कर्षाऽभावात् इति भावः॥ तथाचाऽधि-
कशब्दस्य परिमाणाधिक्यपरत्वाभिप्रायेण महत्त्वपरत्ववर्णनमस-
ङ्गतम् ॥ अस्मदर्थसमानार्थपरकतद्गुरूक्तिविरुद्धञ्च॥अधिकशब्दव-
न्महच्छब्दस्याऽप्युत्कृष्टार्थकत्वेतु दृष्टान्तेऽनुत्कृष्टाग्नेरप्युत्कृष्टवि-
स्फुलिङ्गदर्शनेनाऽभिमताऽसिद्धिः ॥ अपीतिर्गमनार्थकोनतु लय-
त्वेनाऽभिमतोयः प्रवेशस्तदर्थकोऽकर्मकतापत्तेः ॥ दृष्टान्ते तथो-
क्तिस्त्वसङ्गतैव ॥ पुनरपादानेनावयवावयविभावानुत्पत्तेः ॥ दार्ष्टा-
न्तिकेतु त्वद्गुरूक्त्या स्यात् ॥ भगवदुक्तसाधनं यदि ज्ञानं तर्हि न
विरोधस्तमेवविदित्वाऽतिमृत्युमेतीति श्रुतेः ॥ यद्यन्यत्तर्हि नान्यः-
पन्थाविद्यतेयनायेतिश्रुतिविरोधः ॥ सन्तुष्टाद्भगवतइत्यादितु क्र-
ममुक्तौ स्यान्नतु कैवल्ये मानाभावात् ॥ नप्रियाप्रियेस्पृशतइत्या-
दिश्रुतिविरोधाच्च ॥ अस्मिन्नस्यचेतिसूत्रे तद्रूपस्य योगं ब्रह्मभा-

त्वापन्नस्य प्राप्तिमित्यत्र यदि तवाऽपि नद्दव ब्रह्मप्राप्तिरित्येवार्थः कथंचित्सम्मतस्तर्हि न दोषः ॥ यदि पूर्वं ब्रह्मभावोभवति पश्चा- त्प्राप्नोतीत्यर्थस्तर्हि निर्मूलं गौरवम् ॥ विशतेइत्यस्याभेदं गच्छती- त्यर्थो ब्रह्माप्येति पुरुषमुपैतिदिव्यमित्यादिश्रुतेः ॥ दृष्टान्ते प्रवेशा- नन्तरमपादानेनाभेदप्रतीतिर्नास्त्येव ॥ समानाभिहाराद्भेदाऽप्रती- त्या कस्यचिदभेदभ्रमः स्यात् ॥ दार्ष्टान्तिकेत्वभेदइष्टोनतु तथा प्रतीतिर्नवा प्रवेशेन पौर्वापर्यं ॥ मानाऽभावात् ॥ भिन्नत्वेन प्रती- तिराहित्यंत्विष्यतएव ॥ विज्ञातारमरेकेनेतिश्रुत्याऽपि प्रतीत्यभाव- एवोक्तोनतु अभेदप्रतीतिरपि ॥ उक्तश्च त्वयापि भिन्नत्वेन प्रती- तिराहित्यं न्यरूपयदिति ॥ तथाच पूर्वापरविरोधः ॥ पूर्वप्रतिज्ञा- तार्थोपपादनाय तथाहीत्युपपादनस्यासङ्गतिश्च॥इममेवार्थमित्या- द्युक्त्वा सूत्रोपन्यासोऽपि प्रतिज्ञाविरोधापादकः ॥ सामान्यपदस्य तत्र तुल्यतार्थत्वात्तुल्यत्वस्य भेदघटितत्वात् ॥ नच समानाधिक- रणादिष्विवाऽत्राऽपिसमानशब्दस्यैकार्थकतया सामान्यशब्दस्य न तुल्यतार्थतेति वाच्यम् ॥ मोक्षे सर्वस्याऽपि भगवताऽपि तुल्यत्वा- दिति तत्सूत्रस्थस्वगुरूक्तिविरोधात् ॥ एवं त्वन्मते त्वद्गुरूक्तसप्तमी- समासोऽपि दुर्लभः ॥ सप्तमीतियोगविभागस्याऽनाकरत्वात् ॥ भ- गवतेत्यनेन साकाङ्क्षतयाऽसामर्थ्याच्च ॥ तस्माद्गतेर्ज्ञानस्य सामान्यं तुल्यता तस्मादित्यक्षरार्थः सूत्रस्य ॥ समानैवहि सर्वेषु वेदान्तेषु चेतनकारणावगतिः ॥ यदि तार्किकसमयइव वेदान्तेष्वपि भिन्ना कारणावगतिरभविष्यत्तदा प्रधानकारणवादाऽनुरोधेनाऽपि सृष्टि- श्रवणमभविष्यदितिभावः ॥ ब्रह्मणोजीवोपादानत्वोक्तिस्त्वसङ्गतै- वोभयोरनित्यत्वापत्तेः ॥ नजायतेम्रियतेवा इत्यादिश्रुतिस्मृतिवि-

रोधाच्च ॥ क्रीडार्थं तानवतारयतीति न युक्तं ॥ क्रीडायाअसम्भवस्योक्तत्वात् ॥ अवतारसमयइव सर्वदा ईश्वरस्य त्वन्मते क्रीडायाः सत्त्वेन संसाराऽविनिवृत्तिप्रसङ्गाच्च ॥ अवतारसमये निर्गतानां न संसारइत्यत्र मानाभावेन नसपुनरावर्त्तते अनावृत्तिःशब्दादित्यादिश्रुतिसूत्रादिविरोधाच्च ॥ मर्यादामार्गपराणि तादृशश्रुत्यादीनि नतु पुष्टिमार्गपराणीति त्वसङ्गतं ॥ तादृशमार्गभेदस्य तादृशव्यवस्थायाश्च निर्मूलत्वात् ॥ एवञ्च चतुर्थोऽध्यायस्थतादृशव्यवस्थापरत्वद्गुरूक्तिरपि निर्मूला ॥ किञ्च मुक्तोपसृप्यव्यपदेशादित्यत्र निस्सरणं कस्य शब्दस्याऽर्थोयतस्तत्सूत्रं निर्गमने प्रमाणतयोपन्यस्यते ॥ तदर्थस्तु मुक्तैर्नामरूपविमुक्तैरुपसृप्यं यत्तस्य व्यपदेशादिति ॥ यस्मिन्द्यौःपृथिवीत्यादिद्युभ्वाद्यायतनत्वोक्तिप्रकरणे तथा विद्वान्नामरूपाद्विमुक्तःपरात्परम्पुरुषमुपैतीतिदिव्यमित्युक्तं ॥ नच मुक्तोपसृप्यत्वं प्रधानादीनां प्रसिद्धमिति मुक्तोपसृप्यव्यपदेशान्न द्युभ्वाद्यायतनं प्रधानं किन्तु ब्रह्मेत्युक्तं ॥ एवञ्चात्र कथं निर्गमप्रतिपादनम् ॥ मुक्त्यपेक्षया भक्तेराधिक्यं तु प्राङ्निराकृतम् ॥ यदिच मुक्ताअपि लीलाविग्रहं कृत्वा हरिं भजन्तइत्येतादृशार्थे तात्पर्यवत्काऽपि वाक्यं लभ्येत प्रक्षिप्तत्वं च तत्र न निश्चीयेत तर्हि तत्क्रममुक्तिपरं ज्ञेयम् ॥ कैवल्यमुक्तौ अशरीरंवावेत्यादौ शरीरत्वावच्छिन्नाऽभावबोधनात् ॥ एतेन सचेत्यादि दिगन्तं प्रत्युक्तम् ॥ प्रमाणाभावाच्च ॥ किञ्च यथाऽग्नेरितिश्रुतौ स्वकपोलकल्पितैरंशत्वविभागवत्त्वादिभिर्धर्मैः साधर्म्यं विस्फुलिङ्गजीवयोरिष्टमिति यत्त्वयोच्यते तन्नयुक्तं ॥ व्युच्चरणरूपसमानधर्मस्योपात्तत्वादित्युक्तम्प्राक् ॥ अन्यथा प्राणादेरपि तदापत्तेस्त-

स्माज्जीवानां ब्रह्मणः सकाशादित्यादिर्विस्तरेणेत्यन्तोग्रन्थः प्रला-पएव ॥ जीवस्यांशत्वं श्रुतौ क्वापि नपठ्यते ॥ किञ्च यदि धर्मवि-शेषः स तर्हि जीवस्य ब्रह्मणा कः सम्बन्धइति प्रश्नोनोद्धृतइति व्यर्थः श्रमः ॥ किञ्च तादृशधर्मोविभुत्वादिसत्त्वेऽपि स्यादिति सर्वविप्लुतम् ॥ इति विंशखण्डखण्डनम् ॥ २० ॥ ॥ ननु पूर्णे पुरुषोत्तमे जीवस्य प्रवेशोऽशक्यनिरूपणः ॥ सहि बहिःस्थस्या-ऽन्तर्गमनरूपः तस्यच परिच्छिन्नएव पदार्थे सम्भवः ॥ तथाच ब्र-ह्मणोऽपरिच्छिन्नत्वात्तदसम्भवइतिचेत्॥हन्तैवं विभागांशत्वादिक-मप्यशक्यनिरूपणं जीवस्य ॥ तत्तु श्रुतिन्यायाभ्यां निर्णीयतइ-तिचेत् तुल्यं ॥ वस्तुतस्तु यथा सर्वतः पाणयः पादाः अन्ताश्च श्रु-त्या ब्रह्मणि निरूप्यन्ते तथा प्रवेशनिर्गमोक्त्यान्तस्त्वबहिष्ट्वे अपि तत्र स्तइति मन्तव्यं एवंसति यथेमे तथा प्रवेशनिर्गमौ अपि इति नोक्ताऽनुपपत्तिः ॥ किञ्च उपाधिपक्षे प्रवेशः सुतरामसङ्गतः ॥ त-दोपाधेर्नाशाङ्गीकारात्कस्य प्रवेशः स्यात् ॥ ननु प्रवेशं निरूपय-ति श्रुतिरिति सत्यं परमेतद्वाक्यार्थबोधएव न सम्भवति अयो-ग्यताज्ञानादिति चेत् ॥ अत्रेदंविचार्यते ॥ दोषोहि शब्दगतः श्रो-तृगतोवा भवेत् ॥ अत्रच शब्दस्याऽदुष्टत्वाच्छ्रोतृगतएव स वाच्यः तथाचापगताविद्यानां ब्रह्मविदामेवाऽनुभूतिविषयमुपदेशैकसम-धिगम्यं ब्रह्म निरूपयन्तीश्रुतिरविद्यावलिप्ताऽल्पबुद्धीनां ग्रहणा-ऽसामर्थ्येनाऽयोग्यताज्ञानेन नान्यथयितुं शक्या ॥ नह्युपदेशैकग-म्यं हीरकमन्त्रादेर्माहात्म्यं साधारणजनाऽनुभवाविषयइत्युपासि-ततद्गुरूणामप्यविषयः॥नवा पित्तदूनरसनेन्द्रियस्येदंप्रथमतया सि-तां भक्षयतः सितामिष्टेति वाक्ये अयोग्यताज्ञानं वाक्यार्थमन्य-

थयितुमीष्टे॥ नवा तस्यैव दोषापगमे सति अयोग्यताज्ञानसम्भ- वस्तत्र ॥ अतएव आचार्यवान्पुरुषोवेदेतिश्रुतिः ॥ अतोयथा- श्रुतमेवमन्तव्यं ॥ अतएव सूत्रकारोऽपि जगति ब्रह्मणउपादानत्वे कृत्स्नप्रसक्त्यादिशङ्कापरिहाराय श्रुतेस्तु शद्बमूलत्वादित्याह ॥ ॥ २१ ॥ ॥ अथ ननु पूर्णइत्यादिः शब्दमूलत्वादित्यन्त एक- विंशः खण्डः खण्ड्यते ॥ ॥ विभागादिकं सर्वं जीवस्याऽनुपप- न्नमित्युक्तम् ॥ सर्वतःपाण्यादयउपाधिना ज्ञेयाः प्रवेशस्त्वभेदाप- त्तिर्निर्गमस्तु नास्त्येवेत्यप्युक्तम् ॥ अतोऽन्तस्त्ववहिष्ट्वेच निर्मूले ॥ किञ्च पूर्णत्वेऽपि अन्तर्बहिर्भावोगुरुवाक्येन प्रमाणानां विरोधान- ङ्गीकारेण यथाऽङ्गीक्रियते तथाऽन्तस्त्वाद्यभावेऽपि प्रवेशनिर्गमाव- पि स्वीकुरु त्यज वान्तस्त्वादिकल्पनाव्दथाप्रयासम् ॥ किञ्चाप्रवा- हविशेषादिरूपेदूदन्तादिशब्देषु नदीव्यवहारवदपरिच्छिन्नरूपे ब्र- ह्मणि अन्तस्त्वादिव्यवहारस्ते परिभाषाप्रयुक्तः स्यात् ॥ आचार्यो- पदेशात्पाक्कविद्यायाः सत्त्वाच्छाब्दानुपपत्तिस्तदवस्थैव ॥ बाध- ज्ञानस्य शाब्दप्रतिबन्धकत्वात् ॥ हीरकादिषु तु अज्ञानमेव नतु बाधज्ञानम् ॥ स्थलान्तरदृष्टसहचारज्ञानस्य व्यभिचारशङ्कयाऽन- नुमापकत्वात् ॥ सितामाधुर्यमपि त्वदुक्तविधेन शब्देन ज्ञातुं न शक्यम् ॥ पश्चात्तु तस्य तत्र प्रत्यक्षं न शाब्दमिति नाऽनुपपत्तिः ॥ दोषोहिशब्दगतइत्यादिः सम्भवस्तत्रेत्यन्तोग्रन्थो यजमानः प्रस्त- रइत्यादौ लक्षणादर्शनाद्दुष्टइत्यसकृदवोचाम ॥ आचार्यवान्पुरु- षोवेदेति तु श्रवणाद्यङ्गतया गुरूपसत्तिं विधत्ते नतु ब्रह्मज्ञानाऽसा- धारणकारणतया ॥ स्वीकृताऽऽचार्याणामपि तज्ज्ञानाऽदर्शनात् ॥ आत्मावाअरेद्रष्टव्यःश्रोतव्यइत्यनेन आत्मज्ञानमुद्दिश्य श्रवणादे-

रुपदेशाच्च न गुरूपसत्तिमात्राज्ज्ञानं ॥ तन्त्वौपनिषदम्पुरुषमित्या-
दिश्रुतिविरोधाच्च ॥ श्रुतेस्त्वित्यस्यायमर्थः ॥ उपाधितोजगत्कार-
णमपि ब्रह्म वस्तुतोनिरवयवं श्रुतोनिरवयवत्वबोधकश्रुतेः ॥ ब्रह्म-
णःशब्दमूलत्वात् शब्दमूलकत्वादित्यर्थः ॥ एतदेव भगवत्पादै-
र्विस्तरेणोपपादितं शारीरकमीमांसायां ॥ यत्तु एतत्पित्रा तत्रत्यग्र-
न्थस्य स्वमत्युद्भावितत्वं प्रोक्तं तत्तु श्रौतमर्यादानभिज्ञानात् श्रौत-
सिद्धान्तानभिज्ञानाच्च॥अतएव गालिमात्रदानं कृत्वा विरराम न-
तु किञ्चिद्दूषणमुक्तवान्बुद्धिदौर्बल्यात्॥दृश्यन्तेहि दुर्बलबुद्धयोबालाः
पराजितागालिप्रदानमेव कुर्वन्तइत्यलम् ॥ इत्येकविंशखण्डखण्ड-
नम्॥२१॥ ॥ननु प्रवेशकथने जीवस्य व्यापकत्वव्याहतिरितिचेत्॥
हन्तैवं शशस्याऽपि निजशृङ्गभङ्गभिया तनूदरकन्दराऽप्रवेशः॥यतो-
ऽणुरेव जीवः॥कुतएतत् श्रुतितएव॥तथाहि॥आराग्रमात्रोह्यवरोपि-
दृष्टः बालाग्रशतभागस्यशतधाकल्पितस्यतु भागोजीवःसविज्ञेयः-
सचानन्त्यायकल्पते एषोऽणुरात्माचेतसावेदितव्योयस्मिन्प्राणःप-
ञ्चधासंविवेशेत्यादिभ्यः॥स्यादेतत्॥नाणुर्जीवोवक्तुं युक्तः श्रुतिस्मृ-
तिविरोधात् ॥ तथाहि ॥ सवाएषमहानजआत्मायोयंविज्ञानमयः
प्राणेषु आकाशवत्सर्वगतश्चनित्यः नित्यःसर्वगतःस्थाणुरित्यादिषु
व्यापकत्वश्रवणात् तत्त्वमसीत्यादिभिर्ब्रह्माभेदनिरूपणाच्च ॥ न-
हि तत्त्वतोऽणोर्व्यापकाऽभेदः सम्भवति॥किञ्च जीवस्याऽणुत्वे स-
र्वशरीरगतचैतन्यानुपलम्भप्रसङ्गः॥नच यथैकदेशस्थचन्दनबिन्दु-
शैत्योपलम्भः सकलशरीरव्यापकतया भवत्येवमेकदेशस्थजीव-
चैतन्योपलम्भोऽपीतिवाच्यं ॥ दृष्टान्तएकदेशस्थायित्वस्य प्रत्यक्ष-
तोनिश्चितत्वेन दार्ष्टान्तिकेच सन्दिग्धत्वेनोभयोर्वैषम्यात् ॥ नच

सर्वशरीरव्यापिचैतन्यं स्वधर्म्यधिकदेशवृत्ति विसर्पिगुणत्वात् शरीरैकदेशस्थचन्दनजन्यसर्वशरीरव्यापिशैत्यवदित्यनुमानेनाऽणुत्वं साधयितुं शक्यं ॥ हेत्वसिद्धेः साध्याऽविशिष्टत्वाच्च ॥ एकदेशवृत्तित्वे सिद्धे जीवस्य चैतन्यस्य विसर्पिगुणत्वसिद्धिः तस्मिन् सिद्धे च तत्सिद्धिरित्यन्योन्याश्रयाच्च ॥ चन्दनसूक्ष्मावयवानां सर्वदेहप्रसर्पणेनापि शैत्योपलम्भसम्भवेन दृष्टान्तासिद्धेश्च ॥ एतेनैव चम्पकगन्धोऽपि प्रत्युक्तः ॥ नहि गुणिनं विना गुणसंभवः ॥ अतिप्रसङ्गात् ॥ चम्पकदेशाधिकदेशे गन्धग्रहस्तु तदवयवानामपि वायूपनीतानां तत्रसत्त्वेन ॥ नचैवं तन्नाशापत्तिः ॥ भोग्यादृष्टेनैव तदवयवपूरणसंभवात् ॥ अन्यथाऽनुपपत्तेर्बलिष्ठत्वात् ॥ दृष्टाऽसंभवे सत्यदृष्टकल्पनायान्याय्यत्वात् ॥ नच मणिप्रभावत्तदुपपत्तिः ॥ तस्यास्तज्जातविरलसजातीयद्रव्यान्तरत्वात् ॥ एतेनैव प्रदीपसूर्यादयः प्रत्युक्ताः ॥ श्रुतावणुत्वनिरूपणं तु दुर्विज्ञेयत्वाऽभिप्रायं ॥ तस्मान्नाणुर्जीवः ॥ अत्रवदन्ति ॥ तत्त्वसूत्रानुसारेण वेदार्थस्यनिरूपणे ॥ जीवोऽणुरेवसंसिध्यत्यन्यथात्वन्यथैवहि ॥ भवेदेतदेवं यदि सवाएषमहानित्यादिभिर्जीवोनिरूप्यते ॥ तदेवतु न संभवति ॥ ब्रह्मप्रकरणे पठितत्वात् ॥ अतोबादरायणोप्याह ॥ नाणुरतच्छ्रुतेरितिचेन्नेतराधिकारादिति ॥ नचैवं सकलशरीरगतचैतन्योपलम्भानुपपत्तिः ॥ चम्पकगन्धवदेवोपपत्तेः ॥ नच गुणिनं विना गुणाऽसंभवान्नैवमिति वाच्यं ॥ सम्बन्धिनं विनाऽपि सम्बन्धस्यसमवायस्याङ्गीकारोयथाऽक्षपादीयानां तथाऽत्रापि तदुपपत्तेः ॥ ननु रसादीनामप्येवमन्यत्रोपलम्भः स्यादितिचेत् ॥ स्यादेवोपलम्भोयदि स्वाश्रयाण्यपहायान्यत्रातिष्ठेयुः ॥ अथ द्रव्यं वि-

हाय गन्धस्याऽन्यत्र सत्त्वे द्रव्यसत्त्वस्य नियामकत्वाभावाद्रसादी-
नामप्यन्यत्र गमनं स्यादतोऽस्यावश्यं नियामकत्वेनाङ्गीकाराद्ग-
न्धोपलब्धिस्थले चम्पकावयवानामपि सत्त्वमङ्गीकर्त्तव्यमितिचे-
त्॥ननु समवायस्याऽपि तथात्वाङ्गीकारे सम्बन्धसत्त्वेसम्बन्धिसत्त्व-
स्य नियामकत्वाऽभावात्संयोगादीनामप्यतिरेकापत्तौ तत्समाधा-
नाय तस्य नियामकत्वेनाङ्गीकारात्समवायस्य च नित्यत्वेनाङ्गीका-
रात्तन्निर्वाहाय घटे नष्टेऽपि सूक्ष्मघटसत्वमङ्गीकुरु॥ननु जन्यसम्ब-
न्धसत्त्वएव सम्बन्धिसत्त्वस्य नियामकत्वमितिचेत् ॥ अत्राऽपि ग-
न्धातिरिक्तगुणे द्रव्यसत्त्वस्य नियामकत्त्वमिति तुल्यं॥ननु तत्र स-
म्बन्धिनामनित्यत्वात् सम्बन्धस्य नित्यत्वादन्यथानुपपत्त्या जन्य-
पदोपादानं॥अत्रान्यत्रोपलम्भानुपपत्तौ सत्यामपि तदवयवसत्त्वेनै-
वोपपत्तौ गन्धातिरिक्तमिति व्यर्थं विशेषणं गौरवादितिचेत्॥न॥प्रा-
माणिकत्वात्॥दृश्यते हि विविधचर्मपुटवेष्टितस्याऽपि मृगमदस्य ग-
न्धोपलम्भोवणिक्सार्थेषु ॥ नहि तत्र तदवयवनिर्गमाऽपूर्वतत्प्रवेशौ
सम्भवतः॥किञ्चैवं गन्धोपलम्भसमये प्रसारितमुखस्य तद्रसोपल-
ब्धिप्रसङ्गः॥तेषामवयवानां योग्यत्वात्॥अन्यथा गन्धोऽपि नोपल-
भ्येत॥गन्धस्यैवोपलम्भेनियामकाभावाच्च॥नन्वदृष्टमेव तथेतिचेत्॥
अहोगौरवभीतिर्वावदूकस्य ॥ यदवयवनिर्गमं पुनस्तदवयवपूरणं
तद्धेतोरदृष्टस्य च कल्पनं रसाद्यनुभवप्रतिबन्धकादृष्टान्तरस्य च
कल्पनं तदतोप्यसङ्कोचस्तुण्डस्य गन्धातिरिक्तेतिमात्रकथनेच स-
ङ्कोचः ॥ किञ्च उग्रगन्धस्य कस्यचित् कुसुमस्य लशुनादेर्वा स्प-
र्शमात्रेऽपि ततोमुहुर्मृत्स्नया क्षालनेऽपि करस्य न तद्गन्धापगमो-
ऽनुभूयते ॥ स्पर्शमात्रलग्नतदवयवानां सकृत्क्षालनेऽप्यसहिष्णूनां

सकृत्क्षालनेन स्थितिसम्भवः कुतस्तरां मुहुस्तथाकरणे॥अतोद्र-
व्याऽधिकदेशवत्त्वं गन्धस्य मन्तव्यं॥विनश्यदवस्थगुणानामनाश्रि-
तत्वेनाङ्गीकारोयथा तव तथा द्रव्याधिकदेशवृत्तित्वेनाऽनुभवेऽपि
कुरुष्व॥अतएव सूत्रकारोऽपि सिद्धं दृष्टान्तमाहेमामेवाशङ्कांपरिह-
र्त्तुमणुत्वसाधने व्यतिरेकोगन्धवदिति॥श्रुतिरपि यथावृक्षस्यसंपुष्पि
तस्यदूराद्गन्धोवात्येवंपुण्यस्यकर्मणोदूराद्गन्धोवातीति॥अत्रतदवय-
वासत्त्वनिरूपणार्थमेव दूरपदं॥दार्ष्टान्तिकेतु कीर्त्तेरेव गन्धत्वं तद-
साधारणधर्मादिसाधर्म्येण॥किञ्च हृदिह्येषआत्मासवाएषआत्मान्त्हृ
दियोयंविज्ञानमयःप्राणेषुहृद्यंतर्ज्योतिःपुरुषः गुहांप्रविष्टावित्यादि
श्रुतिभिर्हृदयदेशे जीवस्य स्थितिरुक्ता॥सात्वणुत्वएवोपपद्यते॥तद-
नन्तरञ्च स्वचैतन्येन सकलशरीरव्यापित्वं दर्शयति आलोमभ्यआ-
नखाग्रेभ्यइति ॥ एतेन सर्वमनवद्यं ॥ २२ ॥ ॥ अथ ननुप्रवेश-
कथनेइत्यादिरेतेनसर्वमनवद्यमित्यन्तोद्वाविंशः खण्डः खण्ड्यते ॥
॥ ॥ तत्र समवायस्याङ्गीकारएवाक्षपादादीनामसङ्गतइति स-
मवायाऽभ्युपगमाच्चेत्यादिना व्यासादिभिर्निरूपितं ॥ तादृशश्चेत्त-
वाऽप्यङ्गीकारस्तर्हि कात्नोहानिः ॥ विनश्यद्द्रव्याणां क्षणं गुणा-
स्तिष्ठंतीति निर्मूलम् ॥ प्रलयक्रमस्य विपरीतत्वात् ॥ वस्तुतस्तु इ-
दमपि पृथिव्यादिष्वेव ॥ गुणस्य तु गुणिना सहैव नाशोगुणगु-
णिनोरभेदात् ॥ अन्यत्सर्वं विस्तरेण प्राग्दूषितम् ॥ हृदयं तु बुद्धेः
स्थानमिति जीवे तद्देशत्वमौपचारिकम् ॥ इतिद्वाविंशखण्डखण्ड-
नम् ॥ २२ ॥ ॥ यत्तु चैतन्यस्य सर्वशरीरव्यापित्वे जीवोना-
णुः स्यात् ॥ चैतन्यमात्रस्वरूपत्वादेव तस्य ॥ औष्ण्यप्रकाशात्म-

कस्याग्नेरिवेत्यग्निदृष्टान्तेनचैतन्यात्मकत्वं जीवस्य साधयन्तोव्यापकत्वं वदन्ति केचित्॥न तद्विद्वदादरणीयं॥प्रज्ञया शरीरं समारुह्येति करणत्वेन प्रज्ञायाः श्रुतौ निरूपणात्तस्यच भेदएव युक्तत्वात्॥ तदेषां प्राणानां विज्ञानेन विज्ञानमादायेतिच श्रुतौ विज्ञानस्य कर्मत्वेन निरूपणाच्च विज्ञानं गुणएव ॥ अतएव सूत्रकारेणाप्युक्तं पृथगुपदेशादिति ॥ अपिच ॥ औष्ण्यमात्रस्यैव वन्हिस्वरूपत्वं न वक्तुं शक्यं मणिमन्त्रादिनौष्ण्याऽनुपलम्भेऽपि वन्ह्युपलम्भात् ॥ औष्ण्यशैत्यादेः स्पर्शधर्मत्वेन वह्नेर्द्रव्यत्वहानिश्च ॥ नापि प्रकाशात्मत्वं ॥ तप्तवारिस्थतदनुपलम्भप्रसङ्गादिति ॥ किंच सयदास्मात्शरीरादुत्क्रामतिसहैवैतैःसर्वैरुत्क्रामति येकेचास्माल्लोकात्प्रयान्तिचन्द्रमसमेवतेसर्वेगच्छन्तीतितस्माल्लोकात्पुनरेत्यस्मैलोकायकर्मण इतिश्रुत्युक्ता जीवस्य देहादुत्क्रान्तिः परलोकगतिश्च पुनरागतिश्चाऽणुत्वएव घटते नतु व्यापकत्वे॥ सयथामहाराजोजानपदान्गृहीत्वास्वेजनपदेयथाकामंपरिवर्त्ततैवमेवैषएतत्प्राणान्गृहीत्वास्वेशरीरेयथाकामंपरिवर्त्ततइति स्वयंविहृत्येत्यादिश्रुत्युक्तपरिवर्त्तनविहारावप्यणुत्वमृतेनोपपद्येते ॥ ननु तत्त्वमसीत्याद्यभेदबोधकश्रुत्या जीवोब्रह्मत्वेन निरूप्यते ॥ अणुत्वेतु तदनुपपत्तिरितिचेत् ॥ न ॥ औपचारिकत्वात् ॥ अमात्ये राजपदप्रयोगवत्॥नहि जीवे कश्चन स्वाभाविकोगुणोऽस्ति ॥ प्रज्ञाद्रष्टृत्वादयश्च भगवद्गुणाएव ॥ तथाच तद्गुणैरेवास्योत्तमत्वादंशत्वाच्च तद्व्यपदेशः ॥ जडवैलक्षण्यं च ततएव ॥ ननु कथमेवमवगम्यते औपचारिकमेव तदिति चेत्॥ अतएव सूत्रकारोऽपि न्यरूपयत्तद्गुणसारत्वात्तुतद्व्यपदेशइति ॥ तथाचाऽणुपरिमाणस्यैव जीवस्य पूर्वोक्तन्यायेन ब्रह्मणः सकाशा-

न्निर्गतस्य ब्रह्मणा स्वसेवार्थमेव निजैश्वर्यस्य निर्विषयत्वपरिहा-
राय तथा प्रकटीकृतस्यातएव सहजहरिदासस्य तदंशत्वेन ब्रह्म-
रूपस्य च निजनिसर्गप्रभुश्रीगोकुलनाथचरणकमलदास्यमेव स्व-
धर्मः तेनचाऽतिसंतुष्टः स्वयं प्रकटीभूय निजगुणांस्तस्मै दत्त्वा
स्वस्मिन्प्रवेशयति स्वरूपाऽऽनन्दाऽनुभवार्थमथवात्यनुग्रहे निकटे
स्थापयति ततोऽधिकरसदास्यकरणार्थमितिनिगर्वः॥ केचित्तु जी-
वाऽणुत्वभ्गवत्प्रवेशतत्साधनभगवद्भजनाद्यसहिष्णवोऽणुत्वसाध-
कोत्क्रान्त्यादिसूत्रदशकं पूर्वपक्षत्वेनोक्त्वा तद्गुणसारत्वात्तदितिसूत्रं
सिद्धान्तीयत्वेन वदन्तस्तदर्थंचोपाधिगुणरूपाणुत्वादिप्रयुक्तोजी-
वेऽणुत्वादिव्यपदेशइति निरूपयन्तोजीवस्य व्यापकत्वं साधयन्ति॥
तत्रेदमुच्यते॥ भवेदेतदेवं यद्यौपाधिकं जीवत्वं स्यात् तदेवतु न
संभवति श्रुतिस्मृतिन्याययुक्तिविरोधादिति पूर्वमेव निरस्तत्वात्॥
किञ्च बुद्ध्युत्क्रान्त्यादिभिरेव जीवस्योत्क्रान्त्यादिव्यपदेशोऽनुपप-
न्नः॥ नह्युपाधेः पूर्वमेवोपहितस्योत्क्रान्त्यादिः संभवति॥ श्रुति-
श्च तमुत्क्रामन्तंप्राणोऽनूत्क्रामतीत्यादिना जीवोत्क्रान्त्या सर्वोत्क्रान्-
तिं वदति॥ तथाच विरोधः॥ नचोपाधिगुणानां सारत्वं युज्यते
अनर्थरूपत्वात् किंतु भगवद्गुणानामेव॥किंबहुना प्रस्वापादिषु वि-
हारादिचेतनबोधकस्वयंविहृत्येत्यादिश्रुतिन्यायसहस्रबाधितत्वा-
त्केवलं भगवदाज्ञमोमापरिवृढप्रवर्त्तितमार्गानुसारित्वात्तत्पक्षस्य
लिखनेनालं॥ आभासएवचेतिसूत्रं यथाऽनाचारिब्राह्मणे ब्रा-
ह्मणाभासप्रयोगोऽखिलब्राह्मणधर्माणामभावतस्तथाऽऽनन्दांशस्य
तिरोधानाद्ब्रह्मधर्माणांसर्वेषामभावादंशत्वेन तत्तद्रूपत्वाच्च तदाभा-
सोजीवइतिपरं नत्वलीकइति पूर्वमेवावोचाम॥ २३॥ ॥ अ-

थ यत्तुचैतन्यस्येत्यादिः पूर्वमेवावोचामइत्यन्तस्त्रयोविंशः खण्डः खण्ड्यते ॥ ॥ तत्र प्रज्ञाशब्देन बुद्धिर्गृह्यते तेनौपाधिकोदेहसम्बन्धइतिसिद्धम् ॥ विज्ञानेनविज्ञानमादायेतिश्रुतेरयमर्थः ॥ विज्ञानेन बुद्ध्या विज्ञानमिन्द्रियाणां ज्ञानसामर्थ्यमादाय शेते इति॥ विज्ञानशब्दस्य बुद्धौ विज्ञानमयादिशब्देषु रूढिर्दृष्टैव ॥ इन्द्रियसम्बन्धिज्ञानसामर्थ्येतु योगः ॥ विज्ञायतेऽनेनेत्यर्थे करणे ल्युटः सुलभत्वात् ॥ प्राणानामित्यनेन तस्य तत्र प्राणसम्बन्धित्वप्रतीतेः॥ प्राणशब्दस्य तु इन्द्रियेषु श्रौती रूढिः सुप्रसिद्धा ॥ पृथगुपदेशादितिसूत्रं तूत्क्रान्तिगत्यागतीनामित्यादिपूर्वपक्षसूत्रसमूहस्थमिति न दोषावहम् ॥ तप्तवारिस्थतेजसि तव मते गुणभूतस्यैव परमते स्वरूपभूतस्याऽपि प्रकाशस्याऽभिभवोऽस्तु॥किञ्च गुणस्य गुणितोभिन्नत्वे प्रमाणाभावात्कुतोगुणाभिभवे गुण्यभिभवोन ॥ किञ्च प्रकाशवत्सूत्रविरोधादिभिः प्रकाशस्य गुणत्वं प्रत्युक्तमिति समोयं दोषः॥ तद्गुणसारत्वात्त्विति सूत्रन्तु नात्माऽणुरित्यत्रव्याख्यतम् ॥ तेनैव च विभोरप्युत्क्रान्त्यादेरुपपत्तिरुक्ता॥परोक्तेर्थेतु न मानं विषयवाक्यालाभश्च ॥ तत्त्वमसीत्यस्य गौणत्वं तु स्वोक्त्युपक्रमविरोधगौरवाभ्यां हेयम् ॥ प्रज्ञादीनामीश्वरगुणत्वे जीवसम्बन्धश्चिन्त्यः॥प्रवेशादिकं तु प्रागुपहसितम्॥दशसूत्र्याः पूर्वपक्षत्वनिरासाय योऽनेनयत्नः कृतः सोऽपि नात्माणुरितिश्लोकव्याख्ययां विफलः कृतः ॥ नह्युपाधेः पूर्वमेवेत्यसङ्गतं॥तमुत्क्रामन्तमितिश्रुतेः प्रागुक्तरीत्या लब्धव्यवस्थत्वात्॥अतएव जीवोत्क्रान्त्येति तृतीयानसङ्गता॥ उत्क्रान्त्योर्हेतुहेतुमद्भावाभावात् ॥ सारपदार्थोप्युक्तः प्राक् ॥ बुद्धिबलहीनस्य गालीदानं युक्तमेवेत्युक्तम्प्राक् ॥ आभासएवचेत्य-

स्यार्थः पूर्वमेवोक्तः ॥ तत्र लक्षणां वदंस्तु गौरवप्रमाणाभावाभ्या-
मुपेक्षणीयः ॥ किञ्च श्रुत्यादीनां तर्कवशेनाऽन्यथाव्याख्याकरण-
मासुराणामिति पूर्वमुक्तमिदानीं किं तत्त्वमेव स्वस्याऽऽविष्कर्त्तुं त-
र्कवशेन श्रुत्यादिकमन्यथा व्याचष्टे इति प्रष्टव्यः ॥ अन्यः प्रला-
पस्तु दूषितएव ॥ इतित्रयोविंशखण्डखण्डनम् ॥ २३ ॥ ॥ स्या-
देतत् ॥ शुद्धस्यैव कर्त्तृत्वेऽपि निमित्तत्वमात्रमस्तु कुलालन्या-
येन नतु समवायित्वमपि ॥ तथासति ब्रह्मणोविकृतत्वापातोमृत्पि-
ण्डवत् सावयवत्वापातश्च कार्यस्याऽनर्थरूपत्वेम तद्रूपत्वस्य वक्तु-
मयुक्तत्वाच्चेतिचेत् ॥ मैवं ॥ यदि स्वबुद्धिकल्पितं ब्रह्मणः कर्त्तृत्वं
स्यान्न स्यात्समवायित्वं किन्तु श्रुतिसिद्धं ॥ साच स्वतःसिद्धप्रमा-
णभावा ॥ प्रमाणस्य ह्ययं स्वभावोयद्यथास्थितं वस्तु प्रमापयति
नतु स्वनिरूपितप्रकारकं निर्मिमीते ॥ तथाच श्रुतिरपि यथास्थितं
ब्रह्म प्रतिपादयतीति न पर्यनुयोगार्हा ॥ विकृतत्वादिधर्माश्च लोके
समवायिषु दृश्यन्ते ॥ तथाचोभयरक्षायै ब्रह्माविकृतमेव समवा-
यि ॥ लोके तादृशमेव समवायित्वमिति व्यवस्था मन्तव्या ॥ अ-
तएव सूत्रकारोऽपि ब्रह्मणः समवायित्वं न युक्तिगम्यं किन्तु श्रु-
त्येकगम्यमित्याह श्रुतेस्तुशब्दमूलत्वादिति ॥ ब्रह्मसमवाय्यविकृतं
चेत्यपि गुडजिह्विका ॥ वस्तुवस्तु विरुद्धधर्माश्रयमपि ॥ तथाहि ॥
आत्मावारेश्रोतव्योमन्तव्यः यतोवाचोनिवर्त्तन्ते तदेजतितन्नैजति
अपाणिपादोजवनोग्रहीता पश्यत्यचक्षुःसशृणोत्यकर्णः सर्वतःपा-
णिपादान्तं अणोरणीयान्महतोमहीयान् अस्थूलमनण्वित्यादिश्रु-
तिर्हि परस्परविरुद्धाऽनेकधर्मवत्त्वं ब्रह्मणि प्रतिपादयति॥श्रौतत्वा-
न्नैकतरबाधोवक्तुं शक्यः ॥ तस्मात्तादृशमेव तदिति मन्तव्यं॥२४॥

॥ ॥ अथ स्यादेतत्शुद्धस्यैवेत्यादिरितिमन्तव्यमित्यन्तश्चतुर्विशः खण्डः खण्ड्यते ॥ ॥ बुद्धिहीनस्य युक्तिभीरोर्न्यायाऽनभिज्ञस्य कान्गुणान्वर्णयिष्यामः श्रुतीरपि न्याय्यार्थाञ्चयावयन्क्षेपयाति॥तस्माच्छ्रुत्याद्यविरोधाय विवर्त्तवादः स्वीकार्यः ॥ अन्यथा विकारित्वादिसत्त्वेऽपि अविकारित्वसम्भवाद्विकारित्वाऽनित्यत्वाद्यपि त्वया ब्रह्मणि स्वीक्रियेतेत्युक्तं प्राक् ॥ श्रुतेस्तुशब्दमूलत्वादिति तु व्याख्यातम् ॥ श्रोतव्यइति श्रुतिर्लक्षणादिना शाब्दबोधविषयत्वमाह ॥ यतोवाचइति तु शक्त्या वाचां निवृत्तिम् ॥ अन्यास्तु श्रुतयस्सविशेषनिर्विशेषपरत्वेन व्यवस्थिताइत्युक्तम्प्राक् ॥ इति चतुर्विशखण्डखण्डनम् ॥ २४ ॥ ॥स्यादेतत् ॥ अत्र नैवं निर्णयः संभवति॥नह्येकं वस्तु स्वतएव सविशेषं निर्विशेषं चेत्यवधारयितुं शक्यं ॥ विरोधात्॥ननु सर्वगतत्वेन पृथिव्याद्युपाधिसम्बन्धोऽस्तीति तन्निबन्धनमस्थूलत्वादिकं ॥ तथाहि ॥ अस्थूलेस्थूलः अनणावनणु तच्चोच्चावचकर्त्तर्युच्चावचकर्त्तोच्चावचकामेचोच्चावचकामः पृथिव्यांसर्वगन्धो जलादावगन्धइत्युभयरूपत्वमुपपद्यतइति न विरोधइति चेन्मैवं ॥ नह्यौपाधिकत्वे वस्तुस्वभावता सम्भवति॥ नहि जपाकुसुमाऽरुणिमानं गृह्णन्स्फटिकोऽरुणोभवति ॥ नवा पटोऽरुणश्चित्रोवा भवन् द्विरूपोभवति॥तत्रावयवावच्छेदकल्पनया तथा वचनेऽपि ब्रह्मणि न तथा वक्तुं शक्यं ॥ निरवयवत्वात्॥तस्मादाविद्यकत्वादुपाधीनामस्तसमस्तविशेषं तदिति प्रतिपत्तव्यं ॥ नच सविशेषस्याऽपि श्रौतत्वान्निर्विशेषस्यैव बाधोवक्तुं शक्यः परिच्छेदापातात् ॥ सविशेषस्य परिच्छिन्नत्वात् तेषां प्रत्येकं भिन्नत्वे ब्रह्मानेकत्वप्रसक्त्यैकमेवाऽद्वितीयमितिश्रुतेर्विरोधश्च॥समोमश-

केनसमोनागेनेत्यादिषु चैकस्यैवाऽनेकोपाधिसम्बन्धपरिमाणं श्रू-
यते॥तच्च स्वतोनिर्विशेषत्वएवोपपद्यते॥अन्यथोपाधीनामव्यापक-
त्वेनान्योन्यमाश्रयाऽऽश्रयिभावाभावाच्च सर्वपरिमाणवत्त्वं भज्ये-
तैकस्य ब्रह्मणः ॥ किञ्च करचरणादिविशेषाणां लौकिकत्वात्स्वरू-
पस्याऽलौकिकत्वात्तद्वत्त्वमपि न ब्रह्मणि वक्तुं शक्यं॥ तदलौकि-
कत्वकल्पनेन ब्रह्मणि च सर्वभवनसमर्थस्वविरुद्धसर्वाधारत्वादि-
रूपाऽलौकिकशक्तिकल्पनेन च गौरवात् ॥ अस्थूलादिश्रुतिविरो-
धेन तत्कल्पनमशक्यं च ॥ सर्वतइत्यादि तद्बलेन शक्यत्वे प्येत-
द्दौर्बल्यमप्युक्तं ॥ अन्यच्च नहि सविशेषनिरूपिका श्रुतिर्ब्रह्मस्वरू-
पं निरूपयितुं प्रवृत्ता येन तन्निरूपितमित्यलौकिकत्वादिकं न
कल्प्यं किन्तु क्लृप्तमेवेति न गौरवादिदूषणयासइत्युच्यते ॥ कि-
न्तु तस्य दुर्ज्ञेयत्वेन यथाकथञ्चित्प्रवणत्त्वे चित्तस्य शुद्धिर्भविष्य-
ति ततः स्वयमेव प्रत्यग्ब्रह्मस्वरूपं ज्ञास्यतीत्यधिकारसित्ध्यर्थमु-
पासनां वक्तुं भावनासुगमत्वाय च लोकप्रसिद्धविशेषवत्तदनुवद-
ति ॥ ततोऽधिकारे सिद्धे कीदृक्तदनुभुयतइत्याकाङ्क्षायां श्रुति-
रस्थूलमनण्वित्यादिना तत्स्वरूपं निरूपयति ॥ अतएवारूपवदेव-
हितत्प्रधानत्वादिति सूत्रकारोप्याह ॥ नह्येवंसति सविशेषनिरूप-
कश्रुतिवन्निर्विशेषनिरूपिकाणां स्वरूपमात्रनिरूपणं विहायान्य-
त्प्रयोजनं घटते॥तस्य वृत्त्यविषयत्वात्॥तत्केन कम्पश्येदित्यादिश्रु-
तेः ॥ अतएव निषेधमुखेनैव निरूपयति अथाऽतआदेशोने-
तिनेतीति अन्यदेवतद्विदितादथोअविदितादित्यादिना ॥ एवञ्च
सति निर्विषयज्ञानस्वरूपत्ववन्निष्प्रतियोगिकाऽभावरूपत्वमेव भ-
वेदिति तद्व्यावृत्त्यर्थं चित्स्वरूपत्वमाह ॥ सयथासैन्धवघनोऽनन्तरो-

बाह्यः कृत्स्नो रसघनएवैवंवारेऽयमात्मानन्तरोबाह्यः कृत्स्नः प्रज्ञानघन-
एवेति॥अन्यच्च द्वेवावब्रह्मणोरूपेमूर्त्तंचैवामूर्त्तंचेत्युपक्रम्य रूपद्वयं
प्रतिपाद्य पुनः पठ्यते अथातआदेशोनेतिनेतीति ॥ तत्रेतिशब्दस्य
संनिहितावलम्बनत्वमितिहस्मोपाध्यायाऊचुरित्यादिषु दृश्यते ॥
प्रकृतेऽपि पूर्वनिरूपितरूपद्वयस्य संनिहितत्वेन तन्निषेधएव ब्रह्म-
णि नेतिनेतीत्यनेन प्रतिपाद्यते ॥ एवंसति विशेषनिरूपिकाः श्रु-
तयोनिषेध्यकोटिनिरूपिकाइति सिद्धं ॥ निषेधश्च तेषामविद्या-
कल्पितत्वएव सङ्गच्छते ॥ नहि वस्तुसन्निषेधार्हं भवति ॥ तदेव
ब्रह्मत्वंविद्धिनेदंयदिदमुपासतइतिश्रुत्योपासनाविषयाणामब्रह्मत्वो-
क्तेश्च ॥ तस्मान्निर्विशेषमेव ब्रह्मेति प्रतिपत्तव्यं ॥ नचैतादृशस्या-
ऽविषयत्वात्कश्चिद्धीरइत्यादिश्रुत्या च विषयत्वनिरूपणान्नैवमि-
ति सांप्रतं ॥ पूर्वोक्तन्यायेन सर्वश्रुत्यविरोधचिन्तने प्रापञ्चिकध-
र्माणामविद्याकल्पितत्वाऽवधारणेनाऽत्राऽपि तत्समानयोगक्षेमत्व-
स्योचितत्वात्॥तदा द्रष्टृदृश्यभावोक्तेर्निर्विशेषत्वाऽवगतौ च तत्के-
नकंपश्येदित्यादिना तन्निषेधादप्येवमवगम्यते ॥ अविद्याकार्यस्य
तद्दर्शनस्य सत्त्वात्तदा न सर्वात्मना ऽविद्यानाशोऽपि येनाऽविद्यात-
दानष्टेति तद्दर्शित्वस्य नाविद्यकत्वमिति कथनं स्यात्॥किञ्च सविशे-
षस्य सूर्यदीपादिप्रकाश्यत्वकथनेन व्यवहार्यत्वेन चाक्षुषत्वेन क्रि-
यादिमत्त्वेन च कथं ब्रह्मत्वमवधारयितुंशक्यं॥यतोनतत्रसूर्योभातिन
चंद्रतारकंनेमाविद्युतोभांतिकुतोयमग्निः तमेवभांतमनुभातिसर्वंत-
स्यभासासर्वमिदंविभातीति नचक्षुषागृह्यतेनापिवाचानान्यैर्देवै-
स्तपसाकर्मणावेति यत्तदद्रश्यमग्राह्यमिति निष्कलंनिष्क्रियंशांत-
मित्यादिभिः श्रुतिभिस्तद्विरुद्धं तन्निरूप्यते ॥ अतएव सूत्रकारोऽ-

प्याह प्रकृतैतावत्त्वंहिप्रतिषेधतिततोब्रवीतिच भूयइति ॥ अस्यार्थ-स्तु नेतिनेतीति श्रुतिः प्रकृतं यदेतावत्पूर्वोक्तं मूर्त्तामूर्त्तलक्षणं रूपद्वयं तद्भावं निषेधति ब्रह्मणि॥तर्हि तत्सद्भावे किं प्रमाणमतआह ततोब्रवीतिचभूयः ततोनिषेधानन्तरं नह्येतस्माद्ब्रह्मणः परमन्यदस्तीति धर्मिसद्भावं श्रुतिः स्वयमेव ब्रवीति ॥ एवंसति धर्मिणोऽन्यस्याऽविद्यकत्वं सिद्धमिति निर्विशेषमेव तदिति प्राप्ते वयं वदामः ॥ विशेषाणामविद्याकल्पितत्वं वदन् वादी प्रष्टव्यः ॥ कासाऽविद्या जीवगता ब्रह्मगतावा यत्कल्पिताविशेषाः ॥ नतावदाद्या ॥ तस्याब्रह्मगतधर्मकल्पने सामर्थ्याभावात् ॥ तथाहि कल्पना हि शुद्धे एव ब्रह्मणि वाच्या तादृशस्य मनोवचसोरप्यविषयत्वेनाऽधिष्ठानज्ञानाभावाज्जीवस्य तस्याः सम्बन्धस्तु दूरतः ॥ अपिच पराञ्चिखानिइत्यनेनाऽविद्यावत्सम्बन्धीन्द्रियाणां अविषयइत्युक्ता तद्रहितेन्द्रियविषयत्वं कश्चिद्धीरःप्रत्यगात्मानमैक्षदावृत्तचक्षुरमृतत्वमिच्छन्नित्यनेन निरूप्यते ॥ ज्ञानप्रसादेनविशुद्धसत्त्वस्ततस्तुतंपश्यतेनिष्कलंध्यायमानइतिश्रुतौ ज्ञानवतएव दर्शनमुच्यते ॥ नहि तदा साऽस्तीति तव वक्तुं शक्यं ॥ ज्ञाननाश्यत्वेनाऽभ्युपगमात् ॥ तद्धिपश्यंतिमुनयोगुणापायेसमाहिताइत्यादिस्मृतिविरोधश्च ॥ ननु तदा द्रष्टृदृश्यभावस्य सत्त्वान्निर्विशेषतदवगतौ तत्केनकंपश्येदित्यादिना तन्निषेधसत्त्वान्न सर्वात्मना ऽविद्यानाशइति तत्कल्पनैव तत्राऽपीति चेत् तर्हि ब्रह्मणोदृश्यत्वमप्याविद्यकमिति तव मनीषितं तथासत्यविद्यया ब्रह्मणि विशेषकल्पनायां दृश्यत्वं दृश्यत्वेच सत्यधिष्ठानज्ञाने सति तत्कल्पनमित्यन्यो-

न्याश्रयः ॥ निष्कलमिति प्रत्यगात्मानमिति पदेन चाऽविद्यार-
हितस्यैव दर्शनविषयत्वेनोक्तेस्तद्विरोधश्च ॥ नच तत्र विषयस्तु
आविद्यकएव भेदनिरूपणात् निष्कलादिपदं तु वास्तवरूपाऽभि-
प्रायमिति वाच्यं ॥ प्रकृते कर्मताऽनुपपत्तेः ॥ कश्चिद्धीरइत्यत्रे-
क्षणक्रियाफलवाचकप्रत्यगात्मपदातिरिक्तस्याऽभावादस्य चात्रा-
वाचकादीक्षणक्रियोत्त्यनुपपत्तिश्च ॥ किंचैवं निर्विशेषब्रह्मदर्श-
नोच्छेदात्तन्निरूपकश्रुतीनां ब्रह्मवेदब्रह्मैवभवति तमेवविदित्वा-
तिमृत्युमेति तस्मिन्दृष्टेपरावरे कश्चिद्धीरःप्रत्यगात्मानमैक्षदित्या-
दीनां वेदैश्चसर्वैरहमेववेद्यः भक्त्यामामभिजानातीत्यादिस्मृतीनां
चोपप्लवः ॥ २५ ॥ ॥ अथ स्यादेतत्अत्रनैवंनिर्णयःसम्भव-
तिइत्यादिःस्मृतीनांचोपप्लवइत्यन्तः पञ्चविंशः खण्डः खण्ड्यते ॥
॥ ॥ तत्र पूर्वपक्षे दूषणानि तु गौरवभयान्नोद्भाव्यन्ते सोऽपि
हि नास्मन्मतयथावज्ज्ञानपूर्वकः ॥ सविशेषस्य श्रौतत्वं तु तात्प-
र्याविषयत्वान्नञ्सामान्यनिषेधेतिश्लोकोक्तन्यायाच्च स्वाप्नश्रौत-
त्वतुल्यमित्युक्तम्प्राक् ॥ अधिष्ठानज्ञानाभावात्कथं कल्पनेत्यपि
प्रत्युक्तम् ॥ अज्ञानस्य च द्वे शक्ती स्तआवरणशक्तिर्विक्षेपश-
क्तिश्च तत्र यन्निष्ठावरणशक्त्या शुक्तिकाविशेषांशआव्रियते
तन्निष्ठविक्षेपशक्त्यैव रजतं सृज्यते स्वप्नवदसाधारणत्वात् ॥ अ-
तोनेतरस्य रजतदर्शनं नवैकस्य रजतबाधज्ञानेऽन्यस्य तद्बाधज्ञा-
नम्॥एतेन रजततद्बाधज्ञानयोः सर्वसाधारण्यापत्तिवारणाय जी-
वावरकमेवाऽज्ञानं शुक्तौरजतकल्पकं तच्चेन्द्रियद्वारा बहिर्निस्सृत-
मधिष्ठानसम्बद्धमेवेति कल्प्यम् ॥ अन्यथा ऽदृष्टशुक्तिकस्याऽपि
भ्रमः स्यात् ॥ एवञ्च ब्रह्मणि जगत्कल्पकमज्ञानमपि ब्रह्मणा स-

म्बद्धमेव कल्पकमिति कल्प्यं तस्य च साक्षात्सम्बन्धाभावान्म-
नइन्द्रियद्वारकः सम्बन्धोवाच्यः सच न भवति यतोवाचोनिवर्त-
न्ते पराञ्चिखानीति श्रुतिविरोधात् इति परास्तम्॥यतोवाचइत्यादेः
पूर्वमेव व्याख्यातत्वाच्च ॥ ज्ञानकालेऽविद्यांशस्थित्युपपादनमप्यु-
क्तम्प्राक् ॥ अन्योन्याश्रयस्तु बीजाङ्कुरन्यायेन परिहरणीयः ॥
विद्यादशायां दृश्यत्वं तु निष्कलस्यैव दर्शनोपहितस्य नतु दर्शन-
विशिष्टस्य नवा दर्शनरूपोपाधिरहितस्येति न निर्विशेषब्रह्मदर्श-
नोच्छेदइति ॥ पञ्चविंशखण्डखण्डनम् ॥ २५ ॥ ॥ अपरञ्च
अवास्तवमितिकोऽर्थः ॥ वस्तुनोनैसर्गिकोधर्मोवास्तवस्तद्भिन्नआ-
गन्तुकोधर्मस्त्ववास्तवइति यदि तदा मृदः पृथुबुध्नोदराद्याका-
राणामप्यविद्याकल्पितत्वमेव शुक्तिकारजतवन्नतु कुलालेन द-
ण्डादिसहकारेण जनितत्वमित्यागतं ॥ तथाच प्रत्यक्षविरोधः ॥
क्वचिद्विनाऽपि कुलालादिकं तदुत्पत्त्यनुभवप्रसंगस्तेन च जला-
हरणमपि क्रियेत जायतैव ॥ जलाहरणार्थिनोनियमतोघटे
प्रवृत्त्यनुपपत्तिश्च ॥ नह्यज्ञानकल्पितमरुमरीचिकापाथसः पा-
नार्थं पिपासोर्नियमेन प्रवृत्तिः सम्भवति ॥ नच दोषदशायां
प्रतीयमानः सइति वाच्यं ॥ इदमंशस्याऽपि तथात्वापत्तेः ॥ नच
तत्प्रयुक्तत्वे सतीति वाच्यं ॥ तिमिरोपहतनयनस्य नेत्रदर्पणाधा-
नेन सूक्ष्मेष्वपि वर्णेषु स्थूलत्वभ्रमोवर्णप्रमा चैकेनैव जन्यतइति
वर्णांऽशेऽपि भ्रमत्वापत्तेः ॥ नच तस्मिन्नंशे तस्य गुणत्वमेव ॥ अ-
विद्यायामपि ब्रह्मांशे गुणत्वमेवाङ्गीकुरु सर्वश्रुत्येकतार्थं॥इदमपि
त्वद्रीत्योच्यते॥वस्तुतस्तु ब्रह्मधर्माः सर्वएवाऽनागन्तुकाएव यतोनि-
त्याः॥श्रुत्या तथैव निरूपणात्॥तथाहि नतस्यकार्यंकरणंचविद्यतेन-

तत्समश्चाभ्यधिकश्चदृश्यते पराऽस्यशक्तिर्विविधैवश्रूयतेस्वाभावि-
कीज्ञानबलक्रियाचेति ॥ तत्सम्बन्धियत्तत्कार्यं जन्यं नास्ति किं-
त्वजन्यमेव ॥ किञ्च तस्येतिषष्ठ्या भेदोनिरूप्यते ॥ तथाच जीव-
वत्स्वरूपातिरिक्तं ज्ञानक्रियादिषु करणमिन्द्रियादिकमपि तस्य
नास्ति॥अनन्दमात्रकरपादमुखोदरादित्वात् ॥ अथवा नित्यत्वात्त-
द्धेतुभूतं करणं च नाऽस्ति ॥ अतएव नतत्समइत्यादि ॥ जीवाना-
मतादृशात्वात्॥अतएव सर्वस्येशानइति श्रुतिः अतएव तद्दासाए-
व जीवाइतिफलितं ॥ परा मनोवचसामपीदमित्थतया ज्ञातुम-
शक्या ॥ विविधा अनेकरूपाः शक्तयः ॥ शक्तिस्वरूपविचारे ब्र-
ह्मस्वरूपान्नातिरिच्यतइति ज्ञापनायैकवचनं॥तेनाऽचिन्त्यानन्तश-
क्तिमत्वमुक्तं भवति ॥ साऽपि शक्तिः स्वाभाविकी नत्वागन्तुकी॥
तथैव ज्ञानशक्तिः क्रियाशक्तिश्च स्वाभाविक्येव नतु देहेन्द्रियव्य-
तिरेकेण तद्व्यतिरेकेण ज्ञानक्रिये न भवतइत्यर्थः ॥ एवंसति नित्यं
वस्तु सदविद्यया कल्प्यतइति वक्तुं न शक्यं ॥ विरोधात् ॥ तस्य
किंचित्कार्यं कर्त्तव्यं नाऽस्ति ॥ करणमिन्द्रियादिकमपि नाऽस्ति॥
अतएव नतत्समइत्यादि ॥ यतः कर्त्तव्यं विनाऽपि विविधाः श-
क्तयः करणं विनाऽपि ज्ञानादिमत्त्वं च श्रूयते ॥ अतः सर्वाअपि
शक्तयः स्वाभाविक्यइति व्याख्यानमपि नाऽतिदुष्टं ॥ यद्यपि नि-
त्यत्वेन सृष्टेः पूर्वमनन्तरं च तासां वर्त्तमानत्वान्नहि तदा किंचित्क-
र्त्तव्यमस्ति तथापि सामान्यनिषेधपरत्वेन दुष्टमेव॥ ईक्षत्यधिकर-
णविरोधात् ॥ तथाहि सदेवसौम्येदमग्रआसीदेकमेवाद्वितीयमि-
त्युपक्रम्य तदैक्षतबहुस्यांप्रजायेयेति तत्तेजोसृजतेति ॥ तथा-
न्यत्र ॥ आत्मावाइदमेकएवाग्रआसीन्नान्यत्किंचनमिषत्सऐक्ष-

तल्लोकानुसृजाइतिसइमानूलोकानसृजतेत्यादिभ्यः सृष्टेः प्राग्ब्र-
ह्मणः शरीरित्वं तेजःप्रभृतिलोककर्तृत्वं च मिथ्यावादिनाऽप्यङ्गी-
कार्यं ॥ अतः कर्त्तव्यांशसामान्यनिषेधस्तु नोपपद्यते ॥ नहि
तदा कश्चिज्जातोऽस्ति येन स्वाऽविद्यया तत्कर्तृत्वलक्षणं विशेषं
कल्प्येत ॥ अस्तीतिचेत् सदेवेतिश्रुतिविरोधः ॥ एवंसति यथा
स्वाभाविक्योज्ञानादिशक्तयः श्रुतिबलेनाङ्गीकृताः॥ अस्येतिषष्ठ्या
भेदेन निर्देशाद्धर्मरूपास्तथा सर्वतः पाणिपादान्तंसर्वतोऽक्षिशि-
रोमुखमित्यादि श्रुतिस्मृतिबलेन स्वरूपभूतानन्दमात्रकरपादादी-
नामपि संभवान्नकरणानामपि सामन्यनिषेधउपपद्यते ॥ तस्मा-
दस्मदुक्तएवाऽर्थः ॥ २६ ॥ ॥ अथ अपरंचावास्तवमित्या-
दिरस्मदुक्तएवार्थइत्यन्तः षड्विशः खण्डः खण्ड्यते ॥ ॥ तत्रा-
ऽवास्तवमिति नपुंसकनिर्देशोऽसङ्गतउत्तरत्र पुँल्लिङ्गनिर्देशात् ने-
हनानास्तिकिञ्चन विकारोनामधेयमित्यादिश्रुतिभिरेकविज्ञाने-
न सर्वविज्ञानप्रतिज्ञया क्षित्यादीनामिहार्थानांछायानकतमापि-
हि नसंघातोविकारोऽपिनपृथङ्नान्वितोमृषा इत्यादिभागवतोक्त-
युक्त्याच सिद्धे घटाद्यवास्तवत्वे श्रौतेऽर्थे तर्काऽनवकाशं मन्यमा-
नस्य ते कोविद्वेषः ॥ घटादिषु कुलालादिजनितत्वमपि वर्णस्थौ-
ल्यादिषूपनेत्रादिजनितत्ववदुपाधिनियतमेवेति न प्रत्यक्षविरोधः॥
जाग्रतोमरुमरीचिकादौ प्रवृत्त्यभावेऽपि सुप्तस्य स्वाप्ने पदार्थे प्रवृ-
त्तिर्दृश्यतएवमिहाऽप्यविद्यास्थित्यन्तमेव प्रवृत्तिर्यत्रत्वस्यद्वैतमिवे-
ति यत्रत्वस्यसर्वमात्मैवेतिच श्रुतेः ॥ अविद्यायां प्रतीयमानत्वेनैव
नाऽवास्तवत्वं घटादेः किन्तूक्तविधप्रमाणबलेनाऽपि ॥ एवश्चेदमं-
शस्य तत्त्वाभावेऽपि न क्षतिः ॥ प्रमाणेनाऽवास्तवत्वनिश्चयाऽभा-

वात् ॥ वर्णांशे त्वदुदाहृतज्ञानस्य भ्रमत्वापादनंतु अविद्याप्रयुक्तत्वे सत्यविद्यादशायाम्प्रतीयमानत्वमिति स्वोक्तिफलितलक्षणाऽर्था- ज्ञानात् ॥ नहि नेत्रदर्पणमविद्या नवा लक्षणे उपाधिपदोपादान- म्॥किञ्च दूरत्वादिदोषापहारेण चक्षुषैव तत्र वर्णज्ञानं नतु तस्याऽ- पि ज्ञानसामीप्रवेशः॥प्रतिबध्यप्रतिबन्धकभावे कार्यकारणभावेच गौरवादिति न तस्य तत्र गुणत्वम् ॥ ततस्तद्दृष्टान्तेन ब्रह्माऽवयव- ज्ञानेऽस्याऽगुणत्वकथनं निर्बीजमेव ॥ ब्रह्मावयवादेरपि कल्पित- त्वन्तूक्तमेव प्राक् ॥ यत्त्वेतद्दार्ढ्याय तट्टीकाकारेण अविद्याप्युप- कारायविषवज्जायतेनृणाम् ॥ अनुष्ठिताऽभ्युपायेनबन्धायान्याय- तोहिसा इति मार्कण्डेयपुराणान्तर्गतरौच्यमन्वन्तरोपाख्यानवाक्य- मुपन्यस्तं ॥ तदसङ्गतं ॥ तत्राऽविद्याशब्देन कर्मणोग्रहणात् ॥ अत- एवाऽनुष्ठितेत्युक्तम्॥अन्यथा तन्न सङ्गच्छेत ॥ अज्ञानस्याऽनुष्ठाना- योगात् ॥ अविद्यापठ्यतेवेदेकर्ममार्गःपितामहाः तत्कथंकर्मणोमा- र्गेभवन्तोयोजयन्तिमाम् इति रुचिप्रश्नेन अविद्यासत्यमेवैतत्क- र्मनैतम्मृषावचः किन्तुविद्यापरिप्राप्तौहेतुःकर्मनसंशयइति पितृवा- क्येनच कर्मणएवाऽविद्यात्वेनोपक्रमात् तस्माद्वत्सकुरुष्वत्वंविधि- वद्दारसंग्रहमित्यनन्तरोत्तरवाक्याच्चाऽत्राऽविद्याशब्देन कर्मैव॥वस्तु- तस्तु नेदृशमेवाऽवास्तवत्वं ब्रूमः किन्तु उक्तलक्षणमिथ्यात्वरूपमि ति न कोऽपि दोषः ॥ तत्सम्बन्धि यत्तत्कार्यं जन्यं नाऽस्तीति न तस्यकार्यमिति श्रुत्यंशस्य व्याख्यानं ते संमतं ॥ तत्र तत्संबन्धि उद्दिश्य जन्यान्योन्याभावोबोध्यतइतिफलति ॥ एवञ्चोत्तरत्राऽ- पि तदेवोद्दिश्य करणाऽन्योन्याभावोबोध्येत॥तथाहि सति किञ्च- तस्येत्यादिः स्वग्रन्थोविरुध्येत ॥ तस्येत्येतत्पदस्याःऽवृत्त्या करणां-

शे प्रकारान्तरेण व्याख्यानेतु गौरवम् ॥ पूर्वत्र षष्ठ्यन्तार्थमुद्दिश्य कार्याऽभेदबोधनउत्तरत्र करणे षष्ठ्यर्थभेदस्याऽभावबोधने वैरू-प्यं वाक्यभेदश्च ॥ किञ्च नञाऽन्योन्याभावस्य बोधस्तत्रैव भवति यत्र नञसमभिव्याहारे वाक्यस्य तादात्म्यबोधनयोग्यता ॥ प्र-तियोग्यभावान्वयौ हि तुल्ययोगक्षेमाविति न्यायात् ॥ तथाचा-ऽत्र नञसमभिव्याहारे तस्य कार्यं विद्यते इत्यस्य तादात्म्यबोध-नायोग्यत्वात्कथं नञाऽन्योन्याऽभावबोधनम् ॥ प्रतियोग्यभावा-न्वयाविति न्यायार्थोऽन्यत्र स्पष्टः ॥ किञ्च षष्ठ्याः सम्बन्धार्थक-त्वेन कथं सम्बन्ध्यर्थलाभोयत्रान्योन्याभावोबोध्यते ॥ कथंवा-भेदार्थलाभो यस्याभावः करणञ्चविद्यतइत्यंशेन बोध्यते ॥ कर-णस्य तत्सम्बन्धित्वाभावबोधनेनाऽन्यसम्बन्धएव हि ततोबोध्येत॥ तस्मात्तस्य कार्यकरणयोरत्यन्ताभावएव श्रुत्या बोध्यते॥एवञ्च नेह-नानास्तीत्यादिश्रुतिभिरप्येकवाक्यता फलति॥द्वितीये पादे तु एक-श्चकारोऽनुक्तसमुच्चयार्थस्तेन न्यूनोऽपि न दृश्यतइत्यर्थः॥द्वितीयउ-क्तसमुच्चयार्थस्तथाच जीवास्तदभिन्नाएव नतु तद्दासाः मानाभा-वात्॥एवञ्च तत्त्वमसि सर्वंखल्विदंब्रह्मेत्यादिश्रुतिभिरेकवाक्यता ॥ कथंतर्हि जीवजडभानमित्यतउक्तं परास्येति॥शक्तिर्माया साचाऽ-घटितघटनापटीयसीत्वात् परा उत्कृष्टा सत्त्वादिगुणवत्त्वादावरण-शक्त्यादिमत्त्वाद्वा विविधा ऽनेकप्रकारा स्वाभाविकी अजन्या॥प-राशब्दविविधाशब्दयोस्तदुक्तार्थकत्वेतु न मानम्॥विविधाशब्दस्य तथाऽर्थकत्वे एकवचनोपपत्तिक्लेशश्च निर्मूलः ॥ ज्ञानबलक्रिया-चेति शक्तेर्विशेषणं ॥ सम्भवति सामानाधिकरण्ये इति न्याया-त् ॥ पार्थक्ये स्वाभाविकीत्यस्य तत्राऽप्यन्वये गौरवाच्च ॥ तत्रच

ज्ञानबलयोः क्रिया करणं ययेति व्यधिकरणबहुव्रीहिः ॥ तथा-
चाऽनयैव करपादादेर्मायिकत्वमसत्त्वं चसिद्धम् ॥ ईक्षत्यधिकर-
णविरोधादित्युक्ता तथाहीत्याद्युक्तिरसङ्गता ॥ ईक्षत्यधिकरणेन
शरीरित्वाद्यसाधनात् ॥ आनन्दमात्रेत्यादिवाक्यानि तु चतुर्थश्लो-
कव्याख्यायां कृतव्यवस्थानि ॥ शरीरित्वं तु नोक्तश्रुतिलभ्यम् ॥
मिषतोनिषेधेन तच्छ्रुतिविरुद्धश्च॥नचाऽन्यस्य मिषतोनिषेधोऽनया
श्रुत्या क्रियते नत्वनन्यस्येति वाच्यं॥त्वन्मते सर्वस्याप्यनन्यत्वात्॥
अशरीरंशरीरेष्वनवस्थेष्ववस्थितमिति श्रुतिविरुद्धश्च ॥ सृष्टेः प्रा-
क् तृतीयश्लोकव्याख्योक्तरीत्या जीवाऽविद्यावासनादिसहकृत-
संहारकालिकेश्वरसंकल्पेन जीवानामविद्योज्जृम्भते ततईश्वरस्ये-
क्षणादि ॥ सदेवेत्येवकारविरोधस्तु तृतीयश्लोकव्याख्यावसरे प-
रिहृतः ॥ तस्मात्तस्येति षष्ठ्या तत्सम्बन्धिकार्यादेः सामान्यतोनि-
षेधात्सर्वतःपाणिपादान्तमित्यादेरुक्तगतिकत्वान्निर्विशेषमेव ब्रह्मे-
ति सिद्धम् ॥ इतिषड्विंशखण्डखण्डनम् ॥ २६ ॥ ॥ किञ्च अ-
विद्यया कल्पनपक्षे तत्प्रसादेन तत्साक्षात्कारदर्शनाद्यनुपपत्तिः॥तद-
र्थं तपस्यादितत्साधनप्रवृत्त्यनुपपत्तिश्च ॥ नहि तपस्यादिसाधना-
नां दोषोद्भवएव फलं येन तेषु क्रियमाणेष्वेव तादृशोभ्रमोऽविद्य-
याजन्यतइत्युच्येत ॥ तथासति चित्तकषायशोषकत्वं साधनानां
सर्वत्र श्रूयमाणं व्याहन्येत ॥ दोषाऽऽधिक्यजनकत्वेन निन्दितत्वं
च स्यात् ॥ किञ्च पराञ्चिखानीति श्रुत्याऽविद्यावदिन्द्रियाऽविष-
यत्वं तद्रहिततद्विषयत्वं च प्रतिपाद्यते ॥ श्रीमद्देवकीगर्भरत्नेनापि
नाहंवेदैर्नतपसानदानेननचेज्यया शक्यएवंविधोद्रष्टुंदृष्टवानसि-
मांयथेतीतरसाधनाऽसाध्यतोक्तिपूर्वकं भक्त्यात्वनन्ययाशक्यअ-

इमेवंविधोर्जुनेति भक्त्यैकसाध्यत्वं दर्शनादीनां निरणायि ॥ तथाचैवंविधश्रुतिस्मृतिविप्लवं कुर्वन्पारलौकिकसन्मार्गमात्रोच्छेदनाय प्रवृत्तआसुरएवेति सद्भिरुपेक्ष्यः ॥ कल्पान्तकाले शरीरेन्द्रियाऽभावेन जीवानां भगवति प्रवेशाच्च कल्पनासामर्थ्याभावे सत्यपि नारायणशयनकथनाच्च ॥ इतएव प्रलयाऽनुपपत्तिरपि ज्ञेया ॥ २७ ॥ ॥ अथ किञ्चाविद्ययाकल्पनेत्यादिरनुपपत्तिरपिज्ञेयेत्यन्तः सप्तविंशः खण्डः खण्ड्यते ॥ ॥ तत्र चित्तशुद्धेस्तु शास्त्रबोधिततद्धेतुकत्वं तन्त्रमित्युक्तं प्राक् ॥ तपस्याभक्त्यादिरूपं कर्मत्वविध्यैव ॥ उपदर्शितमार्कण्डेयपुराणादिवाक्येभ्यइति निश्चिनु ॥ तच्च नकर्मणानप्रजयाधनेनेत्यादिना निन्दितमेव ॥ अतएव नेदंयदिदमुपासते इति सङ्गतम् ॥ उपासनायाः सगुणज्ञानहेतुतया काचित्की तत्स्तुतिस्त्वक्षय्यंहवैचातुर्मास्ययाजिनःसुकृतंभवतीतिवज्ज्ञेया ॥ किञ्च तपस्यादिसाधनजन्यतत्प्रसादेन तत्प्राकट्यादीत्युपक्रम्य तत्र प्रमाणतया तपस्यादेरसाधनत्वं भक्तिमात्रस्य साधनत्वं च बोधयद्भगवद्वाक्यमुपन्यस्य भक्त्यैकसाध्यत्वमित्यादि वदंश्चोपहास्यएवोपक्रमविरोधात् ॥ श्रुतिस्मृत्यादिविप्लवः प्रयलाऽनुपपत्तिश्च कस्य मार्गे भवति कस्य मार्गे न भवतीति प्राग्विस्तरेणो पपादितम् ॥ प्रलयकाले सत्यलोकवासिनां नारायणशयनादिभ्रमः ॥ नहि यदा नारायणः शेते तदा सत्यलोकस्यनाशे किञ्चिन्मानमस्ति ॥ प्राकृते प्रलयेतु उक्तविधसामग्र्यभावा न्नकल्पना ॥ नारायणीयशक्तेरावरकत्वाऽभावेऽपि विक्षेपकतायाः सत्त्वेन तत्कल्पनया शयनप्रलयादिसंभ-

वाच्च ॥ आवरणाऽभावाच्च न भ्रान्तत्वव्यवहारऐन्द्रजालिकवत् ॥ किञ्च प्रलयकाले कल्पनाऽभावेऽपि भूताऽर्थवेदिनामिदानीं तात्कालिकार्थाऽभावज्ञानरूपतत्कल्पनोपपद्यते॥इति सप्तविंशखण्डखण्डनम् ॥ २७ ॥ ॥ किञ्च योब्रह्माणंविदधातिपूर्वमिति श्रुत्याद्युक्तप्राथमिकब्रह्मसृष्ट्यनुपपत्तिः॥ तदानीमीश्वरातिरिक्तस्याऽभावेन तत्कल्पकाभावात्॥ईश्वरस्य च न कल्पकत्वं वक्तुं शक्यमपीश्वरत्वव्याहतेः ॥ योविदधातीति श्रुत्युक्तमीश्वरकर्त्तृत्वं चापेयात् ॥ किञ्च सूत्रकारः सर्वेषां वेदान्तानां ब्रह्मणि समन्वयं प्रतिज्ञाय तन्निरूपणार्थं प्रवृत्तः सन्निःसंदिग्धतत्पराणां निश्चितत्वादेवं निरूपणमकृत्वा संदिग्धतत्पराणामेव यएषोऽन्तरादित्येहिरण्मयःपुरुषोदृश्यतेहिरण्यश्मश्रुरिति अस्यलोकस्यकागतिराकाशइतिहोवाचेत्यादि कतमासादेवताप्राणइतिहोवाचेत्यादि अथयदन्तःपरोदिवोज्योतिर्दीप्यतइत्यादीनामंतस्तद्धर्मोपदेशात् आकाशस्तल्लिङ्गात् अतएवप्राणः ज्योतिश्चरणाभिधानादित्यादिभिरधिकरणैर्महता प्रबन्धेन यन्निरूपयत्यतोयत्प्रकारकंश्रुतिर्निरूपयति तादृशमेव तद्ब्रह्मैवेति सूत्रकाराऽनुशयइति ज्ञायते ॥ अन्यथा यएषोन्तरादित्यइत्यादिश्रुतिनिरूपितस्वरूपाणां तादृक्जीवादिस्वरूपत्वे ब्रह्मस्वरूपत्वे वा तव मतेऽविद्याकल्पितत्वस्याऽविशिष्टत्वात् ब्रह्मपरत्वमेवैतेषामिति न निर्णयं कुर्यात्॥ ननु ब्रह्मत्वेनैवोपासनानि तत्तत्फलसाधकानीश्वरपुरुषाकाशप्राणादिरूपेष्वब्रह्मत्वेनोपासनेकृते तत्तत्फलं न भविष्यतीति तेषु ब्रह्मत्वबोधनार्थं सूत्रकारेण निर्णयःकृतइतिचेत् ॥ मैवं ॥ वस्तुतस्तेषामब्रह्मत्वे तन्निरूपिकाणां श्रुतीनामब्रह्मपरत्वापत्त्या तन्नियमव्याहतेः॥प्रता-

रकत्वापत्तेश्च ॥ किञ्च अविद्याकल्पितत्वाऽविशेषात्प्रसिद्धार्थानेवाऽनूद्य नैतदिति निषेधमेव कुर्यात् ॥ समन्वयप्रतिज्ञामेव च न कुर्यात् ॥ तेषामब्रह्मत्वेन तन्निरूपिकाणां तासामतन्निरूपकत्वात्॥ तथाच सर्वेवेदायत्पदमामनन्तीति श्रुतिविरोधः ॥ एतेन सविशेषनिरूपिका श्रुतिर्न ब्रह्मस्वरूपं निरूपयितुं प्रवृत्तेत्यादि निरस्तं ॥ किञ्च कृतेशुक्लश्चतुर्बाहुरित्यादिना इलावृत्तादिदेशविषयेषु तुरीयांतामसींमूर्त्तिमित्यादिना च नियतकाले नियतदेशे नियतानेकरूपकथनमनुपपन्नं स्यात् ॥ एकस्याएवाऽविद्याया नियतसामयिकनियतवस्तुकल्पने समयान्तरे चाऽन्यादृशकल्पने हेतोरशक्यनिरूपणत्वात् ॥ नच कालादेरेव हेतुत्वं ॥ तस्याप्येतत्तुल्यत्वात् ॥ नच तादृक्स्वभावैव सेति वाच्यं ॥ अद्वैतश्रुत्यनुरोधेनाऽसद्रूपत्वेनैव सा त्वदभिमतेति तत्स्वभावस्याऽपि तादृशत्वेन कस्य कारणत्वं॥ननु कार्यमपि तथैवेति यक्षबलिन्यायइतिचेत्॥कार्यमास्तां वा तथा कारणेन तु सतैव भाव्यं मणिमन्त्रादिन्यायेनेति पूर्वमेवावोचाम ॥ २८ ॥ ॥ अथ किञ्चयोब्रह्माणमित्यादिः पूर्वमेवावोचामेत्यन्तोऽष्टाविंशः खण्डः खण्ड्यते ॥ ॥तत्र प्राथमिकब्रह्मसृष्टीति वदता कालयवनीयादिवत्सर्वथैव संसारस्यसादित्वमङ्गीकर्त्तुं न शक्यमित्युक्तम्॥यदिच प्रवाहस्यानादित्वेन पूर्वयजमानउपासनाविशेषपरिपाकेनब्रह्मा जायते तत्सृष्टिरेव प्राथमिकब्रह्मसृष्टिरिच्युते तदा तस्यैव कर्मफलभोगाय शरीरकल्पकत्वम् ॥ कल्पकस्य यजमानात्मनस्तस्य सत्त्वात्॥ईश्वरस्य कल्पकत्वमनुपदमेवोक्तं ॥ तच्चेश्वरत्वस्य न बाधकं मानाभावात् किन्तु साधकमेव ॥ वेदप्रदानं त्ववतारकर्मान्तरवदुपपन्नम् ॥ सगुणब्रह्मविष-

यकवाक्यविचारोऽपि कर्मपरवाक्यज्ञानसाधनपरवाक्यविचारव-
दुपयोगमात्रेणोपपन्नः ॥ तत्फलन्तु शारीरकभाष्यं व्याकुर्वद्भिः
प्रत्यधिकरणं पूर्वपक्षसिद्धान्तयोः फलं निरूपयद्भिर्निरूपितमे-
वेति तद्ग्रन्थानधीत्य निश्चिनु ॥ सूत्रकाराशयस्य तत्तद्धर्मोपल-
क्षितस्य ब्रह्मत्वेप्युपपत्तेस्तादृशमेवेत्यस्यासिद्धिः ॥ जीवस्वरूप-
स्य ब्रह्मस्वरूपस्य वाऽविद्याकल्पितत्वं नास्माभिर्मन्यते ॥ जी-
वसगुणब्रह्मणोरुपाधेरेव तु तत्वमुच्यते ॥ अतोऽन्यथायएषइत्या-
द्यसङ्गतम् ॥ तस्माद्वस्तुतस्तेषामब्रह्मत्वे इत्यादिर्निरनुयोज्या-
नुयोगएव ॥ ईश्वरोपाधेरब्रह्मत्वेऽपि ईश्वरस्वरूपस्य ब्रह्मत्वात् ॥
निषेधमेव कुर्यादितिचेन्नेदमित्यादिना सोपाधिकाभिप्रायेण कृ-
तएवेत्यवेहि॥सविशेषनिरूपिका श्रुतिः सविशेषं निरूपयन्त्यपि न
ताद्रूप्येण सत्यत्वे तात्पर्यवती किन्तु यथाकथंचित्प्रतिपत्त्यर्थेत्यु-
क्तम्॥अविद्यायां तु विविधदेशकालादिनियमिततत्तत्कार्यसम्पा-
दनं घटतएव ॥ लोकदर्शनात्॥विविधशक्तित्वेन श्रुतौ वर्णितत्वाच्च
विस्तरेणचायमर्थोयोगवासिष्ठे स्थितः ॥ असताऽपि कारणेन का-
र्योत्पत्तिरिति मणिमन्त्रादिकारणव्यवस्था च प्रागबोचि ॥ इत्य-
ष्टाविंशखण्डखण्डनम् ॥ २८ ॥ ॥ किञ्च ब्रह्मजिज्ञासां प्रति-
ज्ञाय ब्रह्मत्वेन निरूपितसविशेषाणां कल्पितत्वं वदन् व्यासप्रति-
ज्ञाहानिमपश्यन्नुन्मत्तोऽसि ॥ ननु ब्रह्मणएकरसत्वेन सविशेषाणां
चानेकरसत्वेन ब्रह्मत्वानुपपत्तिरितिचेत् ॥ मैवं ॥ धर्मिग्राहकप्रमा-
णसिद्धत्वात् ॥ तथाहि ॥ ब्रह्म वैदैकसमधिगम्यं तत्रच सर्वकामः-
सर्वगन्धःसर्वरसइति निरूप्यते ॥ सर्वतःपाणिपादान्तंसर्वतोऽक्षि-
शिरोमुखं सर्वतःश्रुतिमल्लोकेसर्वमावृत्यतिष्ठति सर्वेन्द्रियगुणाभा-

सर्वेन्द्रियविवर्जितं असक्तंसर्वभृच्चैवनिर्गुणंगुणभोक्तृचेत्यादिना भगवतैव स्वस्वरूपं प्रतिपादितं ॥ अत्रान्तपदेन करणाद्यवच्छेदउच्यते ॥ अतएव पौगण्डलीलासामयिकं स्वरूपं यावत्परिमाणकं तावत्परिमाणकं तदेव स्वरूपं पूतनामुक्तिदानदशायामपि वर्त्तत-इति सङ्गच्छते ॥ सर्वेषामपि रूपाणां नित्यत्वात् ॥ अग्रेच क्रमेण प्रादुर्भावः परं॥यतोबाल्येऽल्पदेशाऽवच्छेदः करादीनां पौगण्डादिषु चाऽधिकदेशावच्छेदोभक्तैरनुभूयते ॥ तत्र शुद्धब्रह्मत्वं ब्रह्मणैव विचारितं तोकेनजीवहरणंयदुलूकिकायास्त्रैमासिकस्यचपदाशकटोपवृत्तः यद्रिङ्गतान्तरगतेनदिविस्पृशोर्वाउन्मूलनंत्वितरथार्जुनयोर्भाव्यमित्यादिनाद्वितीयस्कन्धे दशमस्कन्धे दामोदरलीलाप्रस्तावे नचान्तर्नबहिर्यस्यनपूर्वंचापिनापरं पूर्वापरंबहिश्चान्तर्जगतोयोजगच्चयः तंमत्वाऽऽत्मजमव्यक्तंमर्त्यलिङ्गमधोक्षजं गोपिकोलूखलेदाम्नाबबन्धप्राकृतंयथेत्युक्त्वा रज्जुन्यूनतानिरूपणेनाऽपि पूर्णत्वं तस्यैव प्रतिपादितं ॥ त्रय्याचोपनिषद्भिश्चसाङ्ख्ययोगैश्चसात्वतैः उपगीयमानमाहात्म्यंहरिंसामन्यताऽऽत्मजमिति वाक्ये ॥ मृत्साभक्षणानन्तरीययशोदाप्रार्थितनिजवदनव्यादाने प्रदर्शितसात्मव्रजसहितसकललोकाऽवलोकनजनितवस्तुजिज्ञासायायशोदायाः पक्षान्तरनिराकरणपूर्वकतत्त्वनिर्द्धारकाऽथोअमुष्यैवममार्भकस्ययः कश्चनौत्पत्तिकआत्मयोगइतिवाक्येन ॥ एतेनैव यःपृथिव्यांतिष्ठन्यंपृथिवीनवेदयस्यपृथिवीशरीरंयःपृथिवीमन्तरोयमतिसतआत्मान्तर्याम्यमृतइति श्रुत्युक्तधर्मवत्त्वेनाऽपि ब्रह्मत्वं सिद्धं ॥ अतएकोऽप्यसाधारणोधर्मोविद्यमानः शिष्टान्सन्दिग्धानपि ब्रह्मधर्मानेव गमयति॥इममेव हि श्रुत्यभिप्रायमङ्गीकृत्य सर्वत्र ब्रह्मवाक्यनिर्णयमाह

सूत्रकारः॥एतत्सर्वं भागवतविवरणे तत्त्वसूत्रभाष्येच विस्तृतं पितृचरणैरित्यत्र दिङ्मात्रं प्रदर्श्यते॥किञ्च सर्वाणियानीन्द्रियाणि चक्षुर्वागादीनि तद्ग्राह्यगुणाश्च लौकिकास्तथैव स्वयमेव ब्रह्माभासते॥ ब्रह्मैव कर्मेन्द्रियज्ञानेन्द्रियादिरूपेण भासतइत्यर्थः॥ननु लौकिकानीन्द्रियाणि तत्रसन्ति तदाह॥सर्वेन्द्रियविवर्जितमिति असक्तमित्यादि स्पष्टम्॥२९॥ ॥अथ किञ्चब्रह्मजिज्ञासाम्प्रतिज्ञायेत्यादिरसक्तमित्यादिस्पष्टमित्यन्तएकोनत्रिंशः खण्डः खण्ड्यते॥ ॥तत्र विशेषस्य कल्पितस्य भेदप्रयोजकत्वाभावेन निर्विशेषसविशेषयोरभेदान्न व्यासस्य प्रतिज्ञाहानिः॥ तथाहीत्यादि उच्यतेपर्यन्तम्त्वसत्समाहितम्॥ तावत्परिमाणवत्त्वं तु सत्यंज्ञानमनन्तमितिश्रुतिविरोधान्माययैव॥पूतनाघातादितु ईश्वरत्वेन नतुकरचरणादेस्तत्परिमाणस्य च नित्यत्वेन॥ तस्य तत्राप्रयोजकत्वात्॥ नचान्तरितिश्लोके पूर्वार्द्धेन निर्विशेषकथनमुत्तरार्द्धेनोक्तरीत्या सविशेषकथनं॥मायया तु रज्जुन्यूनता सकललोकदर्शनादिसामर्थ्यादि॥ अवशीकृतमायेष्वपि योगिविशेषेषु तादृशसामर्थ्यसत्त्वे वशीकृतमाये तत्सत्त्वस्याऽनाश्चर्यत्वात्॥ सत्त्वस्य समूहः सात्त्वं तद्वन्तः सात्त्वताइति व्याचक्षाणस्तु टीकाकारोमहद्व्याकरणकौशलं ख्यापयामास॥ युक्तएवेदृशस्येदृशग्रन्थव्याख्याश्रमः॥ औत्पत्तिकः स्वाभाविकः असादिरित्यर्थः॥ आत्मयोगोमायात्मकः॥ योगोऽपूर्वार्थसम्प्राप्तौ सङ्गतिध्यानयुक्तिषु इत्यादिमेदिनीकोशात्तस्यैव तद्युक्तित्वात्॥ सर्वेषामपि धर्माणां चतुर्थश्लोकव्याख्यायां मायिकत्वस्योक्तत्वेन परस्मिन्संदिग्धोऽपि कोऽपि धर्मोनास्ति किमुत निश्चितोयेन धर्मान्तरस्य सत्त्वं सम्भाव्येत॥ साराऽसारवि-

चारचतुरैस्तु व्याससूत्राऽर्थोभगवत्पादकृतभाष्याज्ज्ञेयः ॥ ननु लौकिकानीन्द्रियाणीत्यत्र लौकिकेतिनिर्मूलम् ॥ इत्येकोनत्रिंशखण्डखण्डनम् ॥ २९ ॥ ॥ अतएव वैश्वानरःसाधारणशब्दविशेषादित्यधिकरणे यस्त्वेतमेवं प्रादेशमात्रमभिविमानमात्मानंवैश्वानरमुपास्तइतिश्रुत्युक्तं प्रादेशपरिमाणवत्त्वमभितोविगतमानत्वलक्षणं व्यापकत्वं वाजसनेयिशाखोक्तश्च सएषोऽग्निर्वैश्वानरोयः पुरुषस्तंयोहैतमेवमग्निंवैश्वानरंपुरुषविधंपुरुषेंतःप्रतिष्ठितंवेदेत्यनेन पुरुषत्वं तस्यैव तद्विधत्वं तस्मिन् प्रतिष्ठितत्वं च परस्परविरुद्धं ब्रह्मण्येव संभवति तस्यैव विरुद्धसर्वधर्माश्रयत्वान्नाग्न्यादिष्विति निरूपयन् जैमिन्यादिमतोपन्यासकरणेन पक्षान्तरेष्वरुचिमुद्भाव्य स्वसिद्धान्तमवददामनन्तिचैनमस्मिन्निति ॥ अस्यार्थस्तु एनं परमेश्वरं व्यापकमेवास्मिन्मूर्द्धचिबुकान्तराले प्रादेशमात्रं जाबालाः समामनन्ति यएषोनन्तोऽव्यक्तआत्मायोविमुक्तेप्रतिष्ठितइतिसोविमुक्तःकस्मिन्प्रतिष्ठितइतिवरणायांनास्यांचमध्येप्रतिष्ठितइत्यादिना ॥ तथाचाऽनन्तपदाद्देशकालापरिच्छिन्नस्यैव सङ्कुचितस्थाने श्रुतिः स्थितिं कथयतीति प्रादेशमात्रस्याऽप्यभिविमानत्वं सङ्गच्छते ॥ एतेन विरुद्धधर्माश्रयत्वं ब्रह्मणः श्रुत्यभिमतं वेदितव्यं ॥ अन्यथा ऽनन्तइति नवदेत् ॥ प्रयोजनाभावात् ॥ ननु मया पूर्वमेवाऽवादि सविशेषनिरूपणमुपासनार्थमिति ॥ नन्वनुपहतकरणेन मयाऽप्यश्रावि॥तर्हि किमनुपपन्नं॥त्वदभिमतोपासनार्थत्वमेव॥ कथं ॥इत्थं ॥ उपासनायां तत्र तत्प्रकारकभावनामात्रं नतु तद्वस्तु तादृशमिति हि तवाऽभिमतं ॥ उपास्यश्चाऽऽत्मत्वेनैव नत्वनात्मत्वेन ॥ आत्मेत्येवोपासीत अथयोऽन्यांदेवतामुपास्तेऽन्योसावन्योऽ-

हमस्मीतिनसवेदयथापशुरेवंहिसदेवानांपशुरितिश्रुतेः ॥ एवंञ्च स-
ति योऽन्यथासन्तमात्मानमन्यथाप्रतिपद्यते किन्तेननकृतंपापञ्चौ-
रेणाऽऽत्मापहारिणेति श्रुत्याऽयथाकल्पनस्य निन्दितत्वात्तादृशमेव
तद्रूपमिति मन्तव्यं ॥ एवंसत्यनन्तरूपत्वमेव ब्रह्मणः श्रुत्यभिमतं ॥
तथाचाऽनेन रूपेणैतादृशोपासकस्यैतादृशं फलं दास्यामीतीश्व-
रेच्छयैव तथैव भवतीति ज्ञापयन्ती श्रुतिरुपासनाभेदेन फलभेद-
मप्याह ॥ किञ्च ॥ त्वदुक्तरीत्योपासनाविषयस्याऽतत्प्रकारकत्वे-
नाऽब्रह्मत्वमागतं ॥ तथाच तन्निरूपिकाणां श्रुतीनामब्रह्मपरत्वे प्राप्ते
सर्वत्र प्रसिद्धोपदेशादिति तत्त्वसूत्रविरोधः॥असद्भावनया चाऽसदेव
फलं स्यात्॥तथाच तन्निष्ठस्यमोक्षोपदेशादिति तत्त्वसूत्रविरोधश्च ॥
असन्नेवसभवति असद्ब्रह्मेतिवेदचेदितिश्रुतेरुपासनाविषयाणामस-
त्त्वं जानानस्य तवान्धतमःप्रवेशोनाऽसत्त्वमेव फलमिति जानीमः॥
तथाचोक्तं त्वादृशानेकाऽसुरचमूपतीनां श्रुतिस्मृत्याचारपराणामपि
निजबंधुसुहृद्रूपाणामपि वधाय सकलप्रमाणनिषिद्धत्वेनाऽधर्मबु-
द्ध्या तद्वधविमुखं विजयं शिक्षयता तद्वधेन सकलसज्जनान् प-
रिपालयता श्रीदेवकीपुत्रेण ॥ अवजानन्तिमांमूढामानुषींतनु-
माश्रितं परंभावमजानन्तोममभूतमहेश्वरमित्यादिनाऽसुराणां स्व-
भजनमुक्त्वा महात्मानस्तुमांपार्थदैवींप्रकृतिमाश्रिताः भजन्त्यन-
न्यमनसोज्ञात्वाभूतादिमव्ययमिति तत्रैवाऽसुरभावनिरूपणेच अ-
सत्यमप्रतिष्ठंतेजगदाहुरनीश्वरं इत्यादिना निरूप्यासुरींयोनिमाप-
न्नामूढाजन्मनिजन्मनि मामप्राप्यैव कौन्तेय ततोयान्त्यधमांगति-
मित्यन्तेन॥अत्र मानुषींतनुमाश्रितमितितु तज्ज्ञानप्रकारकथनं नतु
स्वरूपस्य ॥ पूर्वोक्तयुक्तिभिरानन्दरूपत्वस्यैव निर्णीतत्वात् ॥

यथाचैतत्तथा आनन्दमयाधिकरणविचारे निरूपितं भाष्ये पितृ-चरणैः ॥ अतएवाऽग्रे भगवानाह परंभावमजानन्तइति ॥ परोभा-वआनन्दमात्रत्वलक्षणः ॥ एतेन विशेषाणां लौकिकत्वात् ब्र-ह्मणश्चाऽलौकिकत्वान्निषेधस्तत्रयुक्तः ॥ तेषामप्यलौकिकत्वकथ-ने ब्रह्मणिच विरुद्धसर्वाधारत्वाद्यलौकिकशक्तिकल्पने गौरवमि-ति निरस्तं ॥ सर्वस्यैव प्रमाणसिद्धत्वेनाऽकल्पितत्वात् ॥ स्वयुक्त्या कल्पने हि त्वदुक्तं दूषणं ॥ अन्यथा ब्रह्माङ्गीकारेऽपि गौरवमिति तदनङ्गीकारोऽप्यापद्येत ॥ तथाच शून्यवादआपद्येतेति गङ्गातरङ्ग-सङ्गिकमलपरागधूसरानिलसुखभिया स्ववैराग्यख्यापनाय ज-नतासमक्षं पलायमानस्य मायावादिकुहकनिर्विण्णस्य शूकरगर्त्ते-निपातः ॥ ३० ॥ ॥ अथाऽतएववैश्वानरइत्यादिर्गर्त्तेनिपातइ-त्यन्तस्त्रिंशः खण्डः खण्ड्यते ॥ ॥ तत्र व्यापकस्य प्रादेशमात्रत्व-मौपाधिकम्॥ब्रह्मणि विरुद्धधर्माऽऽश्रयणं तु स्वस्मिन् गार्हस्थ्ययति-त्ववदारूढपतितस्याऽविरुद्धम्॥इतरेषान्तु सर्वलोकव्यवस्थोच्छेदा-पत्त्या तदाश्रयणं विरुद्धमेव ॥ वैश्वानरइति सूत्रे साधारणशब्द-विशेषादित्यस्याऽयमर्थः ॥ साधारणशब्दयोरात्मवैश्वानरशब्दयो-र्विशेषोदृश्यते तस्यहवाएतस्यवैश्वानरस्यमूर्द्धैवसुतेजाइत्यादिः ॥ साधारणशब्दाद्योविशेषइति तट्टीकादर्शितविग्रहस्त्वसङ्गतः॥ समा-साप्राप्तेः ॥ तद्विधत्वं तस्मिन्प्रतिष्ठितत्वञ्चेत्यादितु प्रलापउपेक्ष्यः ॥ शब्दतोऽलाभात् ॥ आमनन्तिचैनमस्मिन्नितिसूत्रार्थे व्यापकमेवे-त्यसङ्गतम्॥विरोधात्॥विषयवाक्ये परिच्छेदाऽपरिच्छेदौ मायातद-भावप्रयुक्तावनूदितौ तत्र सर्वेषूपास्यधर्मेषु भावनामात्रार्थमनुवा-

दृश्यते न कल्प्यते किन्तु क्वचिद्वस्त्वपि तादृशं ॥ वास्तवत्वं तु श्रुतितात्पर्यविषयस्यैव नेतरस्य स्वप्नादेरिवेत्युक्तमसकृत् ॥ योऽन्यथासन्तमिति तु भवतामेव प्रतिकूलम् ॥ निर्विशेषस्य सतः सविशेषत्वाङ्गीकारात् ॥ नन्वस्मन्मते आत्मवस्तु सविशेषमेवेत्यात्मत्वेन सविशेषवस्तूपासने नाऽयं दोषइत्युक्त्यैव निस्तारः किन्त्वात्मवस्तुनोवस्तुतःसविशेषत्वे॥यथाचात्मवस्तु नसविशेषं तथोक्तम्प्राक्॥ किञ्च योन्यथासन्तमिति वाक्येनात्मनोऽन्यथा प्रतिपत्तिर्निषिध्यते नत्वन्यथाभूतस्यात्मत्वेन प्रतिपत्तिः॥एवंच साध्यविरुद्धोऽयंहेतुः॥ अवस्तुनआत्मत्वेनोपासनस्योपक्रान्तत्वात् ॥ उपासनानां कल्पितविशेषैरुपपत्त्या विशेषेषु सत्यतायाउपासनायामप्रयोजकत्वेन नोपासनयाऽपि विशेषाणां सत्यत्वकल्पनाऽवतारः॥सर्वत्र प्रसिद्धोपदेशात् इतितु वास्तवरूपाऽभिप्रायेण॥ उपासनानां शास्त्रप्रतिपाद्यत्वेन नासत्फलम् इत्युक्तम् ॥एवञ्च नरकादिपातरूपफलाऽपत्तिरयुक्ता॥ब्रह्माऽतिरिक्तस्य प्राप्तिस्तु तत्रतत्र श्रूयमाणेष्यतएव ॥ त्वद्रीत्या तु सर्वस्य सविशेषब्रह्मज्ञानस्य एकमेव फलं स्यात्॥ब्रह्मज्ञानत्वाऽविशेषात्॥ तन्निष्ठस्यमोक्षोपदेशादितितु निर्विशेषज्ञाननिष्ठस्य मोक्षमाह॥असन्नेवसभवतीतितु शून्यवादस्य निन्दा नत्वनिर्वचनीयवादस्य ॥ त्वादृशासुरचमूपतीनामित्यस्य श्रुतिस्मृत्याचारपराणामपीति विशेषणं वदता स्वस्य कौर्मोक्तशप्तब्राह्मणवंशजत्वमाविष्कृतम्॥अवजानन्ति अवहेलयन्ति॥उपसर्गेण धात्वर्थस्याऽन्यत्र नयनात् ॥ तथाचाऽयमर्थः ॥ मम परमुत्कृष्टं भावं सत्तामात्मानं वा ॥ भावःसत्तास्वभावाभिप्रायचेष्टात्मजन्मसु इति मेदिनीकोशात् ॥ अजानन्तोऽतएव मूढाः मानुषीं तनुमाश्रितं भूतमहेश्वरमवजान-

न्ति ॥ तथाचाश्रयितुः सकाशादाश्रितायास्तन्वाअस्मच्छब्दार्थात्स-
विशेषान्निर्विशेषस्य भावशब्दार्थस्य च भिन्नत्वं भगवतैवोक्तम् ॥
मानुषींतनुमाश्रितमिति तज्ज्ञानप्रकारकथनमिति तु न युक्तं ॥ त-
ज्ज्ञानस्याऽनुल्लिखितत्वात् ॥ अतएव महाभारताद्युक्तं बलदेवश्री-
कृष्णयोः सितकृष्णकेशत्वं भागवतोक्तं तत्रांऽशेनाऽवतीर्णस्येत्यं-
शत्वं तट्टीकाकारोदाहृतवामनपुराणसम्मतं दशानामवताराणां
सोपानत्वं च सङ्गतम् ॥ यत्तु कृष्णस्तुभगवान्स्वयमिति तत्तु वास्त-
वाऽभेदेन उपास्यप्रशंसापरम्॥तथाच देहस्य निर्विशेषस्य च सवि-
शेषेण शुद्धमैक्यमिति स्वीकुर्वाणाएवैवं निन्द्याः ॥ तेषामेवासुरी
योनिरुक्ताऽधमगतिश्च ॥ असत्यमित्यस्य तु प्राग्व्यवस्था कृता ॥
परंभावमजानन्तइत्यत्रानन्दमात्रलक्षणइत्यर्थोऽस्तु नाम परन्तु-
करचरणादिरानन्दमात्रत्वलक्षणइत्यर्थे बीजमन्वेष्यम् ॥ प्रमाणसि-
द्धेऽपि लाघवगौरवचिन्ता मीमांसाद्वयसिद्धा ॥ अलौकिकत्वादि-
कथनंतु न गौरवेणैव दूष्यते किन्तु मानाभावश्रुतिविरोधाद्यैः ॥
इति त्रिशखण्डखण्डनम् ॥ ३० ॥ ॥ किञ्च ॥ अस्थूलादिवा-
क्यविरोधेन हि विशेषाणां कल्पितत्वं ब्रूषे ॥ तत्र विरोधः कयो-
रिति पृच्छामः ॥ परस्पराऽत्यन्ताभावसमानाधिकरणयोरितिचेद्ब्रूषे॥
तत्राऽपि पृच्छामोयत्रकुत्रचित्तथात्वेऽपि सामान्यविरोध उत यत्र
तथात्वेन प्रतीतिस्तत्रैव तयोः प्रतीतौ विरोधोनान्यत्रेति ॥ तत्रना-
द्यः ॥ परस्पराऽत्यन्ताऽभावसमानाधिकरणयोरपि निष्क्रमणत्वप्रवे-
शनत्वयोरेकस्मिन्कर्मण्यनुभवात्॥अथ तत्र प्रमाणप्रतीतिसिद्धत्वा-
न्न विरोध इति ब्रूषे॥तदा ब्रह्मण्यप्रामाण्यशंकाकलंकरहितवेदासिद्ध-
त्वादुभयधर्माणां न विरोधइति तुल्यं॥तेन द्वितीयएव पक्षःसाधुरिति

मन्तव्यं ॥ तथाच लोके एव तथात्वेन लौकिकेष्वेव तथात्वे विरोधोनत्वलौकिकेषु ब्रह्मधर्मेषु ॥ धर्मिग्राहकप्रमाणसिद्धत्वात् ॥ ननु स्यादेवं यदि परस्परविरुद्धाऽनेकधर्मवत्त्वमात्रं बोधयेच्छ्रुतिर्न निषेधेत् नत्वेवं॥तथाचाऽखिलश्रुत्युपपत्त्यर्थं ब्रह्म निर्द्धर्मकमेव॥यतोधर्मान् स्वयमेवोक्त्वा स्वयमेव तत्र निषेधति॥धर्मनिरूपणंतु यथाकथञ्चिद्धर्मिप्रतिपत्त्यर्थं॥अन्यथा तादृशस्य निरूपयितुमशक्यत्वात्तदज्ञानेन सर्वेषां मोक्षोच्छेदएव स्यात् ॥ ततस्तत्सिद्धौ धर्मनिषेधमुखेन शुद्धं तन्निरूपयति इति मन्तव्यमितिचेत् ॥ बाढमेवमेवमन्तव्यं स्याद्यदि स्वोक्तधर्मानेव श्रुतिर्निषेधेत् नत्वेवं किन्तु ब्रह्मधर्मनिरूपणे कृते तेषु प्राकृतत्वादिशङ्कास्यात्तन्निवृत्त्यर्थं प्रापञ्चिकधर्मानेव निषेधति ॥ अन्यथा ऽसत्पदार्थनिरूपकत्वेन प्रतारकत्वेन च श्रुतेरप्रामाण्यं स्यात् ॥ लोकप्रसिद्धदुःखितत्वादिधर्मनिषेधेनाऽपि निर्द्धर्मकतन्निरूपणस्य शक्यत्वात्॥ननु श्रुत्युक्ताअपि लौकिकाएवेतिचेत्॥रे मूढ कुत्र वा लोके त्वया त्वत्पित्रा वा सर्वतःपाणिपादान्तत्वादयएकस्मिन् धर्मिणि सर्वेशितृत्वादिकं श्रुत्युक्तमानन्दमात्रकरादिमत्त्वं च दृष्टं श्रुतं वा ब्रह्मातिरिक्ते येनैतेषु लौकिकधर्मानुवादइति ब्रवीषि॥अप्रसिद्धानपि बोधनार्थं स्वयमेवोक्त्वा निषेधतीति नवक्तुं शक्यं॥दत्तोत्तरत्वात्॥तथाच तदुक्तब्रह्मण्यनाश्वासप्रसङ्गेन महानेवानयोर्भवेत्॥किञ्चैवं जन्माद्यस्ययतइत्यादिलक्षणकं ब्रह्म निरूपयिष्यमाणोबादरायणः पूर्वमथातोब्रह्मजिज्ञासेत्युक्त्वाऽस्थूलादिश्रुतीर्विचारयन्नथब्रह्मजिज्ञासेतिवदेत् ॥ एवंसति सर्वेषां वेदान्तानां ब्रह्मपरत्वं दत्ततिलाञ्जलि स्यात् ॥ निषेध्यानामविरोधे विरोधे वा विशेषाऽभावात् ॥ ३१ ॥ ॥ अथ किञ्चास्थूलादि-

रित्यादिर्विशेषाभावादित्यन्तएकत्रिंशः खण्डः खण्ड्यते॥ ॥ तत्र निर्विशेषसविशेषवाक्यानां विरोधाऽभावोनञ्सामान्येतिश्लोक-व्याख्यायामुक्तएव॥तथापि यक्षानुरोधोबलीति न्यायेनेहोच्यते॥ तद्देशकालावच्छेदेन तत्सम्बन्धतद्धर्मावच्छिन्नाऽभावस्य तद्देशका-लावच्छेदेन तद्धर्म्मवता तेन सम्बन्धेन विरोधः॥किञ्च तदत्यन्ताभा-वरूपत्वादिकं तद्विरोधप्रयोजकं तत्र स्थूलत्वात्यन्ताभावरूपत्वाद-स्थूलत्वस्य कथं न विरोधइति दिक्॥यथाच लौकिकधर्मान्श्रुतिर्न निषेधति तथोक्तम्॥ असत्पदार्थस्य सत्त्वेन निरूपणे हि प्रतार-कता प्रसज्जते नतु स्वरूपेण निरूपणे॥ अथरथान् यदाकर्मसु इ-त्यादिश्रुतेः प्रतारकत्वापत्तेः॥ अधिकं तु नञ्सामान्येतिश्लोक-व्याख्यायामुक्तम्॥ एवञ्च दत्तोत्तरत्वादित्यन्तं प्रत्युक्तम्॥लौकिक-शब्देन मायिकस्य ग्रहणात्॥ स्वप्नेन्द्रजालादौ यथाकथंचिद्दृष्ट-मपि॥ किञ्चेयमुक्तिरेवाऽसङ्गता॥ स्वप्नादेरनुवाददर्शनेनाऽन्यत्र दृष्टस्याऽन्यत्र कथनस्याऽनुवादत्वाऽभावात्॥ करपादादेरानन्दम-यत्वस्याऽसिद्ध्या करपादत्वादेरन्यत्राऽस्मादृशैस्त्वत्पितामहैर्दृष्टत्वा-च्च॥ सविशेषेऽनाश्वासेऽपि न निर्विशेषे सइति नाऽनयः॥ अरू-पमित्यस्मादनन्तरमनामयमित्युक्तावपि न दुःखसमानाधिकरण-रूपस्य निषेधः॥ प्रमाणाऽभावात् निषेधस्य विशेषाऽनपेक्षत्वा-च्च॥ अतएव वायुरस्पर्शोऽरूपइति न प्रमाणम्॥ अन्यथा रूपस-मानाधिकरणस्यैव स्पर्शस्य निषेधेन तत्प्रमाणं स्यात्॥ यत्तु गो-परूपोहरिःसाक्षादित्यादिनोक्तं गोपरूपत्वमपि सर्वेश्वरत्वनिरा-कारत्वपुरस्सरमेवोच्यते इत्युक्तं टीकाकृता॥ तन्न॥ शक्त्याद्या-कारत्वस्याऽपि शङ्करसंहितादिनोक्तस्य स्वीकारप्रसङ्गात्॥ तत्पर-

मेवच कृष्णस्तुभगवान्स्वयमिति स्यादेतदाकारस्य पुंस्त्ववत्त्वेन पुँ-
ल्लिङ्गोपपत्तेः ॥ सर्वरूपस्य तमोरूपत्वे तव दोषाऽभावेन जुगुप्सि-
तरूपान्तरत्वापत्त्या त्वदुक्तार्थेऽप्यरूपवदेवेत्यादेरसाङ्गत्यापत्तेश्च ॥
सविशेषस्याऽपि ब्रह्मत्वमस्त्वेवेति न तत्परश्रुतिविचारकसूत्राणाम-
सङ्गतिः ॥ द्वितीयाध्यायस्य तु नतरां ॥ तत्र भूतादिविषयकश्रुती-
नामपि विरोधस्योद्धृतत्वात् ॥ इत्येकत्रिंशखण्डखण्डनम् ॥ ३१ ॥
॥ ॥ ननु सूत्रेष्वपि निर्विशेषस्यैव मुख्यतया निरूपणं दृश्यते ॥
अरूपवदेवहितत्प्रधानत्वात् प्रकृतैतावत्त्वंहिप्रतिषेधतिततोब्रवीति-
चभूयइत्यादिभ्यइतिचेत् ॥ मैवं ॥ तदर्थाऽनवबोधात् तथाहि ॥
तत्र जडजीवधर्माः ब्रह्मणि सन्ति नवेति विचारयंस्तन्निरुपकनिषे-
धकश्रुतीनामन्योन्यविरोधपरिहारं विचारयन्नुभयोरपि श्रुतिवा-
क्यत्वेनाऽन्यतरबाधमप्यशक्यं जानन्नौपाधिकं ब्रह्म सविशेषश्रु-
तिविषयोनिरुपाधिस्वरूपं तन्निर्विशेषश्रुतेरिति मतं नस्थानतोऽ-
पिपरस्योभयलिङ्गंसर्वत्रहीतिसूत्रेणौपाधिकत्वे तत्स्वभावत्वं ब्रह्मणि
न सम्भवतीति तच्छ्रुतीनामब्रह्मनिरूपकत्वापत्तिरिति निरस्य पु-
नरुपहिताऽनुपहितयोर्भेदाऽङ्गीकारेणोभयरूपत्वं भविष्यतीति त-
न्मतोपपत्तिमाशङ्क्य नभेदादितिचेन्नप्रत्येकमतद्वचनादितिसूत्रे-
णाऽपिचैवमेकइत्यभिमेण चाऽभेदबोधकश्रुतिविरोधनिरूपणेन नि-
रस्य पुनराकाराणां प्रपञ्चमध्यपातित्वात्प्रपञ्चस्य च जन्यत्वात्ते-
षामपि तथात्वात्तेषु ब्रह्माऽभेदबोधनमौपचारिकमतः साकारवादि-
न्योन ब्रह्मनिरूपिकाइति प्राप्तआह अरूपवदेवहितत्प्रधानत्वादिति
स्यादेतदेवं यद्याकाराणां प्रापञ्चिकत्वं भवेन्नत्वेवं॥नहिप्रपञ्चेस्थित-
त्वेनैव प्रापञ्चिकत्वं वक्तुं शक्यं ॥ त्वदभिमतस्याऽपि तथात्वाप-

से॥अतोनिराकारवादिनीष्विव साकारवादिनीष्वपि श्रुतिष्वरूप-वदेव तत्प्रतिपाद्यते ॥ रूप्यते निरूप्यते व्यवह्रियतइति रूपं सर्व-व्यवहारविषयत्वं तद्युक्तं रूपवद्विश्वं ब्रह्मतु तद्विलक्षणमित्यर्थः ॥ यथाचैतत्तथा मृत्साभक्षणादिप्रसङ्गनिरूपणेन निरूपितं ॥ अथ-वा रूप्यते व्यवह्रियतेऽनेनेति करचरणाद्युच्यते ॥ तथाच यथा लोके करादिकं भिन्नं तद्वानभिमानी भिन्नस्तथा ब्रह्म न श्रुतौ क-रादिभिन्नं तदभिमानित्वेन निरूप्यते किन्तु करादेरप्यभिन्नत्वात् भेदाऽभावाद्रूपरूपमेव निरूप्यते नतु रूपवदित्यर्थः ॥ ननु कुतएत-दवगम्यते करादीनामपि ब्रह्मत्वमेव न तद्भिन्नत्वमित्यतआह त-द्विनिगमकं तत्प्रधानत्वादिति ॥ सर्वेषां वेदान्तानां ब्रह्मैव प्राधा-न्येन प्रतिपाद्यं यतः अयमर्थः करादीनामब्रह्मत्वेतन्निरूपकाणां वेदान्तानामब्रह्मपरतया ब्रह्मपरत्वनियमव्याहतिरतः करादिनिरू-पिकाः साक्षाद्ब्रह्मप्रतिपादिकाएवेति सर्वत्रप्रसिद्धोपदेशात् आम-नन्तिचैनमस्मिन्नित्याद्यधिकरणरूपोपपत्तिर्हिशब्देनोच्यते ॥ य-थासैन्धवघनोऽनन्तरोबाह्यःकृत्स्नोरसघनएवंवाअरेअयमात्मानन्त-रोबाह्यःप्रज्ञानघनएवेति सत्यंविज्ञानमानन्दंब्रह्मेति अनन्दमात्र-करपादमुखोदरादिरिति आनन्दमयोभ्यासादित्यादिश्रुतिस्मृति-न्यायैकवाक्यतया सच्चिदानन्दरूपत्वं करादीनामवधारणीयं ॥ अतएवाऽग्रे सूत्रकारोप्याह ॥ आहचतन्मात्रमिति ॥ एताएव श्रु-तयोऽत्रानुसंधेयाः ॥ त्वदभिमतव्याख्यानेत्वरूपमित्येतावतैव चा-रितार्थ्यं स्यात् ॥ रूपवत्त्वस्योभयवाद्यसंमतत्वेनाऽविवादास्पद-त्वात्तन्निषेधाऽनुपपत्तिः ॥ रूपरूपत्वस्य सिद्धान्ताऽभिमतत्वा-त् ॥ एवंसति तथाकथनादस्मदुक्तएवार्थः सूत्रकाराभिमतइति

ज्ञायते॥अपिच दर्शनाच्चेत्यन्तेन श्रुतिस्मृतिप्रत्यक्षैः सर्वविरुद्धधर्माश्रयत्वेन विरोधं परिहृत्य युक्त्याऽपि प्रतिषेधति प्रकृतेति॥ अस्थूलादिवाक्यैरेतावत्त्वं स्थूलत्वाणुत्वह्रस्वत्वादिकं श्रुतिर्ब्रह्मणि यत्प्रतिषेधति तत्प्रकृते लोके प्रकृतं वा यल्लौकिकमेतावत्त्वं तदेव प्रतिषेधति ननु स्वोक्तान् धर्मान् सर्वेशितृत्वादीनित्यर्थः॥ एवमेव नेतिनेनेतीत्यत्र॥ इतिशब्दः प्रकारवाची तथाच पूर्वं मूर्त्तामूर्त्तं ब्रह्मणोविभूतिरूपं यएवंवेदेत्यन्तेन निरूप्य यस्यैतद्रूपद्वयं पूर्वमेव षष्ठ्यन्तेन पदेन निरूपितभेदस्य तस्मिन्निरूप्यमाणेष्वपि सर्वतःपाणिपादान्तत्वादिष्वेवं लौकिकत्वेन वेदनं माभूदिति भिन्नप्रक्रमेणैतत्प्रकारकं वेदनं ब्रह्मणोनिषेधति अथातइत्यादिना॥ अयमर्थः॥ ब्रह्मण्यपि मूर्त्तामूर्त्तरूपे सर्वतःपाणीत्यादिश्रुत्युक्ते वेदितव्ये परंत्वन्येन प्रकारेण न वेदितव्ये ब्रह्मणएते रूपे इति किन्तु ब्रह्मैवैते वेदितव्ये इत्यर्थः॥ अत्र विनिगमकमाह सूत्रकारः ततोब्रवीतिचभूयइति॥ यस्मिन्नेव वाक्ये प्रकरणे वा निषेधति तस्मिन्नेव निषेधानन्तरं पुनस्तं धर्ममाह श्रुतिः॥ यथा पराञ्चिखानीत्युक्त्वा प्रत्यगात्मानमैक्षदिति ॥ यतोवाचोनिवर्त्ततेअप्राप्यमनसासहेत्युक्त्वा आनन्दंब्रह्मणोविद्वानिति अस्थूलाद्युक्त्वा एतस्यैवाक्षरस्यप्रशासनेगार्गिद्यावापृथिवीविधृतेतिष्ठतइत्यादि॥ त्वद्व्याख्यानेतु प्रकृतपदं व्यर्थं स्यात्॥ एतावत्पदेनैव सान्निध्यतोरूपद्वयप्रतीतेः सम्भवात्॥ नचैतावत्पदस्य सामान्यवाचकत्वाद्विशेषगमकत्वं तस्येति वाच्यं॥ तुल्यत्वात्॥ अथवा अत्रहि नेतिनेतीतिवाक्यं विचार्यते निषेधः कस्येति॥ तत्र सूत्रे प्रकृतशब्देन द्वेवावब्रह्मणइत्यादिनोक्तं मूर्त्तामूर्त्तलक्षणं रूपद्वयं परामृश्यतइति तवाऽभिमतं॥तथाच

प्रकृतं प्रतिषेधतीत्येतावतैव चारितार्थ्ये सत्येतावत्पदं व्यर्थं ॥ तेनाऽ-
स्मदुक्तएवाऽर्थोव्यासाभिमतइति मन्तव्यं॥तथाच सविशेषनिर्विशे-
षनिरूपिकयोः श्रुत्योर्विरोधाभावात्प्रापञ्चिकधर्मरहितं सहजान-
न्तधर्मयुक्तं ब्रह्मेति सिद्धं ॥ ३२ ॥ ॥ अथ ननुसूत्रेष्वपीत्यादि-
धर्मयुक्तंब्रह्मेतिसिद्धमित्यन्तोद्वात्रिंशः खण्डः खण्ड्यते ॥ ॥ अ-
रूपवदेव प्रकृतैतावत्त्वंहि नस्थानतोपि आहचतन्मात्रमिति सूत्रा-
णि प्राग्व्याख्यातानि ॥ अत्र यद्वाच्यं तच्चोक्तं प्राक् ॥ तत्स्वभाव-
त्वं ब्रह्मणि न सम्भवतीतितु पूर्वपक्षिणेष्टापत्त्या परिहर्तुं शक्यं
तत्स्वभावत्वस्याद्यपर्यन्तं ब्रह्मण्यसिद्धत्वात्सूत्राक्षराऽलभ्यश्चायम-
र्थः ॥ आकाराणां प्रपञ्चमध्यपातित्वकथनं रेमूढेत्याद्यनुपदोक्तेन
विरुद्धमिति एतद्रीत्याऽस्य सूत्रस्याऽनुत्थानमेव स्यात् ॥ त्वदभि-
मतस्येत्यसङ्गतम् ॥ निर्विशेषस्याऽसङ्गत्वेन प्रपञ्चानन्तर्गतत्वात्॥अ-
तएव कस्मिन् प्रतिष्ठितः इति प्रश्ने स्वे महिम्नीत्युक्तं श्रुतौ ॥ तद-
न्तरस्येत्यादिवाक्यानां तु मायिकाधिष्ठानताबोधनपरत्वम् ॥ अ-
सौत्रार्थश्चायं नहि प्रपञ्चे इत्यादिर्गालीवत् ॥ अनधीतशब्दार्थम-
र्यादाबोधकशास्त्रकतया तथा विगृह्य रूपशब्दार्थं व्यवहारविष-
यत्वं ब्रूषे तथापि रूपवच्छब्दस्य विश्वमात्रे रूढ्यभावेन तत्र यौ-
गिकत्वमेव स्यादिति ब्रह्मण्यव्यवहारविषयत्वसिद्धौ भक्षितेऽपि
लशुने न व्याधिः शान्तः इतिन्यायाऽऽपातः ॥ तट्टीकाकारोऽपि
अन्धलग्नोऽन्धइव तदर्थाऽज्ञानान्धकूपेऽपतत् ॥ द्वितीयव्याख्यायां
नतु रूपवादिति प्रसज्यप्रतिषेधविवक्षायां समासश्चिन्त्यः ॥ व्या-
ख्याद्वयेऽप्यधिकं प्रागुक्तम् ॥ अरूपमित्युक्ते सविशेषवाक्याचा-

रितार्थ्यशङ्कायां तत्प्रधानत्वादित्युक्तम् इति तच्चरितार्थम् ॥ रूपा-
त्मकत्वं तु गुणमात्रात्मकत्वमङ्गीकुर्वतस्ते घटते ॥ अस्मन्मते तु सू-
त्रे रूपशब्देनाकारोगृह्यते ॥ रूपंस्वभावेसौन्दर्येनालोकपशुशब्द-
योः ग्रन्थावृत्तौनाटकादावाकारश्लोकयोरपि इति मेदिनीकोशा-
त् ॥ दर्शनाच्चेत्यनेन श्रुतिस्मृतिप्रत्यक्षैरिति तु विरुद्धम् ॥ अरूप-
वदेवेत्युपक्रमपठितस्य दर्शयतिचाथो अपिचस्मर्यते इत्यस्य नि-
र्विशेषब्रह्मपरत्वात् ॥ परस्यैव ब्रह्मणोदेहादिषूपाधिषु अनुप्रवेश-
स्य श्रुतौ दर्शनादित्यर्थकस्य दर्शनाच्चेति सूत्रस्य अतएवचोपमा-
सूर्यकादिवदित्युपक्रम्य पठितस्य सविशेषप्रतिपादकत्वेन वस्तुतः
सविशेषनिर्विशेषैक्यस्य तत्र सम्मतत्वेऽपि सर्वविरुद्धधर्माश्रयत्वे-
नेत्याद्यर्थस्य तत्राऽनुक्तत्वात् सूर्यकाद्युपमया विशेषस्योपाधिक-
ताया एव ततः प्रतीतेः ॥ यत्तु अस्य पित्रा भगवति सर्वे विरुद्धध-
र्मा दृश्यन्ते ॥ नहि दृष्टेऽनुपपन्नं नाम॥व्याघातात्॥तादृशमेव तद्व-
स्त्वित्यध्यवसायः प्रामाणिकः ॥ चकारादुलूखलबन्धनादिषु प्रत्य-
क्षमेवोभयसाधकं दृष्टमित्याद्यूचे ॥ तत्राऽयमारूढपतितः प्रष्टव्यः
किन्त्वया दृष्टाविरुद्धधर्माइति॥ यद्योमिति ब्रूयात्तर्हि वाच्यं त्वा-
दृशानामपिचेद्भगवद्दर्शनं तर्हि सर्वेऽप्यारुह्य पतेयुरेव तद्दर्शनार्थं ॥
यदिच ब्रूयाद्यशोदादिभिर्दृष्टाइति तर्हि वाच्यम् एवंहि दर्शनाच्चे-
ति सूत्रकारोन ब्रूयात् किन्तु स्मरणाच्चेति ॥ परदृष्टे तथोक्तेस्तच्छै-
लीसिद्धत्वात् ॥ लोके यदेतावत्त्वमित्यर्थे समासश्चिन्त्यः॥विष्णा-
वितिश्लोकोक्तंचात्रानुसन्धेयम् ॥ इतिशब्दस्याऽभिव्यक्तपदार्था-
इतिन्यायेनेदमर्थपरत्वं यत्प्राप्तं तद्विहाय निर्मूलार्थान्तरवर्णनेऽपि
नेतीत्यस्य प्रकाराभावोऽर्थः स्यात् नत्वन्येन प्रकारेण नेति ॥ कि-

श्च प्रतियोग्यनुपस्थित्या नञा भेदबोधनमपि निर्मूलम् ॥ असमा-
सस्थले नञोभेदवति लक्षणया पदान्तरार्थेऽभेदाऽन्वयोऽपि व्युत्प-
त्तिविरुद्धः॥नञ्शब्दान्तरेणान्येन प्रकारेण न वेदितव्ये इत्यर्थकरणं
च न युक्तम् ॥ इतिशब्दान्तरस्य वैयर्थ्यात् ॥ अन्यत्तु प्राङ्निरस्तम्॥
एतावत्त्वशब्दप्रकृतशब्दयोस्तुल्यार्थत्वकथनन्तु शब्दतत्त्वज्ञानात् ॥
अतएव यथेष्टं तौ शब्दौ व्याचख्यौ ॥ एतयोः पदयोः साफल्यन्तु
प्रागुक्तम् ॥ प्रकृतशब्देन ब्रह्मणोग्रहणंतु नाऽस्मत्सम्मतमिति त्वद्गु-
रोस्तथोक्तिरस्मन्मताज्ञानमूलिकैव ॥ एवञ्च ब्रह्मणोनिर्विशेषत्वे न
किञ्चिद्बाधकम् ॥ इति द्वात्रिंशखण्डखण्डनम् ॥ ३२ ॥ ॥ यत्तु
दृश्यत्वे प्रकाश्यत्वे चाऽदृश्यमग्राह्यं नतत्रसूर्योभातीत्यादिश्रुतिवि-
रोधान्न विशेषकथनं युक्तमिति ॥ तदसत्॥दृश्यत्वस्याऽपि श्रुति-
स्मृतिसिद्धत्वात् ॥ तथाहि ॥ कश्चिद्धीरःप्रत्यगात्मानमैक्षदावृत्तच-
क्षुरमृतत्वमिच्छन् ज्ञानप्रसादेनविशुद्धसत्त्वस्ततस्तुतंपश्यतिनिष्क-
लंध्यायमानः भक्त्यात्वनन्ययाशक्यअहमेवंविधोर्जुन ज्ञातुंद्रष्टुं-
चतत्त्वेनप्रवेष्टुंचपरंतप शृण्वन्तिगायन्तिगृणन्त्यभीक्ष्णशःस्मरन्तिन-
न्दन्तितवेहितंजनाः तएवपश्यन्त्यचिरेणतावकंभवप्रवाहोपरमंपदां-
बुजमित्यादि ॥ एवंच सत्युभयाऽविरोधायाऽदृश्यत्वादिनिरूपिका
श्रुतिरिन्द्रियाद्यसामर्थ्येन दृश्यत्वं निषेधति ॥ दृश्यत्वनिरूपिका
भगवदनुग्रहेणैव भगवतोदृश्यत्वं वदतीत्यवधारणीयं ॥ यतोभग-
वतैवोक्तं मयाप्रसन्नेनतवार्जुनेदंरूपंपरंदर्शितमात्मयोगादिति ॥
अत्राऽऽत्मयोगपदात्प्रसन्नः सन् स्वसामर्थ्यं दत्वा दर्शयतीति ज्ञा-
यते ॥ ब्रह्माणं प्रतिभगवद्वाक्यं ॥ मनीषितानुभावोयंममलोका-
वलोकनमिति ॥ अतएव सूत्रकारोऽप्याह दृश्यत्वपूर्वपक्षे अपि

संराधनेप्रत्यक्षानुमानाभ्यामिति ॥ अपीति पूर्वपक्षगर्हायां ॥ मूर्खः पूर्वपक्षीति ॥ यतःसम्यगाराधने पश्यन्ति ॥ कथमेवं प्रत्यक्षानुमानाभ्यां अनेकबाहूदरवक्त्रनेत्रंपश्यामीतिप्रत्यक्षं ध्रुवादीनामनुमापकत्वं ताभ्यामित्यर्थः ॥ श्रुतिस्मृतिभ्यामितिवा ॥ एवंसति मां सर्वे पश्यन्त्विति साधारणेच्छया प्रादुर्भावेन सर्वेषां दर्शनसामर्थ्यमवतारदशायां ॥ अन्यदातु नाहंवेदैरिति भक्त्यात्वनन्ययेतिवाक्याच्च भक्त्यैवेति निर्णयः ॥ भक्तानां त्ववतारदशायामपि भक्त्यैव न साधारणेच्छया ॥ तद्भक्त्यैव तदर्थमेव प्रादुर्भावात् ॥ साधारणेच्छापि यतस्तदर्थैव ॥ लोकमध्यएव यतस्तेषां सुखजननं ॥ अन्यथा लोके स्वप्राकट्यं निष्प्रयोजनकं स्यात् ॥ सर्वेषां भगवद्दर्शनेऽपि यन्मोहानपगमस्तत्र तदिच्छैव प्रतिबन्धिका ॥ तस्य सत्यसंकल्पत्वात् ॥ एवमेव भगवत्स्वरूपाऽज्ञानमपि अलौकिकतेजोऽप्रदर्शनं॥लौकिकानुकरणंच लीलार्थमेव ॥ अन्यथा लीलैव न संभवति ॥ सर्वेषांच तदैव मोक्षः स्यात्तथासति सृष्टिमर्यादोच्छेदः स्यात् ॥ एवमेव प्रकाश्यत्वमपि ज्ञेयं ॥ यदादित्यगतंतेजोजगद्भासयतेखिलं यच्चंद्रमसियच्चाग्नौतत्तेजोविद्धिमामकमिति वाक्यात्स्वतेजसा स्वस्य प्रकाश्यत्वमपि नाऽतिविरोधि ॥ सर्वव्यवहारविषयत्वं च भगवत्कृतमेव नतु जीवेन स्वतः कर्त्तुं शक्यं॥अतएव सूत्रकारोऽप्याह प्रकाशवच्चाऽवैयर्थ्यादिति॥अर्थस्तु पूर्वेणाऽऽकारे प्रतिपादितेऽपि यतोवाचः तन्त्वौपनिषदमित्यादिनिरूपितव्यवहारविषयत्वाविषयत्वविरोधो न परिहृतः ॥ शास्त्रवैफल्यंचेत्यतआहेदं यथा सौरादिप्रकाशोव्यवहार्योऽव्यवहार्यश्च नहि स्वतः संपादयितुं स्थापयितुं वा शक्यते ॥ आगते तु सूर्ये मेघा-

यभावेच सांनिध्यमात्रेण व्यवहारः कर्त्तुं शक्यते ॥ तथाच लौकिकवाङ्मनोभिर्नशक्यते व्यवहर्त्तुमीश्वरसांनिध्ये तु शक्यतइति द्वयमाह श्रुतिः कुतएतदवैयर्थ्यात् ॥ अन्यथैकस्याः श्रुतेर्वैयर्थ्यापत्तेरिति दर्शनव्यहारस्य श्रुतिसिद्धत्वमुक्तमेव ॥ तथाच दर्शनव्यवहारन्यायेनाऽपरस्याऽपि व्यवहारस्य निर्णयः॥तथाचोक्तं श्रीभागवते ॥ पश्यन्तितेमे इत्युपक्रम्य साकंवाचंस्पृहणीयांवदन्तीति यमेवैषवृणुतेतेनलभ्यइत्यादिश्रुत्याच ॥ ननु दर्शनं ज्ञानमेव नतु चाक्षुषं श्रुत्या निरूप्यते॥ब्रह्मणोऽरूपित्वादितिचेत् ॥ न॥भक्त्यात्वनन्ययेतिवाक्ये ज्ञातुंद्रष्टुंचतत्त्वेनप्रवेष्टुंचपरंतपेतिज्ञानदर्शनप्रवेशानां भिन्नतयैव निरूपणात् ॥ रासादिरूपव्यवहारः प्रमाणसिद्धइति तत्र प्रसिद्धकामतद्भावरिरंसारमणादयोऽपि शुद्धब्रह्मधर्माएवेति ज्ञेयं ॥ सर्वशक्तिरितिश्रुतौ पराऽस्यशक्तिर्विविधैवश्रूयतेस्वाभाविकीज्ञानबलक्रियाचेतिश्रुतौच सहजाऽनन्तशक्तिमत्त्वेन निरूपितत्वेन सर्वार्थोपपत्तेः ॥ तेनकामसमयएवाऽकामोऽपि निजचरणनखरसुषमालेशजिताऽशेषसुरसुन्दरीणामखिलस्त्रीरत्नभूतानां व्रजवरवधूनामनवद्यत्वद्यकनकाचलेषु विहरन्नप्यात्मारामएव ॥ अतएव आत्मारामोपीति तत्रोक्तं ॥ प्रियाविप्रयोगेनाऽवसादादिभावं भजमानोऽपि तन्नवेद्मीत्यादिवचनैरजानन्नपि व्यापकएव परमानन्दरूपएव सर्वज्ञएव ॥ ३३ ॥ ॥ अथ यत्तुदृश्यत्वेइत्यादिः सर्वज्ञएवेत्यन्तस्त्रयस्त्रिंशः खण्डः खण्ड्यते ॥ ॥ तत्र निर्विशेषस्य ज्ञेयत्वादिबोधकानि वाक्यानि वृत्त्युपहितस्य वृत्तिव्याप्यत्वबोधकानि दृश्यतेत्वग्र्ययाबुद्ध्येत्यादिश्रवणादित्युक्तम् ॥ सविशेषस्य तु ज्ञेयत्वादिकमिष्यतएव ॥ त्वदुदाहृतभगवद्वाक्यइदं रूप-

मिति विशेषोपादानादेतादृशे वाक्यान्तरे एतदेकवाक्यतया ऽवता- रूपस्यैव दृश्यत्वबोधनाच्च ॥ तस्यचोपासनादिजन्यतत्कृपयैव दर्शनादि नत्वन्यथा ॥ सामान्यचक्षुषां प्रेतदर्शनेऽप्यसामर्थ्यात्प्रेते- च्छयैव सामर्थ्याच्च किमु वक्तव्यं भगवतः सर्वैश्वर्यवतोदर्शने ॥ आत्मयोगशब्दार्थस्तूक्तः प्राक् ॥ सूत्राऽर्थे रेमूर्खेत्युक्त्योत्पस्यनु- रूपा गालिमत्त्वैव स्वस्याऽऽविष्कृता ॥ प्रत्यक्षाऽनुमानाभ्यामित्य- स्यार्थेऽर्जुनस्य प्रत्यक्षं ध्रुवादेरनुमापकमिति वदंस्तूपेक्ष्यएव ॥ ध्रु- वस्याऽपि पुराणेषु ईश्वरसाक्षात्कारस्योक्तत्वात् ॥ प्रत्यक्षाऽनुमा- नाभ्यामितिशब्दस्य सूत्रकारेणेदृशेऽर्थे क्वाप्यप्रयुक्तत्वाच्च ॥ अ- पिसंराधने इत्युक्तत्वेन प्रतिज्ञाविरोधाच्च ॥ अर्जुनादिदर्शनादेः संराधनेऽभावात् ॥ संराधनं समाधिः ॥ संसिद्धिरूपत्वाद्धात्वर्था- नुगमात् ॥ आङ्पूर्वस्यार्थान्तरपरत्वेऽपि संपूर्वस्य राधेस्तथात्वे मानाभावात् ॥ वेदैरित्यस्य सविचारैस्तैरित्यर्थकरणे द्रष्टव्यःश्रो- तव्यः तन्त्वौपनिषदम् इतिश्रुतिविरोधः किन्तु सामान्यतोधीतैरि- त्येवार्थः ॥ सत्यपिदर्शने मोहानपगमस्तु जनानां तदपगमसाध- नाऽभावान्नतु तदनपगमविषयकभगवदिच्छया ॥ भगवतोनैर्घृण्य- प्रसङ्गात् ॥ अतएव सत्यामपीश्वरेच्छायां न सृष्टिविच्छेदः ॥ अ- तएवच मयाऽनुकूलेननभस्वतेरितंपुमान्भवाब्धिनतरेत्सआत्महेति भागवतोक्तं सङ्गतम् ॥ एवञ्च स्वदुक्त्याऽप्येवमेव फलितं ॥ भगव- द्दर्शनेऽपि न मोहाद्यपगमः॥यद्दर्शने च न मोहाद्यपगमस्तस्य ब्रह्म- त्वेसत्यामपि पातनेच्छायां भिद्यतेहृदयग्रन्थिरिति श्रुति विरो- धोदुर्वारएव ॥ स्वतेजसा स्वस्य विरोधाभावे केन तेजसा प्र- काशे विरोधइति देवानांप्रियः प्रष्टव्यः ॥ सर्वस्याऽपि तेज-

सत्तदीयत्वात् ॥ किञ्चेदानीं नतत्रेति श्रुतिर्निरवकाशैवेत्युक्तं स्यात् ॥ तथाच युक्तमेव ते श्रुत्यर्थव्याख्याकौशलम् ॥ सविशेषस्य सर्वव्यवहारविषयत्वं न निषेधामः ॥ प्रकाशवच्चेति सूत्रार्थः पूर्वं दर्शितः परोक्तेऽर्थे दोषाश्च दर्शिताः ॥ यमेवैषइति श्रुतिश्च व्याख्याता॥भक्त्यात्वनन्ययाइतितु एवंविधइत्युक्त्या सविशेषपरं न निर्विशेषउपयुज्यते ॥ कामसमयेऽप्यकामस्त्वधिष्ठानरूपेण ॥ अन्यत्सर्वं मायया सुघटम् ॥ इति त्रयस्त्रिंशखण्डखण्डनम् ॥ ३ ३॥

॥ ॥ ननु प्रतियोग्यभावयोरेकावच्छेदेनस्थितिर्न वक्तुं शक्या ॥ तथैव विरुद्धधर्माणामप्यतोनैवं वक्तुं युक्तमितिचेन्न वयं वदामः किन्त्वनुवदामोऽतोन वयम् पर्यनुयोगार्हाः ॥ यदनुवादस्तां श्रुतिं चेत्पर्यनुयोक्तुमुद्यतोऽसि महत्ते साहसं खद्योतस्येवोदयाचलशिखरैकदेशस्थितिमात्रेण सकलजगत्तमःकपाटविपाटनपटुत्वाशक्यतया तरणिं पर्यनुयोक्तुमुद्यतस्य ॥ अथ लोके तथादर्शनात्तदर्थानुसारेणैव च तदर्थस्य वक्तुमुचितत्वात् ॥ श्रुतित्वेनोभयस्याऽपि तुल्यत्वात् सगुणनिर्गुणपरत्वं कल्प्यतइतिचेत् हन्तैवं लोकाऽनुसारेण तदर्थनिर्णये निर्द्धर्मकपदार्थस्याऽपि लोकेऽदर्शनात्सत्तादीनामपि कालाद्याधारत्वसमवायादिधर्मवत्त्वात्तदभिमतं ब्रह्माऽपि न सिद्ध्येत् ॥ श्रुतिबलेनेति तुल्यं ॥ एवंसति लोकाऽप्रतीतं निर्द्धर्मकं वस्तु चेदङ्गीकुरुषे तदा लोकाऽप्रतीतामपि प्रतियोग्यभावयोरप्येकावच्छेदेन स्थितिमङ्गीकुरु ॥ एवंसति श्रुत्यर्थोमलोकरीत्या निर्णेतुं शक्यतइति सिद्धं ॥ अतएव श्रुतिरप्याह नैषातर्केणमतिरापनेयेति ॥ अलौकिकास्तुयेभावानतांस्तर्केणयोजयेदिति स्मृतिश्चेति पूर्वमेवावोचाम ॥ किञ्च ॥ भगवति श्रीयशोदास्तनंधये सर्वे

विरुद्धाधर्मादृश्यन्ते मृत्सोलूखलादिप्रसङ्गेषु ॥ नहि दृष्टेऽनुपपन्नं नाम ॥ व्याघातात् ॥ मायादिपक्षाणां तत्रैव निरस्तत्वात् ॥ अथो-अमुष्येत्यनेन तद्धर्मत्वेनैव निरूपणात् ॥ अतएव सूत्रकारोऽप्याह दर्शनाच्चेति ॥ अपिच मायया दर्शयतीति वदन् वादी प्रष्टव्यः ॥ किं मायाशब्देन भगवत्सामर्थ्यं ब्रवीष्युत तद्भिन्ना सद्रूपा सत्कार्य-कर्त्रीति ॥ आद्ये त्वोमिति ब्रूमः ॥ नच स्वसामर्थ्येनैवासत्प्रदर्शि-तवानिति वाच्यं ॥ यःपृथिव्यांतिष्ठन्पृथिवीमन्तरइत्यादिश्रुत्या ब्र-ह्मधर्मत्वेनैव निरूपणात् ॥ तादृशं ब्रह्म चेन्नस्यात्तदैवं वक्तुमवसरः स्यान्नत्वेवं ॥ उक्तयुक्तेः ॥ असत्प्रदर्शनं चासुरेष्वेव ॥ यतोमोहनं तेषामेव भगवता क्रियते ॥ अत्रच तादृशानामभावान्न तथा प्र-दर्शनमिति सारं ॥ नद्वितीयः ॥ विकल्पाऽसहत्वात् ॥ तथाहि॥सा किं स्वतंत्रैव कर्त्री उत ब्रह्माऽऽधीना ॥ नाद्यो जडत्वाच्चेतनत्वेन त्वयाऽनङ्गीकाराच्च ॥ द्वितीयपक्षेतु करणं स्याद्वासीवत् ॥ तथाच सहजाऽनन्तशक्तिमतईश्वरस्य स्वरूपदर्शने कावाऽशक्तिर्यत्तस्ता-मूरीकुर्यात् ॥ स्वाभाविकीज्ञानबलक्रियाचेतिश्रुतेः ॥ किञ्च ॥ उ-क्तयुक्तिश्रुतिभ्यः सद्रूपं स्वरूपमसद्रूपया तया दर्शयतीति वक्तु-मशक्यं ॥ एतेनैव सगुणत्वमपि प्रत्याख्यातं ॥ तद्धि प्राकृतसत्त्वा-दिगुणाङ्गीकाररूपं ॥ तच्च स्वतः शक्तस्याऽनुपपन्नमित्युक्तं ॥ एते-नैव ब्रह्मगताऽविद्या ब्रह्मगतविशेषकल्पिकेत्यपि पूर्वविकल्पगत-द्वितीयपक्षोनिरस्तः ॥ ब्रह्मणि जीवातिरिक्ते त्वया तथाऽनङ्गीका-राच्च ॥ अङ्गीकारे वा तस्याउपाधिभावे प्रयोजिकेश्वरेच्छैव वा-च्या ॥ तथाच सर्वभवनसमर्थस्येश्वरस्य त्वदभिमतरीत्या तथाक-रणे हेत्वभावः ॥ इच्छादीनामपि त्वन्मते तदुपाधिभावोत्तरका-

लीनत्वादसम्भवश्च ॥ आविद्यकत्वे स्वाभाविकत्वहान्या श्रुतिवि-
रोधश्चेति दिक् ॥ ३४ ॥ ॥ अथ ननुप्रतियोगीत्यादिर्विरोधश्चे-
तिदिगित्यन्तश्चतुस्त्रिंशः खण्डः खण्ड्यते ॥ ॥ तत्र निर्धर्मकपदार्थ-
स्येत्यत्र पदार्थशब्देन यदि वस्तुमात्रं गृह्यते तर्ह्यनवस्था ॥ तत्रतत्र
धर्मान्तरस्वीकारस्याऽऽवश्यकत्वात् ॥ किञ्चिद्दूरं प्रधाव्य तत्त्यागे य-
त्र त्यागस्तत्रैव व्यभिचारः ॥ यदि च पदशक्तिविषयोगृह्यते तर्ह्या-
काशत्वादिर्न जातिरिति मते शब्दसमवायिकारणत्वादिविशिष्टे
आकाशादिपदशक्तौ शब्दसमवायिकारणमाकाशमित्यादिसह-
प्रयोगाऽनुपपत्त्या तादृशधर्मोपलक्षिते तादृशशब्दशक्तिर्वाच्येति
तत्र व्यभिचारः ॥ किञ्च जातिशक्तिपक्षे गोत्वादेर्निर्धर्मकस्यैव प-
दार्थत्वमस्ति ॥ तत्पक्षे ऽतिप्रसङ्गस्त्वन्यत्र दर्शितदिशा वारणीयः ॥
लोकाऽप्रतीतमपि वस्तु स्वर्गादिवत्स्वीकुर्मोऽपूर्वत्वेन श्रुतितात्पर्य-
विषयत्वात् ननु तात्पर्यग्राहकाऽभावे लोकविरुद्धं ॥ तत्स्वीकारे
बहुशोदोषस्योक्तत्वात् ॥ श्रुत्यर्थोलोकरीत्यैव विचार्यइत्युक्तम् ॥
नैषेत्यादेरपि मतिरुक्तैव॥सल्लाभक्षणोलूखलबन्धनादिप्रसङ्गेषु वि-
रुद्धाधर्माश्चेत्त्वया दृष्टा स्तर्हि गन्धर्वनगरादितुल्यास्ते ॥ तात्कालि-
कैश्चेद्दृष्टास्तर्हीदानीन्तनानां दर्शनाऽभावेनैतेषां नहिदृष्टेऽनुपपन्नं-
नामेतिन्यायावतारणं न सङ्गच्छते॥अथोअमुष्येत्यनेन मायिकत्व-
मेवोच्यते॥दर्शनाच्चेत्यस्य त्वर्थउक्तः॥यःपृथिव्यांतिष्ठन्नित्यादिवि-
षयेतूक्तम्॥अनन्तशक्तिमत्त्वं भगवतोमाययैव॥मायैवच पराऽस्यश-
क्तिरितिषष्ठ्या भेदेन निर्दिष्टा ॥ तस्याब्रह्माश्रितत्वानङ्गीकारोक्ति-
स्त्वसद्ग्रन्थानवलोकनात् ॥ तथाचसंक्षेपशारीरकम् ॥ आश्रयत्व-

विषयत्वभागिनीनिर्विभागचितिरेवकेवलेति ॥ उपाधिभावप्रयोजकं न किञ्चिदनादित्वात् ॥ भावेवोपाधिस्वरूपमेव तथेति बोध्यम् ॥ एतेनैव हेत्वभावइत्यन्तमपि प्रत्युक्तम् ॥ इच्छादीनामसम्भवश्च परिहृतः प्राक् ॥ तेषां स्वाभाविकत्वेतु प्रमाणाभावः ॥ इतिचतुस्त्रिंशखण्डखण्डनम् ॥ ३४ ॥ ॥ ननु कामादिलीलायांअनुकरणमात्ररूपत्वेन प्रियावियोगतत्क्लेशादयः पूर्णे ज्ञानैकघने परमान्दस्वरूपे न वक्तुमुचिताइतिचेत्सत्यं ॥ नोचिताएव स्युर्यदि विप्रयुक्तत्वादिना पूर्णत्वादिकं भज्येत नत्वेवं तत्तूक्तं प्रादेशमात्रस्यैवाऽभिविमानत्वादिनिरूपणेन ॥ अनुकरणमात्रत्वं लीलायाअसङ्गतं ॥ तथाहि ॥ भगवत्स्वरूपंहि श्रुत्येकसमधिगम्यं ॥ तत्रच सर्वकामःसर्वरसइत्यनेन सर्वकामरूपत्वं तद्वत्त्वं च सर्वरसरूपत्वं तद्वत्त्वेन सर्वरसभोक्तृत्वं च प्रतिपाद्यते ॥ तैत्तिरीयकेऽपि रसोवैसः रसंह्येवायंलब्ध्वानन्दीभवतीति पठ्यते ॥ रसेषुच शृङ्गाररसस्य मुख्यत्वात्तस्यच रत्याख्यस्थायिभावस्वरूपत्वात्तद्रूपत्वं तद्वत्त्वं चाऽवश्यं वाच्यं ॥ तत्र व्रजवरसुन्दरीभावत्वेन तद्भावानुसारेणैवच सर्वकरणैनैतद्रसरूपत्वं ॥ एतच्च बर्हापीडेति अक्षण्वतामिति चूतप्रवालेति श्लोकविवरणे प्रपञ्चितं पितृचरणैरित्यत्र दिङ्मात्रं प्रदर्श्यते ॥ भगवानपि तासु तादृशभाववानिति तद्वत्त्वं भगवतस्तद्रूपत्वं च॥भगवति भावानामपि स्वरूपातिरिक्तानामभावात्॥ अन्यथा श्रुत्युक्तं रसभोक्तृत्वं रसरूपत्वं च भज्येत ॥ एतस्य रसस्यैतादृशत्वादेव तथामन्तव्यं॥तथाच यावती तस्य रसस्य मर्यादा तावती सर्वाऽपि भगवत्यस्तीति मन्तव्यं ॥ अन्यथा रसत्वव्याहतिरित्युक्तं॥नह्यनुकरणे स्वस्मिन् सरसआपद्यते॥तासां वा रसोत्पत्तिः॥

अन्योन्यमनाविर्भावे तद्रसत्वं तत्र नास्तीति यत स्तद्रसशास्त्रमर्यादा ॥ अतएव गजदृष्टान्तः सर्वत्र आत्तगजेन्द्रलीलः यथामदच्युद्विरदः करेणुभिः श्रान्तोगजीभिरिभराडिवभिन्नसेतुरित्यादि ॥ अतः शृङ्गाररसरूपत्वेन प्रियावियोगतत्कार्यतत्संगमतत्कार्याः सर्वएव सम्भवन्तीति न ब्रह्मत्वक्षतिः ॥ वस्तुनएव तथात्वात् ॥ प्रत्युत ब्रह्मत्वसाधकाएव ॥ विरुद्धसर्वधर्माधारत्वात् ॥ वस्तुतस्तु ब्रह्मगतधर्मेषु विरोधएव नास्ति ॥ श्रुतिभक्तानुभवसिद्धत्वादित्युक्तं ॥ तदुक्तं श्रीभागवतेऽपि नहिविरोधउभयंभगवत्यपरिगणितगुणईश्वरेऽनवगाह्यमाहात्म्येऽर्वाचीनविकल्पवितर्कविचारप्रमाणाऽऽभासकुतर्कशास्त्रकलितान्तःकरणदुरवग्रहवादिनां विवादाऽनवसरइति सर्वमनवद्यं ॥ अथ कृत्वा चिन्तयोच्यते ॥ यदि महिलतयाऽत्मारामत्वादयएव ब्रह्मणि नान्ये धर्माइति मनुषे तदाऽपि वदामः ॥ अस्तु त्वदुक्तं परन्तु सा ब्रह्मधर्ममर्यादा ॥ अत्रच भक्तेष्वतिशयितानुग्रहेण तद्भक्त्यातिशयेन च स्वस्वरूपमर्यादामप्यतिक्रम्य तदधीनत्वं प्राप्तः सन्यथैव तदभीष्टं भवति तथैव लीलां कुर्वन्नुक्तसर्वभावान्स्वयमेव भजतइति भगवतः पुष्टिरूपमिदमुच्यते॥तदुक्तं भगवता दुर्वाससं प्रति॥अहंभक्तपराधीनोह्यस्वतन्त्रइवाद्विजेत्युपक्रम्य वशेकुर्वन्तिमांभक्त्यासत्स्त्रियःसत्पतियथेत्यन्तेन॥अत्र सतूपदद्वयेन स्वस्य तेषु तथारूपत्वं तेषांच प्रतिपत्तिर्न माययेति ज्ञायते॥तथासति तुल्यत्वं न स्यात्॥नचाऽनीशत्वप्रसङ्गः॥एतस्यैव महदैश्वर्यरूपत्वात्॥नह्यन्यः स्वरूपमर्यादां त्यक्तुं समर्थः॥अतएव भिन्नसेतुरिति विशेषणं॥अतएवाऽचिन्त्यमहिमत्वं श्रुतिरप्याह यतोवाचइत्यादिना॥अतोयथायथा शङ्कसे तथाऽधिकं ब्रह्मत्वमेवायातीति चिरंजी-

व॥२५॥ ॥ अथ ननुकामादिलीलायाइत्यादिश्चिरंजीवेत्यन्तः पञ्चत्रिंशः खण्डः खण्ड्यते ॥ ॥ तत्र प्रादेशिकत्वादि मायिकमित्युक्तम् ॥ एवमेव वियोगसर्वरसत्वादिकमपि ज्ञेयम् ॥ रसोवैसइत्यत्र रसशब्देन शृङ्गाररूपोरसो न गृह्यते इत्युक्तं प्रथमखण्डखण्डने ॥ एवञ्च रसेषुचेत्यादिर्दिङ्मात्रमिह प्रदर्श्यते इत्यन्तोग्रन्थः स्वस्य स्वपितुश्च विटवादित्वख्यापनायैव ॥ निर्मूलत्वात् ॥ अतएव ग्रन्थारम्भोदाहृताः सर्वानिर्विशेषपराः श्रुतयः स्मृतयश्च सङ्गताः॥ एताभ्यएवोत्तरग्रन्थस्य तत्ख्यापनैकफलत्वं ज्ञेयम्॥किञ्चात्तगजेन्द्रलीलइत्यत्रात्तशब्दोपादानान्मायिकत्वमेव लीलायाभाति॥अन्यथाप्तकामत्वव्याहतेरित्युक्तं प्राक् ॥ ईश्वररमणस्य मायिकत्वं श्रीकृष्णस्यांऽशत्वं श्रुतीनां व्यवस्था चावोचि प्राक् ॥ विरुद्धधर्मवत्त्वब्रह्मधर्माविरोधावपि निरस्तौ ॥ अतएव भागवते ऽपरिमितगुणे इत्युक्तम् ॥ एतेन हि मायिकत्वं सगुणत्वं च स्पष्टमुक्तम् ॥ तदाऽपि वदामइति प्रतिज्ञायाऽतिशयिताऽनुग्रहेणेत्यादिकथनमसंगतम् ॥ तत्पक्षेऽनुग्रहादेरसंभवेन त्वदुक्तेस्तदातनत्वासंभवात् ॥ तस्मान्मर्यादामार्गविरुद्धः पुष्टिमार्गोमर्यादामार्गपरश्रुत्यादिविरोधादुपेक्ष्यएव ॥ तदनुपेक्षणे तु अन्यथासन्तमितिवचनोक्तं सर्वपापकर्तृत्वमेव ॥ तत्फलन्त्वसुर्यानामतेलोकाइतिश्रुत्युक्तमेव किञ्च अहंभक्तेत्यादिनाऽपि मायिकस्यैव कथनम् ॥ अतएवाऽस्वतन्त्रइवेतीवशब्दः प्रयुक्तः ॥ त्वन्मते वस्तुतस्तथाभावात्तन संगच्छते॥तथाचैतादृशपुराणवाक्येन श्रुतेर्मार्गान्तरपरत्वेन संकोचमाश्रित्य पुष्टिमार्गं स्वीकुर्वाणउपेक्ष्यएव॥आत्मारामत्वादिपरवाक्यानामिव ब्रह्महत्यादिनिन्दापरवाक्यानामपि तेन पुष्टीतरमार्गपरता-

यावत्कुंशक्यत्वात् पुष्टिमार्गेमर्यादान्तरस्यैवपुण्यपापफलनियमम-
र्यादाया अपि भगवता त्यक्तत्वेन तन्मार्गे विरोधाऽभावस्येष्टत्वात्॥
भगवदिच्छया जायतएवेति चेन्नरकमपि जायतएवेति वाच्यम्॥
ओमितिचेच्चिरं पुष्टिमार्गे नरकार्थं स्वीकुरु॥विप्रशापस्य दुरुच्छेद-
त्वात्॥मर्यादात्यागस्य महैश्वर्यरूपत्वे तत्स्वीकारोभगवतोमहैश्वर्य-
हानये स्यादिति बुद्धवत्सर्वमर्यादाभङ्गायैव यतेत बुद्धनिन्दा च पु-
राणेषु न संगच्छेत॥ तस्मान्मोहितौदेवमाययेतिवाक्येन पुत्रत्वेच
स्वीकारणस्य निन्दितत्वेन कामित्वादिना स्वीकारः सुतरां निन्दितः॥
इति प्रश्नत्रिशरखण्डखण्डनम्॥३५॥ ॥ यत्तु जीवाऽदृष्टसंपादि-
तशरीरं भूताऽवेशन्यायेनाऽऽविश्येश्वरः कार्यं कृत्वा ऽऽवेशं त्यज-
ति नत्वीश्वरे स्वाभाविकंशरीरादिकमस्ति॥ ज्ञानेच्छाप्रयत्ना-
तिरिक्तविशेषधर्माभावात् इति॥ तन्नूपेक्ष्यं॥ ईश्वरस्याऽकर्त्तृ-
त्वाऽऽपादकत्वात्॥ तथाहि॥ तन्मते हि सावयवत्वेनाऽनुमि-
तकार्यत्वकक्षित्यादिपक्षककर्त्तृपूर्वकत्वसाध्यककार्यत्वलिङ्गकानु-
मानेन जगत्कर्त्तृत्वेनैवेश्वरसिद्धिः॥कर्त्ताचोपादानगोचराऽपरोक्ष-
ज्ञानचिकीर्षाकृतिमानेव लोके दृष्टइति द्व्यणुकादिनगसागरान्तस्य
पक्षीकरणेन तत्कर्त्तृत्वेन सिध्यंस्तदुपादानगोचराऽपरोक्षज्ञाना-
दिमान्नित्यः सर्वज्ञएव भवतीति तादृक्कसिद्धिः॥ तथाच यथा
लोके ज्ञानादिमतएव कर्त्तृत्वं दृष्टमितीश्वरेऽपि ज्ञानादिसिद्धिरेवं
शरीरिणएव लोके कर्त्तृत्वं च दृष्टमितीश्वरेऽपि शरीरित्वसिद्धिर्नि-
ष्प्रत्यूहा॥ कर्त्तृत्वस्य शरीरित्वव्याप्यत्वात्॥ नन्वेवं कार्यत्वेनाऽ-
नित्यत्वानुमाने घटादिषु रूपसाहचर्यं लिङ्गस्य दृष्टमिति तद्वि-
शिष्टस्यैव तस्य व्याप्यत्वे रूपाऽभाववति वाय्वौ तदसिद्धिस्तत्सि-

ह्नौ वायौ रूपस्याऽपि सिद्धिः स्यात् ॥ नत्वेवं प्रत्यक्षबाधात् ॥ न-
नु साहचर्यमात्रमप्रयोजकं व्याप्तिरेव प्रयोजिका साच कार्य-
त्वाऽनित्यत्वयोरेवेति वायावपि तत्सिद्धिरतत्सिद्धिश्चेतिचेत् ॥ तर्हि
प्रकृतेऽपि कर्त्तृत्वप्रयोजकं ज्ञानेच्छाप्रयत्नवत्त्वमेवेति शरीरित्वस्य
तत्साहचर्यवत्त्वेऽपि न तत्प्रयोजकत्वमतोनेश्वरे तत्सिद्धिः ॥ अन्य-
था दृष्टान्तीयाऽशेषधर्मापत्तिः पक्षे स्यात् ॥ तथाच घटदृष्टान्तेन
जलेऽनित्यत्वसाधने पृथ्वीत्वादिकमपि सिध्येत् ॥ किञ्च चेष्टां
बिना प्रयत्नमात्रेण कुलालादेर्घटादेः करणे सामर्थ्याभावाच्चेष्टा-
श्रयस्य शरीरस्य सहकारित्वमस्तु नाम ॥ ईश्वरस्तु प्रयत्नमात्रेणैव
सर्वकरणसमर्थइति न तदपेक्षा ॥ किञ्च ॥ शरीरस्य परिच्छिन्नत्व
नियमेन युगपत्सकलदेशगतकार्याऽनुत्पत्तिप्रसङ्गइतिचेत् ॥ नैतत्सा-
धीयः ॥ ज्ञानादिमत्त्वस्येव शरीरित्वस्याऽप्यन्वयव्यतिरेकसिद्ध-
त्वात् ॥ तथाहि ॥ यत्र कुलालादिषु कर्त्तृत्वं तत्र शरीरित्वं यत्रच
मुक्तात्मस्वशरीरित्वं न तत्र कर्त्तृत्वमतईश्वरस्याऽपि कर्त्तृत्वे शरी-
रित्वमवश्यमङ्गीकर्त्तव्यं ॥ लोके तथादर्शनात् अन्यथेच्छादिकम-
पि न सिध्येदविशेषात् ॥ अथचेष्टां विनाऽपि प्रयत्नमात्रेण का-
र्यकरणे समर्थत्वादीश्वरस्य न तदाश्रयतत्सिद्धिरिति ब्रूषे तदेच्छा-
प्रयत्नौ विनाऽपि ज्ञानमात्रेणैव तथाकरणसमर्थत्वादीश्वरस्य ने-
च्छादिमत्त्वमित्यपि सुवचं ॥ नच शरीरस्य परिच्छिन्नत्वेनोक्त-
दोषापत्तिरिति वाच्यं ॥ अन्यथाऽनुपपत्तिबलात्सिध्यच्छरीरं या-
वताऽनुपपत्तिपरिहारस्तावद्रूपमेव सेत्स्यति ॥ शरीरपरिच्छेदानि-
त्यत्वनियमस्त्वनुपपन्नः ॥ पक्षधर्मताबलादपरिच्छिन्ननित्यस्यैव
सिद्धेः॥वस्तुतस्तु परिच्छेदानित्यत्वाद्यनुपपत्त्युद्भावनस्य शरीरसि-

त्ध्यसिद्धिव्याहतत्वेनाऽसम्भवएव ॥ अन्यथा ज्ञानस्याऽप्यनित्य-
त्वनियमेनेश्वरज्ञानस्याऽप्यनित्यत्वप्रसङ्गः ॥ यत्त्वीश्वरस्य कर्त्तृ-
त्वेन शरीरित्वसाधनईश्वराऽसिद्धावाश्रयाऽसिद्धिस्तत्सिद्धौ च ध-
र्मिग्राहकप्रमाणेनाऽशरीरस्यैव सिद्धत्वेन तद्बाधइति ॥ तत्त्वविचा-
रितरमणीयं ॥ तथाहि ॥ अत्र धर्मिग्राहकं प्रमाणं किमिति भ-
वान् पृच्छ्यते ॥ कार्यलिङ्गकमनुमानमितिचेद्ब्रवीति भवांस्तदा ते-
न कर्त्ता परं सित्ध्यति नाऽन्यत् ॥ ननु सत्यमेतत् परन्तु कर्त्ता स्व-
यं कर्त्तृत्वेन सित्ध्यन् स्वकर्त्तृत्वनिर्वाहकमादायैव सेत्स्यतीति व-
दामि ॥ अहो किं तन्निर्वाहकं ॥ ज्ञानेच्छाप्रयत्नाएव ॥ कुतएत-
त् ॥ यतोलोके कार्यकर्त्तृत्वं तद्वतामेव दृष्टं न तद्रहितानां ॥ तर्हि
शरीरस्याऽपि तत्समानयोगक्षेमत्वात् ज्ञानेच्छाप्रयत्नशरीरवानेव
सेत्स्यति ॥ अन्यथातु ज्ञानादिकमपि न सेत्स्यति ॥ लोके दर्शन-
स्य समानत्वादिति बुत्ध्यस्व ॥ ननु शरीरस्य महत्त्वेनोद्भूतरूपव-
त्त्वेन च चाक्षुषत्वं कथं न स्यात् ॥ लौकिकप्रत्यक्षाऽविषयत्वा-
दितिब्रूमः ॥ श्रूयतेहि देवानामपीन्द्रादीनामप्रत्यक्षत्वं विग्रहवतां
किंपुनरखिलदेवदेवस्याऽप्रत्यक्षत्वे शङ्कानाम ॥ किञ्च ॥ शङ्कानां
तत्सित्ध्युत्तरकालीनत्वात् ॥तत्सित्ध्यसित्ध्यनवसरपराहतत्वेनैवनो-
दयसम्भवइति संक्षेपः ॥ एतेन कार्यस्य शरीरादिमत्कर्त्तृपूर्वकत्व-
नियमः प्रत्यग्रजायमानाऽङ्कुरादावेव शरीरिणः कर्त्तुरनुपलम्भा-
न्निरस्तइति निरस्तं ॥ उक्तयुक्तिभिस्तत्रापि शरीरिकर्त्तृकत्वस्यैव
सिद्धेः ॥ अतोज्ञानदुर्बलव्यामोहनमात्रं परमेतन्मतं नतु सच्छा-
स्त्रीयमिति विद्वद्भिरुपेक्ष्यं ॥ एतदपि त्वन्मताऽनुसारेणैवोक्तं ॥ अ-
स्माकंतु प्रतिसत्कर्णजिह्वाग्रजागरूकोक्तश्रुतिस्मृतिपुराणवाक्य-

तत्त्वसूत्रभेरीघोषोद्घुष्टतया सर्वतःपाणिपादान्तत्वेनाचिन्त्यानन्तश-
क्तित्वेन भगवान् सिद्धइति नाऽनुमानमशकशृङ्गाराऽपेक्षापीत्यलं
प्रसक्ताऽनुप्रसक्त्या ॥ ३६ ॥ ॥ अथ यत्तुजीवादृष्टेत्यादिः
प्रसक्ताऽनुप्रसक्त्येत्यन्तः षट्त्रिंशः खण्डः खण्ड्यते ॥ ॥ त-
त्र स्वाभाविकशरीराभावसाधमार्थं ज्ञानेच्छेत्यादिर्हेतुरसङ्गतः ॥
शरीरस्य विशेषधर्मत्वे मानाभावादप्रयोजकश्च ॥ वैशेषिकैरी-
श्वरे सुखानङ्गीकारेऽपि नैयायिकैरानन्दंब्रह्मणोविद्वानितिश्रुति-
बलात्तत्र सुखाङ्गीकारेण स्वरूपाऽसिद्धश्च ॥ तस्मादिदं तन्मताऽ-
विज्ञानमूलकमेव कथनम् ॥ जगत्कर्त्तृत्वेनैवेत्येवकारोपन्यासोऽपि
तन्मताऽज्ञानमूलकः ॥ वेदनिष्ठेन तात्पर्यवत्त्वेन कार्यायोजनधृत्या-
देःपदात्प्रत्ययतःश्रुतेः वाक्यात्संख्याविशेषाच्चसाध्योविश्वजिदव्य-
यइति श्लोकोक्तैश्च हेतुभिस्तैस्तैः पृथक्पृथग्रूपेणेश्वरस्य साधित-
त्वात् ॥ लोके दृष्टत्वेनोक्तोनियमोध्वंसे व्यभिचारी ॥ उपादानश-
ब्देन समवायिनोग्रहणात् ॥ कर्त्तुरभावप्रसङ्गश्च॥एवञ्च क्षित्यादि-
कर्त्ता उपादानगोचरापरोक्षज्ञानचिकीर्षाकृतिमान् कर्त्तृत्वादिति
तट्टीकोक्तमनुमानं प्रत्युक्तम् ॥ भावत्वं तु खण्डनोक्तरीत्या निर्व-
क्तुमशक्यत्वेन न विशेषणं भवितुमर्हति॥कर्त्तृत्वस्य शरीरित्वव्या-
प्यत्वे मानाभावस्तर्काभावात् ॥ ज्ञानादिमत्त्वंतु न कर्तृत्वेन सा-
ध्यते किन्तु ज्ञानादिमत्त्वरूपमेव कर्त्तृत्वं॥किञ्च ज्ञानत्वेन का-
र्यत्वावच्छिन्नं प्रति हेतुत्वं नतु चेष्टात्वेनापि ॥ चेष्टायामेव व्य-
भिचारात् ॥ चेष्टायामपि चेष्टान्तरस्य हेतुत्वकल्पनेऽनवस्थाप्रसङ्गा-
त् ॥ नच तवाऽपि ज्ञाने व्यभिचारइति वाच्यं ॥ ज्ञानभिन्नत्वेन
हेतोर्विशेषणात् ॥ चेष्टाभिन्नत्वेनाऽपि विशेषणे तु गौरवम् ॥ ज्ञा-

नभिन्नत्वेन विशेषणन्तूभयसम्मतम्॥अन्यथा तवाऽपि ज्ञाने व्यभि-
चारात्॥एवञ्च ज्ञानादिभिन्नकार्यत्वेन ज्ञानत्वेन कार्यकारणभाव-
एवानुकूलस्तर्कः॥इच्छादिकं तु मानान्तरेण साध्यम् ॥ ईश्वरज्ञा-
नस्य नित्यत्वन्तु लाघवोपनीतत्वेनानुमितावेव भासते ॥ किञ्च
कार्यत्वं कृतिसाध्यत्वमिति कार्यत्वाङ्गीकारे द्व्यणुकादौ कृतिसाध्य-
ता सिद्धैव ॥ कृतिं प्रति समानविषयकेच्छात्वेन सामानाधिकर-
ण्येन हेतुताऽस्त्येवेतीच्छासिद्धिः॥शरीरसाधकंतु न सर्वसम्मतं कि-
ञ्चिल्लभ्यते इत्यलं नैयायिकमार्गपरिष्कारेण ॥ इति षड्त्रिंशखं-
ण्डखण्डनम् ॥ ३६ ॥ ॥ स्यादेतत् ॥ ब्रह्मधर्माः किं ब्रह्मणः
सकाशाद्भिन्नाअभिन्नावा ॥ नतावदाद्यः ॥ तेषामपि नित्यत्वेना-
ङ्गीकारादेकमेवाद्वितीयं असङ्गोह्ययंपुरुषइत्यादिश्रुतिविरोधात् ॥
नद्वितीयः ॥ धर्मत्वव्याहतेः ॥ तथाचैकविज्ञानेन सर्वविज्ञानोपप-
त्त्यर्थं प्रपञ्चवद्ब्रह्मकार्याएव धर्माइति मन्तव्यं ॥ तथासति ब्रह्म
सर्वकल्पनाराहितमेव सेत्स्यतीतिचेत् ॥ अत्रोच्यते ॥ यथा सूर्यस्य
तेजोरूपस्य प्रकाशोऽपि तद्रूपएव तद्धर्मरूपः तेजस्त्वेनैव मूलावि-
च्छेदेन प्रतीयमानत्वान्नातद्रूपः ॥ तस्माद्भिन्नत्वेन तदीयत्वेनाऽपि
प्रतीयमानत्वात्तद्धर्मरूपोऽपि ॥ तस्मात्प्रतीत्यनुरोधेनैतादृशमेव त-
द्वस्तूत्पत्तिविशिष्टमित्यङ्गीक्रियते ॥ तथा ब्रह्मधर्माअप्यभेदबोध-
कश्रुत्यनुरोधेन तद्रूपाएव ॥ पराऽस्यशक्तिरित्यादिषु षष्ठ्या भेदे-
नाऽपि प्रतिपादनात् भिन्नाअपि ॥ तथाचोभयविधश्रुतिबलेनैवै-
तादृशमेवैतद्वस्त्विति मन्तव्यं ॥ लौकिकाऽनुवादपूर्वकनिषेधपक्ष-
स्य पूर्वमेवापास्तत्वात् ॥ नच सूर्यजन्यमेव तेजोऽन्तरं प्रकाशइति

वाच्यं ॥ यदादित्यगतन्तेजइतिवाक्याद्भगवत्तेजस्त्वेनाऽजन्यत्वाद्भे-
दकल्पनायां प्रमाणाभावाद्गौरवाच्च ॥ प्रलये सूर्यनाशेऽपि तेज-
सोभगवद्दत्तत्वेन पुनर्भगवत्येव स्थितिः ॥ तेजःसहितस्य तस्यैव
वा भगवति लयः ॥ ८८ ७५ सूत्रकारोऽपि धर्मस्वरूपनिरूपण-
आहैवमेव प्रकाशाश्रयवद्वातेजस्त्वादिति ॥ वाशब्दः पूर्वपक्ष-
निरासे प्रकाशस्तदाश्रयश्च सूर्यादिस्तयोर्यथा भेदस्तद्वद्धर्मधर्मि-
णोरपीत्यर्थः ॥ प्रकाशस्य स्वाश्रयतेजोऽभिन्नत्वशङ्काव्युदासाय
हेतुः ॥ तथासति स्वाश्रयाभिन्नतेजस्त्वादित्यर्थोभवति ॥ अथवा
तेजोऽतिरिक्ते वस्तुनि नैवं दृश्यतइत्यतआह हेतुं॥ब्रह्मण्येव तेजः-
शब्दवाच्यत्वादिति वा ॥ यदादित्यगतमितिवाक्ये तेजसः स्वधर्म-
त्वेन निरूपणात् ब्रह्मापि तेजोरूपमिति भावः ॥ तस्मात्तादृश-
धर्मविशिष्टमेव तद्वस्तु श्रुत्यैकमेवेति प्रतिपाद्यते ॥ तथाचैवकारेण
भगवत्तद्धर्मातिरिक्तमेव वस्तु व्यवच्छिद्यते नतु तेऽपि ॥ तेषां
स्वरूपाऽन्तःपातित्वात् ॥ नहि मध्यन्दिने नभोमण्डले सूर्यएवाऽ-
स्तीति वाक्ये तत्प्रभासत्ताऽपि निषिध्यते ॥ अतएव द्वितीयस्कन्धे
ब्रह्मस्वरूपनिरूपणे राज्ञा पृष्टः श्रीशुकस्तन्निरूपयन्नित्याह नय-
त्रमायाकिमुतापरेहरेरनुव्रतायत्रसुरासुरार्चिताइत्युपक्रम्य युक्तं-
भगैःस्वैरितरत्रचाऽध्रुवैःस्वएवधामनूरममाणमीश्वरं॥तथाच भगव-
द्धर्माभगवत्येव नित्याएव॥येषुच भगवान् स्वैश्वर्यादिधर्मान् ददाति
तेषु यावत्कालं भगवदिच्छा तावदेव ते तिष्ठन्तीति फलितं॥दशम-
स्कन्धे चाऽक्रूरदृष्टस्वरूपनिरूपणे श्रियापुष्ट्यागिराकान्त्याकीर्त्या-
तुष्ट्येलयोर्जया ॥ विद्ययाऽविद्ययाशक्त्यामाययाचनिषेवितमिति
वाक्यैकवाक्यतायां लोकसम्मताभ्यायत्रयीयाऽणिमाद्यैर्महिमभि-

रित्युपक्रम्य मूर्त्तिमद्भिरुपासिताः सत्यज्ञानानन्तानन्दमात्रैकरस-
मूर्त्तयइति वाक्यैकवाक्यतायां च सर्वेषां धर्माणां सच्चिदानन्दरू-
पत्वं सिध्यति ॥ ३७ ॥ ॥ अथ स्यादेतद्ब्रह्मधर्माइत्यादीद्रूपत्वं
सिध्यतीत्यन्तः सप्तत्रिंशः खण्डः खण्ड्यते ॥ ॥ तत्र पूर्वपक्षे नि-
त्यत्वेनाङ्गीकारस्य भेदाभावे तादृशश्रुतिविरोधे वा प्रयोजकत्वेना-
ऽसङ्गतिः॥श्रुतिविरोधः सम्बन्धासम्भवस्याप्युपलक्षकः॥तदसम्भ-
वस्त्वनवस्थादिप्रसङ्गादुक्तः प्राक्॥तेजस्त्वेनैव मूलाऽविच्छेदेन प्रती-
यमानत्वं ताद्रूप्ये त्वया हेतुरुच्यते समणिप्रभादौ व्यभिचारी॥म-
णिप्रभादौमणित्वाभावात्॥सूर्यादितेजसोभगवद्धर्मस्य सूर्यस्वरूप-
त्वे मानाभावाच्च ॥ तद्भिन्नत्वेन तदीयत्वेन प्रतीयमानत्वमपि त-
त्पुत्रधनादौ व्यभिचारि ॥ तस्माद्दृष्टान्तासिध्या दार्ष्टान्तिके सा-
ध्याऽसिद्धिरेव ॥ भेदस्याऽप्यङ्गीकारे भेदाभेदवादिमतप्रवेशः ॥ भे-
दस्य मायिकत्वे तु भेदबोधकश्रुतीनामिव धर्मबोधकश्रुतीनामपि
मायिकधर्मबोधकत्वं स्वीकुरु ॥ यदादित्यगतन्तेजइत्तिूपासनार्थं
स्वीयत्वेन वर्णनम् ॥ सोमोभूत्वारसात्मकः अहंवैश्वानरोभूत्वेत्या-
दिवत् ॥ सोमवैश्वानरावपि तद्रूपावेवेतिचेन्न ॥ नतद्भासयतेसूर्यो
नतत्रसूर्योभातिनचन्द्रतारकंनेमाविद्युतोभान्तिकुतोयमग्निः भीषा-
ऽस्माद्वातःपवते भीषोदेतिसूर्यः भीषाऽस्मादग्निश्चेन्द्रश्च मृत्युर्धाव-
तिपञ्चमइत्यादिवचनविरोधात् त्वन्मते ब्रह्मणोब्रह्माभासकत्वस्य
स्वतोभीतत्वस्य चाऽयुक्तत्वात् ॥ भगवत्तेजसोजन्यत्वाऽभावासि-
द्धेः ॥ यदादिगत्यतमिति व्यपदेशात्प्रामाणिकगौरवस्य सहत्वाच्च
तेजः सूर्यादेर्भिन्नमेव ॥ प्रलयइत्याद्ययुक्तमेव ताद्रूप्याङ्गीकारात्॥
प्रकाशाश्रयवद्वेति सूत्रं तु प्राग्व्याख्यातम् ॥ हेतुकोटौ स्वाश्रया-

भिन्नेति अभेदस्यानिवेशात्त्वन्मते स्वरूपासिद्धिरभेदस्य प्रागसिद्धत्वात् ॥ तेजस्त्वादिना सूर्यादिप्रकाशदृष्टान्तेन स्वाश्रयाऽभेदसाधनं त्वयुक्तम् ॥ सूर्ये प्रकाशरूपतेजोऽभेदाऽसिद्धेः॥भगवतस्तेजोरूपत्वेऽपि अभेदसिद्धेः प्राक्तद्धर्माणां तेजस्त्वे मानाभावात्॥तेजसस्तद्धर्मत्वे तद्रूपत्वे च नमानम् ॥ यदादित्येत्यस्यतु व्यवस्थोक्तैव ॥ परंज्योतिरित्यत्र ज्योतिःशब्देन ज्ञानं बोध्यं ॥ एवं तेजोमयमित्यादावपि ॥ तेजोराशिमित्यत्रतु शरीरस्य वर्णनं नतु स्वरूपस्य ॥ मानाभावात् ॥ नहि मध्यन्दिने इति गौणव्यवहारेण शब्दशक्तिलभ्यव्यवच्छेदवारणमयुक्तम् ॥ अन्यथा वास्तवभेदस्वीकारेऽपि राजैव समायातीत्यादौ तच्छाटकाद्यवारणवत्तद्धर्माणामवारणसम्भवेन तेषां स्वरूपान्तःपातित्वकथनश्रमस्ते निष्फलः स्यात् ॥ अद्वितीयपदेनैव तद्धर्मातिरिक्तवारणसम्भवेन श्रुतावेकपदैवपदयोर्वैयर्थ्यप्रसङ्गश्च ॥ नयत्रमायेत्यत्र मायापदेन कुहकम् ॥ यत्शब्देन स्वरूपग्रहणेत्वविद्यैव ॥ युक्तंभगैःस्वैरितितु सगुणवर्णनम् ॥ भगशब्देनैश्वर्यं अणिमादिरूपं इतरत्र सगुणोपासनाप्राप्तसत्यलोकेषु अध्रुवै रनियमैस्तत्र जगद्व्यापारवर्ज्यस्यैवैश्वर्यस्य सत्त्वात् ॥ येषुचेत्याद्यसंगतम् ॥ अन्यधर्माणामन्यत्र स्थितेरदृष्टत्वात्कल्पनायादृष्टानुसारित्वस्योक्तत्वात् ॥ भगवत्येवेत्येवकारविरोधाच्च ॥ श्रियापुष्ट्येत्यत्र निषेवितमित्यस्य निरन्तरंयुक्तमित्यर्थः ॥ निषेवितत्वं च मायया ॥ मूर्त्तिमद्भिरिति त्वभिमान्यभेदव्यपदेशेन ॥ सत्यज्ञानेतितु आरोपितस्याऽधिष्ठानाऽभेदेन व्यपदेशात् ॥ तथाच तादृशोयएकरसस्तद्रूपाइत्यर्थः ॥ लोकसम्मताध्यायत्रयीयेत्यत्र स्वप्रत्ययश्चिन्त्यः ॥ इति सप्तत्रिंशखण्डखण्डनम् ॥ ३७ ॥

॥ ॥ लीलायाअप्येवंरूपत्वादेव नित्यतामन्तव्या॥ननु गिरिका-
ननयमुनापुलिनपशुपक्षिमनुजादिसम्बन्धिनी हि लीला ॥ साच
तेषामनित्यत्वे कथं नित्या भवेत् ॥ ननु साध्वी ते वाणी यत्तन्नि-
त्यताशुश्रूषामपि तवाऽभिव्यनक्ति ॥ तन्नित्यता च प्रमाणादेवाऽ-
वसीयते ॥ तथाहि ॥ जयतिजननिवासोदेवकीजन्मवादोयदुवर-
परिषत्स्वैर्दोर्भिरस्यन्नधर्मं स्थिरचरवृजिनघ्नःसुस्मितःश्रीमुखेनव्र-
जपुरवनितानांवर्द्धयन्कामदेवमिति वाक्ये भिन्नकालानामपि
द्वारकागोकुलमथुराधिकरणकलीलानां कर्त्तुर्भगवतउत्कर्षेण स्थि-
तेः स्वकथनसमयेऽपि वर्त्तमानत्वं जयतीति वर्त्तमानप्रयोगेण नि-
रूपयन्नेव श्रीशुकस्तत्र तत्र लीलानामपि तथात्वं बोधयितुमेकका-
लीनत्ववाचकशतृप्रत्ययान्तपदंप्रयुक्तवानस्यन्नितिवर्द्धयन्नितिच॥
तथाच कथनसमयेऽतीतत्वेन प्रतीतानामपि लीलानां तदा वर्त्त-
मानत्वं प्रतीयते॥तच्च नित्यतायामेव घटते नाऽन्यथा॥किञ्च॥कर्त्तु-
रेवेदानीं सत्त्वं चेदभिप्रेतं स्यान्नलीलानामपि तदा ता न निरूप-
येदेव ॥ परिचायकत्वेन तन्निरूपणे वा तत्तत्कर्त्ता जयतीत्येवं व-
देत् ॥ एवंसति गत्यन्तरसद्भावेऽपि यच्छत्रन्तस्यैव निरूपणं तेन
लीलानामेव वर्त्तमानत्त्वं मुख्यतयाऽभिप्रेतमित्यध्यवसीयते ॥ न-
च विशेषणत्वेनाऽमुख्यत्वमिति वाच्यं ॥ दण्डीप्रैषानन्वाहेत्यत्र य-
था प्रैषाऽनुवादस्य लोहितोष्णीषाऋत्विजः प्रचरन्तीत्यत्र च तत्प्र-
चारस्य च पूर्वसिद्धत्वेन न विधानं किंतु विशेषणस्यैवदण्डित्वस्य
लोहितोष्णीषत्वस्यच॥अपूर्वत्वात्॥तथा भगवतोवर्त्तमानत्वे सन्दे-
हाऽभावात्तत्तल्लीलाकरणस्यैव वर्त्तमानत्वस्याऽत्राऽपि निरूपणा-
त् ॥ यद्यपि वर्त्तमानसामीप्येवर्त्तमानवद्वेत्यनुशासनाद्वर्त्तमानसा-

मीप्यादेवाऽत्राप्येवं प्रयोगइति वक्तुं शक्यं तथापि वक्ष्यमाण-श्रुतिपुराणवाक्यैरसन्दिग्धं नित्यतया निरूपणादत्राऽपि तदेकवाक्यत्वार्थं वर्त्तमानार्थएव प्रयोगइति निश्चीयते ॥ किञ्च ॥ तत्सामीप्येऽपि तथा प्रयोगस्य साधुत्वं तत्र ज्ञाप्यते ॥ प्रयोगश्च सामीप्यगुणयोगात् गौणएव नतु मुख्यः ॥ सच मुख्यार्थबाधएव कल्पयितुं युक्तः ॥ तदबाधप्रकारश्चाऽग्रे वक्ष्यते ॥ ३८ ॥ ॥ अथ लीलायाअपीत्यादिः प्रकारश्चाग्रेवक्ष्यतइत्यन्तोऽष्टत्रिंशः खण्डः खण्ड्यते ॥ ॥ तत्र भगवल्लीला नित्या भगवदेकनिष्ठत्वात्तज्ज्ञानवदिति टीकोक्तमनुमानमसंगतम् ॥ आकाशादेरन्यत्र सत्त्वे नित्यत्वेच मानाभावात्तस्याऽपि नित्यत्वे अनित्येजननमित्यादित्वत्संमतवाक्यविरोधाच्च ॥ एजनादेरपि देशाद्यपेक्षत्वेन तदेकनिष्ठत्वाभावेन स्वरूपासिद्धेः ॥ प्रतियोगिसापेक्षलीलासु हेत्वभावेनांऽशतः स्वरूपासिद्धेश्च ॥ सर्वलीलानां नित्यत्वसाधनार्थं त्वत्प्रवृत्तेः ॥ तदेजतितन्नैजतीत्यादीनि स्पन्दस्य मायिकत्वपराणीति प्रतियोगिनिरपेक्षलीलामनेन साधयंष्टीकाकारोभ्रान्तो देशादेस्तत्राऽपि प्रतियोगित्वाच्च ॥ नहि अवकाशस्थलाभावेस्पन्दः सम्भवति ॥ अभावादीनामिव तु लीलान्तराणामपि सर्वासां प्रतियोगिसापेक्षत्वं न सम्भवति ॥ यथासम्भवं वर्णनेतु न नोविद्वेषः ॥ लौकिकयुक्तिविरोधस्याऽकिञ्चित्करत्वं वदन्नप्युपेक्ष्यः ॥ स्वयमेव लौकिकयुक्तिविरोधस्याऽसकृदुद्भावनात् ॥ जयतीत्यत्र स्मपुरानुइत्याद्यन्यतमाध्याहारेण भूतेऽर्थे लट्प्रयोगस्योपपत्तिः ॥ अस्यन्नित्यादौतु धातुसम्बन्धे प्रत्ययाइत्यनेनाऽपि प्रत्ययः सम्भवति ॥ एवमेव क्रियाप्रबन्धस्याविच्छेदेन वर्त्तमानतया सदा ददातीत्यादि-

वल्लुडित्यपि ध्येयम् ॥ यद्वा भूवादिसूत्रस्थमहाभाष्यपर्यालोचन-
या वर्त्तमानत्वाविवक्षायामपि लटः प्रयोगस्य साधुत्वसम्भवा-
न्नकाऽप्यनुपपत्तिः॥गत्यन्तरसद्भावेऽपि लटः प्रयोगकरणमशोकव-
निकान्यायेनेति ध्येयम्॥तत्तत्कर्त्ता जयतीति प्रयोगे शत्रन्तप्रयोगे
च फलतोवैलक्षण्यं मन्वानस्तूपेक्ष्यः॥ लीलायानित्यत्वे श्रुत्यादि-
बाधात्तस्यावर्त्तमानत्वस्य नित्यत्वमन्तरोपपत्तेश्च न तन्नित्यत्वमव-
सेयम् ॥ कालस्याऽपि विधाने वाक्यभेदात् ॥ विशिष्टविधावपि
गौरवाज्जयस्यैव विधानम् ॥ अपूर्वत्वाच्च ॥ किञ्चोत्कर्षेण स्थितिर्न
जयः किन्तूत्कर्षेण भानम्॥उत्कर्षेणास्थितेऽपि जयतीतिप्रयोगस्य
दर्शनात् ॥ तद्वाक् जयतीतिवाक्यस्य प्रयोगबोधजनकत्वयोर्दर्श-
नाच्च ॥ नहि वाक्यप्रयोगकाले वाक् भवति येन विशेषदर्शिनो-
रपि प्रयोगशाब्दौ स्याताम् ॥ अस्माकं तु भानसत्त्वे स्थित्यभावं
निश्चिन्वतोरपि तावुपपन्नौ॥अस्त्यन्नधर्ममिति प्रयोगादधर्मस्यापि
नित्यत्वमुक्त्वा नाशस्य तिरोभावरूपत्वं वदंस्तु टीकाकृदुपेक्ष्यः॥ति-
रोभावस्यापि वर्तमानप्रयोगवशान्नित्यत्वेऽधर्मफलेश्वरयत्नादेर्नि-
र्विषयत्वापत्तेः ॥ भगवतोवर्त्तमानत्वे सन्देहाभावादित्यप्यसङ्गतम्॥
अनुमानमात्रसिद्धेऽपि आस्तिकानां विश्वासदार्ढ्यायेतरत्रेव शास्त्र-
स्याऽपेक्षितत्वे विनिगमकाभावेनाऽस्याऽपि तत्परताया वक्तुं युक्त-
त्वात्॥वक्ष्यमाणवाक्यानान्तूपपत्तिं वक्ष्यामः॥वर्त्तमानसामीप्यइ-
त्यस्य गौणप्रयोगबोधकत्वमित्ययुक्तं प्रमाणाभावात्॥लक्षणयैवो-
पपत्तौ सूत्रस्य तत्रस्थवाशब्दस्यच व्यर्थतापाताच्च ॥ यज्ञादौ प्र-
योगाभावप्रसङ्गाच्च ॥ वर्त्तमानातिदेशपूर्वकं प्रत्ययविधानाद्गौणत्वं
बोध्यते इति तट्टीकोक्तमसङ्गतम्॥अतिदेशान्तरविषयेऽतिप्रसङ्गात्॥

कर्तृकर्मणोःकृतीत्यपि शक्तिग्राहकमेव नतु लक्षणाबोधकम् ॥ अतएव वक्ष्यमाणमनूत्रादिस्थस्य पस्पशे इत्यादिकस्य सदेवसौम्येदमग्रआसीत्सोकामयतेत्यादिस्थस्य च भूतार्थप्रयोगस्योपपत्तिः ॥ एवञ्च जयतीत्यस्याध्याहाराविवक्षोत्कर्षभानार्थत्वकर्त्तृपरिचायकप्रकृत्यर्थकत्वक्रियाप्रबन्धसामीप्यबोधकत्वरूपप्रकारसमूहेनोपपत्तिः ॥ इत्यष्टात्रिंशत्खण्डखण्डनम् ॥ ३८ ॥ ॥ अपिच दशमस्कन्धएव नामकरणप्रस्तावे सर्वज्ञेन गर्गाचार्येण निरूपितं बहूनिसन्तिनामानिरूपाणिचसुतस्यते गुणकर्मानुरूपाणितान्यहंवेदनोजनाइति॥अत्र नाम्नां रूपाणांच बहूनामेव सन्तीतिप्रयोगेण वर्त्तमानत्वं बोध्यते॥तत्रापि गुणानामौदार्यादीनां कर्मणां कालीयदमनादीनां अनुरूपाणां तेषां तथात्वं बोध्यते ॥ अनुरूपत्वंतु तत्समययोग्याकारक्रियादिमत्त्वं ॥ यथा गोवर्धनोद्धरणकर्मणि उत्थितत्वमुद्वाहुत्वं तद्धारणक्रियावत्त्वं सकलगोकुलजनाप्यायकत्वादिकंच ॥ तथाचैतादृशानां नाम्नां वर्त्तमानत्वं तदैव स्याद्यदि तत्प्रयोजकस्वरूपक्रियादीनां वर्त्तमानत्वं स्यात् ॥ अन्यथा कदाचित् तत्क्रियानिवृत्तौ तत्प्रयुक्तं नामाऽपि तदा न स्यात् पाचकपाठकवत्॥ननु यथा लोके पाकानुकूलक्रियाराहित्यदशायामपि पाचकमाकारयेदित्यादिप्रयोगोयदाकदाचित्तद्वत्त्वेन तदानीमपि तथोपचारतस्तथाऽत्राऽपि कदाचिद्गुणकर्मयोगात्प्रवृत्तस्य नाम्नोगुणकर्मराहित्यदशायामप्युपचारात्प्रयोगसम्भवेन सन्तीत्यस्योपपत्तेर्न तन्नित्यत्वमायातीति चेत् ॥ मैवं ॥ औपचारिके प्रयोगे नामत्वाभावात् ॥ तस्यमुख्ययैव वृत्त्या बोधकत्वात् ॥ लोके नरसिंहादिनामानि तु डित्थकपित्थादिनामवद्रूढ्यैव तद्वाचकानि

नतूपचारतः ॥ केवलनरेऽप्यशूरेऽपि च तथा प्रयोगात् ॥ अतएव लौकिकपुरुषे प्रयुक्तानि श्रीकृष्णेत्यादीनि नामानि न भगवन्नामानि ॥ तेषां सदानन्दरूपत्वाद्यर्थवाचकत्वेन लौकिकपुरुषेच तदभावेन तत्तदर्थकोलौकिकएव तत्सरूपः शब्दविशेषः सइति मन्तव्यं ॥ भगवन्नामानित्वखण्डब्रह्मरूपाणि ॥ यथा भगवत्स्वरूपे शरीरत्वभानं ग्राहकदोषात्तथा नामस्वपि लौकिकशब्दत्वेन भानं तद्दोषादेवेत्यादि प्रपञ्चितं पितृचरणैः श्रीभागवतविवरणे ॥ तेन स्वरूपवन्नाम्नामपि सर्वेषां नित्यता मन्तव्य॥नन गुणकर्मानुरूपाणीतिवचनाद्गुणकर्मकरणाऽनन्तरभाविनो नाम्नो कथं ब्रह्मत्वं॥तस्य त्रैकालिकाऽबाधविषयत्वादितिचेन्न ॥ स्वरूपवत्कर्मणामपि प्रादुर्भावेण तदनुरूपमाम्नामपि प्रादुर्भावएव परं नतूत्पत्तिः ॥ अन्यथा निजमखविहतिकुपितदशशतभगकृताऽशनिसारासारावसन्ननिजव्रजजनाऽवमाय वामकरकमलनखराग्रनिहितशिखरिवरगोबर्धनाऽचले श्रीगोकुलनाथे विहताऽखर्वगर्वशक्रसुरभिप्रभृतिविरचितमहाऽभिषेकसमयसमनुभूतश्रीगोविन्दनामाऽयेभाविपूतनासुपयःपानाऽनन्तरं स्वप्राणेभ्योप्यतिवल्लभे बीजन्यासं कुर्वन्त्यो व्रजवरवध्वः क्रीडन्तंपातुगोविन्दइति गुणगानेच गोविन्दवेणुमनुमत्तमयूरनृत्यमिति कथं वदेयुः ॥ तेन तत्कर्मविशिष्टस्य यस्य रूपस्य यन्नाम तत्कर्मविशिष्टं तद्रूपं नित्यमेव ॥ लोके परं तेषां तेषां भक्तानां तत्तद्रसाऽनुभवार्थं क्रमेणाऽऽविर्भावः कस्याऽप्यंशस्य कस्यचिदाच्छादनमित्येवमन्तव्यं॥तेन भगवान् गोवर्द्धनमुद्धरन् सर्वदा वर्त्ततइति गोवर्द्धनोद्धरणधीर इति क्रियामामभ्या सहितोगोवर्द्ध-

नोद्धरणरूपः सदा वर्त्तते ॥ अतएवाऽद्यापि भक्तानां तथाऽनुभवः क्वचित् तथा प्रतिकृतौभजनं तथा स्मरणंच॥ अन्यथात्वतथाभूतस्य तथाभावनेनापराधः स्यात् नतु प्रसादहेतुर्भजनं ॥ योऽन्यथासन्तमात्मानमितिवाक्यात्॥दृश्यतेच तथा भजने प्रसादः॥एवंसति रूपे नामावश्यकत्वेन तत्कर्मानुरूपनामाऽपि नित्यमेवेति नोपचारशङ्कागन्धलेशोऽपि॥किञ्च ॥ नामवत् रूपस्याऽपि गुणकर्माऽनुरूपत्वेन तत्र यथा नौपचारिकसत्त्वशङ्का तथा नाम्न्यपीति बुध्यस्व ॥ गुणकर्मणामपि नित्यत्वप्रतिपादनायैव गुणकर्माऽनुरूपाणीत्युक्तमपि ज्ञायते ॥ अन्यथा कुरुद्विजातिसंस्कारमिति प्रार्थितत्वेन नामकरणाख्यसंस्कारमात्रस्यैव कर्त्तव्यत्वे सति नाम्नां रूपाणां च तत्राऽपि गुणकर्मानुरूपाणां वर्त्तमानत्वं न निरूपयेत्प्रयोजनाऽभावात् ॥ एवंसत्यपि यन्निरूपणं तेनैवं ज्ञापयति ॥ मदुक्तान्यपि नामधेयानि न मया कृतानि किन्तु पूर्वसिद्धान्येव मयाऽनूद्यन्तेपरं ॥ ते सुतस्य बहूनि नामानि रूपाणि सन्तीति समभिव्याहारवशान्नन्दसुतत्वमप्यनादीति ज्ञाप्यते ॥ तेन नन्दस्याऽपीदानीं मम पुत्रोजातइति ज्ञानमप्यनादीति ज्ञेयं ॥ गर्गस्याऽपि नामकरणलीलामध्यपातित्वेन तदागमनवचनादीनामपि नित्यत्वेनानादित्वमेव ॥ पूर्वसिद्धायाएव लीलायाभगवदिच्छया क्रमेणाऽऽविर्भावइति पूर्वमेवोक्तत्वात्सर्वं सुस्थं ॥ ३९ ॥ ॥ अथापि च दशमेत्यादिः सर्वंसुस्थमित्यन्तएकोनचत्वारिंशः खण्डः खण्ड्यते ॥ ॥ तत्र गर्गोक्तिगतसन्निपदमध्याहारादिप्रकारसमूहेन योज्यम् ॥ शब्दनामनिषेधपरश्रुतेः ॥ रूपस्य योग्यमितिविग्रहकाऽनुरूपशब्दार्थे रूपं वस्तुमात्रपरिचायकं ॥ तेन कर्मानुरूपा-

णीति सङ्गतम्॥तच्च न शक्तिकोटिनिविष्टं गौरवाच्छाब्देऽभानाच्च किन्तु योग्यमित्येव शक्यं तच्च बाधशून्यम्॥एवंच स्वार्थगुणकर्म-शून्या नीत्यर्थः॥त्वदुक्तमनुरूपत्वं तु गौरवानन्वयाऽप्रमाणदोषग्रस्तं॥ योग्यशब्दस्य तत्पर्यायत्वेनाऽऽत्माश्रयग्रस्तंच॥यत्त्वत्र तथाचैतादृ-शानामित्यत्रत्यैतादृशानामिति प्रतीकमुपादाय तट्टीकाकारेण अय-मर्थऔत्पत्तिकादिसूत्रेण शब्दार्थसम्बन्धनित्यतायाः शब्दार्थयो-र्नित्यतायाश्चोपपादितत्वेऽप्यर्थविषये आकृतौ सम्बन्धस्य लक्षणा-दोषग्रस्तत्वेन तदनङ्गीकृत्य व्यासपादैः शब्दइतिचेदिति सूत्रे वै-दिक्यां नित्यतायां व्यक्तावेव सम्बन्धोऽङ्गीकृतइति प्रकृते तादृ-शधर्मविशिष्टसत्त्वएव तद्वाचकनामसत्त्वं सिध्यति इत्याद्युक्त्वा तथाच जैमिनिमते यथाऽऽकृतिसत्त्वं तथा व्यासमते गवादिव्य-क्तिसत्त्वमिति सा यथा तत्तद्रूपादिविशिष्टैव सतीत्यतोविशेषणी-भूताऽऽकारादिसत्ता प्राप्यते तथाऽत्र मुख्यतया सन्तीति प्रयोगे-णोक्तविशेषणविशिष्टस्वरूपसत्तायां विशेषणत्वेन लीलायाअपि वर्त्तमानत्वं प्राप्यतइत्यर्थः ॥ ननूक्तसूत्रे अतः प्रभवात् इत्यनेन वेदशब्देभ्योजगदुत्पत्तिमात्रं कथ्यते ऽतः कथं नित्यसृष्टिसिद्धिस्त-दभावेच कथं व्यक्तौ सम्बन्धसिद्धिरिति चेन्न॥प्रभवशब्दस्य ज्ञान-विषयत्वमात्रपरत्वात्सुखेन तत्सिद्धेः ॥ नचाऽत्र तादृशसृष्टौ माना-ऽभावः शङ्क्यः॥अनुकृत्यधिकरणे सर्वस्य भगवदनुकारितायाः सि-द्धत्वेन पुरुषसूक्ते तद्विवरणभूतद्वितीयस्कन्धाध्यायेच यज्ञसम्भारा-णां पशुवनस्पतिप्रभृतीनां ब्रह्मणा दृष्टत्वेन तेषामेवाऽत्र प्रमाणत्वा-त् ॥ नच समाननामरूपसूत्रात्प्रवाहएव शक्तिरितिव्यासाभिप्रायः शङ्क्यः ॥ तस्य पक्षान्तरत्वात्॥आवृत्तावप्यविरोधइति सूत्रस्था-

ऽपिशब्दबलेन तस्य पक्षस्य गौणत्वनिश्चयात् ॥ अतः सूर्याचन्द्रमसौधातायथापूर्वमकल्पयदिति श्रुत्युक्तस्सृष्टयन्तरविषयत्वात्प्रवाहशक्तिपक्षस्य न पूर्वोक्तबाधकत्वमिति तदनुरूपरूपादिसत्ताप्रयुक्तं लीलानित्यत्वमविवादमित्युक्तं ॥ तन्नसंगतम् ॥ तथाहि ॥ जैमिनिमते तावज्जातिशक्तिस्तज्ज्ञानस्यैव च पदार्थस्मृतिद्वारा विशिष्टशाब्दहेतुत्वमितिनलक्षणादोषइत्यादि स्पष्टं वेदान्तपरिभाषातट्टीकादिषु ॥ व्यक्तौ शक्तावतिगौरवमिति चाऽन्यत्र स्पष्टम् ॥ अतोव्यक्तावेवेत्यप्यसंगतम् ॥ शब्दइतिचेन्नातःप्रभवादिति सूत्रात्तथाप्रतीतेः ॥ पूर्वत्र देवानां नानाविग्रहैर्नानादेशसम्बन्धोऽभिहितस्तथाच वैदिकशब्दवाच्यतत्तद्देहाऽनित्यत्वे सम्बन्धस्य द्विष्ठत्वेनैकतराऽनित्यत्वे तन्नित्यत्वाऽसिध्या शब्दस्य बोधकतायानित्यत्वाऽभावेऽबोधकस्य तस्य सत्त्वाङ्गीकारे संगतेः सोऽप्यनित्यइति वेदानित्यत्वमाशङ्क्य नातः प्रभवादित्युक्तम् ॥ अतःशब्दात् देवादिजगतः प्रभवात् ॥ अनेनहि कारणस्य कार्यपूर्वसत्त्वबोधनेन देवादिविग्रहाऽभावेऽपि शब्दसत्त्वमुक्तम् नतु विग्रहानित्यत्वमपि श्रुतिस्मृतिभ्यामित्यर्थकप्रत्यक्षाऽनुमानाभ्यामित्यनेनोपन्यस्तश्रुतिस्मृत्योरपि शब्दपूर्वकत्वमेव विग्रहे प्रतीयते एतेइतिवैप्रजापतिर्देवानसृजते त्यादिः भूरितिव्याहरन्सभूमिमसृजतेत्यादिका च श्रुतिः अनादिनिधनानित्यावागुत्सृष्टास्वयंभुवा आदौवेदमयीदिव्यायतःसर्वाःप्रवृत्तयइति नामरूपंचभूतानांकर्मणांचप्रवर्त्तनम् वेदशब्देभ्यएवादौनिर्ममेसमहेश्वरइति सर्वेषांतुसनामानिकर्माणिचपृथक्पृथक् वेदशब्देभ्यएवादौपृथक्संस्थाश्चनिर्ममेइतिचस्मृतिः ॥ अयमभिप्रायः ॥ सत्यं त्वदुक्तरीत्या विग्रहाभावे

तत्सम्बन्धनित्यत्वासिद्धिर्विग्रहेण तत्सम्बन्धमेव वयंचेन्न स्वीकुर्मः किन्तु आकृत्या तर्हि कथं सम्बन्धनित्यताहानिरिति॥एवञ्च व्यासपादैरप्याकृतिशक्तिपक्षएवोपपादितः॥ प्रभवशब्दस्य ज्ञानविषयत्वमात्रे लक्षणा तु सति जगन्नित्यत्वे तदेवतु निर्मूलम् इत्युक्तमसकृत् ॥ सूत्रमपि जगतः प्रवाहाऽनादितयाऽनित्यत्वमेव जगतआह ॥ समाननामरूपत्वाच्चावृत्तावप्यविरोधोदर्शनात्स्मृतेश्च ॥ अयमर्थः ॥ महासर्गमहाप्रलयलक्षणायां जगतआवृत्तावभ्युपगम्यमानायां शब्दप्रामाण्यादिषु न कश्चिद्विरोधः समाननामरूपत्वात् समाननामरूपताच दर्शनात् श्रुतेः स्मृतेश्च ॥ अग्निर्वाऽकामयतान्नादोदेवानांस्यामितिसएतमग्नयेकृत्तिकाभ्यःपुरोडाशमष्टाकपालंनिरवपदिति नक्षत्रेष्टिविधौ योनिरवपद्यस्मैचनिरवपत्तयोरग्निरितिसमाननामाह श्रुतिः॥ धातायथापूर्वमकल्पयद्दिवञ्चपृथिवीमित्याद्याचश्रुतिः॥ स्मृतिश्च ऋषीणांनामधेयानियाश्चवेदेषुदृष्टयः शर्वर्यन्तेप्रसूतानांतान्येवैभ्योददात्यजः यथर्तुष्वृतुलिङ्गानिनानारूपाणिपर्यये दृश्यन्तेतानितान्येवतथाभावायुगादिषु तथाभिमानिनोऽतीतास्तुल्यास्तेसाम्प्रतैरिह देवादेवैरतीतैर्हिरूपैर्नामभिरेवचेति॥ तथाच प्रवाहानादितयैव वैदिकशब्दतदर्थयोर्नित्यता अत्रच भवेदेषमनोरथोयदि महाप्रलयमहासर्गौ मीमांसकवन्नाङ्गीक्रियेतां॥ तदङ्गीकारेतु महाप्रलये सर्वव्यवहर्तृव्यवहारोच्छेदात्कथं शब्दादिनित्यतेत्याशङ्कायामिदं सूत्रं प्रवृत्तम्॥ तथाच यथा मीमांसकमते प्रलयाभावाददोषः सर्वदा व्यवहर्तृणां सत्त्वादेवमस्मन्मते सर्वदा तदभावेऽपि समाननामरूपत्वान्नदोषइत्यपिशब्दः सङ्गतः॥ एतेनाऽपि शब्दस्य गौणत्वार्थकत्व-

परत्वोक्तिः प्रत्युक्ता ॥ मानाभावाच्च ॥ सूत्रस्य मतान्तरोपन्यास-
परत्वेच न मानम् ॥ सूर्याचन्द्रमसाविति श्रुतिसिद्धस्याऽपि पक्षा-
न्तरत्वं गौणत्वं च वदन्बाह्यत्वादुपेक्ष्यएव ॥ अनुकृतेस्तस्यचेत्यस्य-
त्वयमर्थः अनु पश्चा त्कृतेः व्यापारात् नतत्रसूर्योभाति इत्यादौ
प्राज्ञआत्माग्राह्योनतु तेजोधातुः तमेवभान्तमनुभातीति तत्प्रका-
शाधीनप्रकाशतायाः सर्वस्योक्तत्वात्तस्यचेति तस्यभासेति श्रुति-
शेषोदाहरणार्थम्॥स्मृतेरिति सूत्रं तु नतद्भासयतेसूर्यइति भगवद्वा-
क्यपरिग्रहार्थम् ॥ एतादृशाऽनुकारितया कथं नित्यजगत्सिद्धिरि-
ति प्रष्टव्योदेवानांप्रियः ॥ कथं वा ब्रह्मणा दृष्टत्वमात्रेण यज्ञस-
म्भाराणां नित्यत्वम् ॥ किञ्च तत्र भागवते नाविदंयज्ञसम्भारान्पु-
रुषावयवादृते इत्यत्राऽविदमिति विदेः प्रयोगोऽस्ति नतु दृशेस्त-
थाच ज्ञानस्योपासनारूपत्वेन वस्तुसिद्धिरपि दुर्घटा ॥ यत्तु त-
द्गुरुणा सूर्यादीनां प्रकाशोनास्त्येव घटवत् भगवत्प्रकाशेनैव प्रका-
शवत्त्वमिति चकारार्थइत्युक्तम् ॥ तद्धेयम्॥भगवत्प्रकाशस्य भूत-
साधारण्याभावात् ॥ भान्तमनुभातीति व्यपदेशविरोधात् तस्य-
भासेति तृतीयाविरोधाच्च ॥ यदादित्येत्यस्यार्थस्तूक्तः ॥ एतेन भ-
गवानेव सर्वावभासकइत्यपि प्रत्युक्तम् ॥ तमेवसर्वमनुकरोतीति
स्ववाक्यविरोधाच्च ॥ नह्येकस्मिन्ननुकरणं सम्भवति ॥ शब्दइति-
चेदित्यादिसूत्रार्थेऽपि तत्प्रलापोनिरस्तोबोध्योविस्तरभयात्तु नानू-
द्यदूष्यते ॥ कर्मणोभूतस्योपलक्षणत्वेपि नशब्दस्यौपचारिकत्व-
म् ॥ अस्य च्छत्रिणोयान्तीत्येतत्सादृश्यं वदंष्टीकाकारउपेक्ष्यः ॥
तत्र छत्रिणइतरेषां कदाचिदपि छत्रसम्बन्धाभावेनोपलक्षणत्व-
स्यासम्भवात् ॥ एतेन च्छत्रिणोयान्तीत्यत्र यथा कादाचित्केन

लिङ्गेनेत्यपि प्रत्युक्तम् ॥ तथात्वेऽपि नानामत्वम् ॥ तत्र भूतकालिकगुणादिविशिष्टं संज्ञिनमादाय संज्ञात्वेन तादृशार्थवत्वमादाय प्रातिपदिकत्वेन वा तत्पर्यायनामशब्देन ग्रहणस्य पाचकादिशब्दग्रहणवददुष्टत्वात्॥नहि सर्वदा पाकविशिष्टबोधकपाचकशब्दस्यैव संज्ञात्वं प्रातिपदिकत्वंवा ॥ किंच सर्वज्ञस्य भूतभविष्यत्कर्मज्ञानात्तदादाय नामकरणे का हानिरित्युच्यतां देवानांप्रियेण ॥ लोके नरसिंहेत्यादितु न सन्नियदृच्छाशब्दाइति पक्षे संगतमेव ॥ डित्थाद्यपि प्रसिद्धलोष्टाद्यर्थमादायैव तत्तत्पुरुषे प्रयुज्यते ॥ किञ्च कृष्णादिशब्दानां द्विविधत्वे गौरवमिति तत्सरूपः शब्दविशेषइत्यसंगतम्॥किञ्च भगवन्नामकरणं पुत्रादेर्विद्वद्गोष्ठिगम्यं तद्विरुध्यते॥स्वपुत्रनामग्रहणलब्धसद्गतिकाजामिलोपाख्यानरूपपुराण विरोधश्च॥नाम्नां ब्रह्मरूपत्वं तु विद्वान्नामरूपाद्विमुक्तइति श्रुतिविरुद्धं निर्मूलंच॥एवञ्च वेदवद्भगवन्नाम्नां नित्यत्वकथनं निर्मानम्॥वेदेऽपि विद्वान्नामरूपाद्विमुक्तइत्यादिवचनप्रामाण्यात्प्रवाहानादितैव॥अतएव ऋचःसामानिजज्ञिरे इत्यादिश्रुत्युपपत्तिः॥भगवत्स्वरूपे शरीरत्वभानस्य ग्राहकदोषप्रयुक्तत्वे देहादेः सत्यत्वादि न संगतम् ॥ नहि शुक्तौ रजतत्वभानस्य तथात्वे रजतस्य सत्यत्वादि भवति ॥ किञ्चैवं स्वप्नवज्जागरेऽपि तादृशपदार्थस्य व्यवहारप्रयोजकत्वं स्वीकृतमिति भवत्संमतार्थकेन वैधर्म्याच्चनस्वप्नादिवदित्यनेन विरोधः ॥ प्रादुर्भावस्तु सति नित्यत्वे ॥ तद्यथा नास्ति तथोक्तं प्राक्॥क्रीडन्संपात्वित्यत्र धातुसम्बन्धे शता॥गोविन्दशब्दस्य गोलाभमात्रप्रयुक्तत्वाभावेनार्थान्तरेण विष्णौ प्रयुक्तस्य तस्य श्रीकृष्णे तदवतारत्वं कुतश्चिज्ज्ञातवतीनां प्रयोगः ॥ पुनर्गोलाभप्रयु-

कनामकरणं तु अस्मिन्नवतारे तादृशशब्दस्याऽनेकैः प्रवृत्तिनिमि-
त्तैर्विष्णौ प्रयोगप्रदर्शनाय ॥ यद्वा लीलायाः कल्पान्तरीयावतारे-
ष्वपि कृतत्वेन तात्कालिकलीलामादाय प्रवृत्ताऽश्रूशब्दाम्कृतश्चि-
त्सर्वज्ञाच्छ्रुतवतीनां तासां तत्प्रयोगः ॥ यत्तु कस्यचिदाच्छादन-
मित्येव मन्तव्यमित्यत्र मन्तव्यमितिपदमादाय प्रवृत्तायां टीकायां
तथासतीदं सिध्यति लीलायाः साक्षात्तत्सम्बन्धिपदार्थानां च
प्राकट्याऽप्राकट्ये प्राकट्याऽप्राकट्ययोस्तूत्पत्तिनाशौ तेन प्राकट्या-
प्राकट्ययोरनित्यत्वं तेन लीलासु तत्सम्बन्धिषु क्रमिकत्वभान-
मतोन लीलातत्सम्बन्धिनोः स्वरूपनित्यत्वबाधइति लौकिक-
बोधनानुकूलः पन्थाः ॥ सिद्धान्तस्तु यथा पृथिव्यामेव तत्तद्देशे
तत्तत्काले तत्तद्गन्धरूपेणाऽऽविर्भवति न जलादौ तथा तत्तत्काले
देशेच तत्तद्रसभोगार्थं तत्रतत्र तथाऽऽविर्भावयिष्यामि तिरोभाव-
यिष्यामीति पूर्वोक्तरीतिकेच्छयैव लीलादिकं क्रमिकतांधत्ते तथा
बुद्धिगोचरोवा भवतीति न काप्यनुपपत्तिरिति दिगित्युक्तम्॥तदसं-
गतम् ॥ प्रथमे पथि पूर्वत्र यानि जगदुत्पत्तिनाशाङ्गीकारे तेन दू-
षणान्युक्तानि तेषां प्रसरः लीलादेरपि वोत्पत्तिनाशापत्तिः॥ सि-
द्धान्तभूते तु इच्छयाऽप्याविर्भावे तृतीयानिर्देशात्तस्याहेतुत्वभाग-
तमितीतरस्याऽनित्यत्वं सिद्धं॥किश्च यदि तत्तद्देशे तत्तत्कालइति
पृथिव्यामित्यस्य विशेषणं तदागन्धहीनता कचित्कदाचिच्च तस्या-
वाच्या नच सा प्रमाणसिद्धा॥यदितुतत्तद्देशे तत्तत्काले इत्यस्य वि-
वरणं पृथिव्यामिति तदा दार्ष्टान्तिके तत्रतत्रेत्यस्योपन्यासोऽधिकः॥
पृथिव्यां गन्धस्योत्पत्तिरेवेत्युक्तौ तु नदृष्टान्तसम्भवोऽन्यन्नूक्तम्प्रा-
क् ॥ इदानीन्तनानां गोवर्द्धनोद्धरणविशिष्टानुभवोगन्धर्वनगरानु-

भवषट् योगिरचितकायव्यूहाऽनुभववद्वा बोध्यः ॥ अपराधवि-
षयेतु समाहितम्प्राक् ॥ औपचारिकत्वस्य शब्दधर्मत्वेन रूपे त-
दप्रसक्त्या तद्दृष्टान्तेन नाम्न्यपि तद्वदनुपेक्ष्यः ॥ रूपे मायिकत्वं तु
भवत्येव॥अन्यथा कुरुद्विजातिसंस्कारमित्यादिना तु महत्कौशल-
माविष्कृतं देवानांप्रियेण उपक्रमाभावेनातात्पर्यविषयस्य प्रस-
ङ्गपतितत्वमात्रेण दार्ढ्यस्वीकारात् ॥ नन्दसुतत्वादि तु देवदत्तसुत-
त्वादिसमानयोगक्षेमम् ॥ विशेषे मानाऽभावात् ॥ एवमन्यदपि॥
मर्गवाक्यव्यवस्थायाउक्तत्वेन गुणकर्मणामपीत्युक्तिर्हेया ॥ घ-
टादेरपि स्वकपोलकल्पनया त्वया नित्यत्वस्य साधितत्वेन त-
स्याऽपि त्वया भगवदिच्छया ऽऽविर्भावस्य स्वीकृतत्वेन तद्रीत्यैव
निर्वाहेऽन्यत्यः पृथक् श्रमोव्यर्थः ॥ इत्येकोनचत्वारिंशखण्डस्ख-
ण्डनम् ॥ ३९ ॥ ॥ श्रुतिरपि गुणकर्मानुरूपाणां प्रत्येकं नि-
त्यत्वाऽभिप्रायेणैवाह ॥ तदेजतितन्नैजति तद्दूरेतदंतिकइत्यादि ॥
अन्यथैकस्यैवैकस्मिन्नेव काले क्रियावत्त्वतद्राहित्ये विरुद्धे कथं
बोधयेत् ॥ तेन येन रूपेणैजति तस्य रूपस्य तस्यैजनस्य च नि-
त्यत्वेन तत्तथा ॥ यच्च रूपं स्थिरं तस्य रूपस्य तस्य स्थैर्यस्य च
नित्यत्वेन नैजत्यपि ॥ नच सक्रियाक्रिययोः स्वरूपयोर्भेदः श-
ङ्कनीयः ॥ अतएतत्परिहारायैव पुनःपुनर्ब्रह्मवाचकतच्छब्दस्याऽऽवृ-
त्तिमाह पूर्वतच्छब्दस्यैव सर्वत्र सम्बन्धाऽर्हत्वेऽपि ॥ तथाचाऽनेक-
नित्यरूपकमनेकनित्यक्रियाकमनेकनित्यनामकं ब्रह्मेति फलितं॥
किञ्च ऋग्वेदेऽपि पठ्यते ॥ तावांवास्तून्युश्मसिगमध्यैयत्रगावोभू-
रिश्रृङ्गाअयासः अत्राहतदुरुगायस्यवृष्णःपरमंपदमवभातिभूरीति॥

मा तानि वां युवयोः कृष्णरामयोर्गोपीमाधवयोर्वा वास्तूनि गमध्यै प्राप्तुं उश्मसि कामयामहे॥तानि कानीत्याकाङ्क्षायां गूढाऽभिसन्धिमुद्घाटयति॥यत्र गोकुले भूरिशृङ्गादीर्घशृङ्गागावोवसन्तीति शेषः॥ अथवा आरण्यग्राम्यपशूपलक्षणार्थं भूरिशृङ्गाबहुशृङ्गारुरुप्रभृतयोमृगागावश्चेत्यर्थः॥ अयासः शुभाः अत्राह अत्र स्थाने भूमौ तत् लोकवेदप्रसिद्धं उरुगायस्योरुकीर्त्तेर्भगवतो वृष्णः गोपिकासु कामान् वर्षतीति वृषा तस्य तत् गोकुलं परमं पदं पदं स्थानं वैकुण्ठः तस्मादप्यधिकं परमं पदं प्रकृतिकालाद्यतीतत्वेनाऽपि वैकुण्ठाद्यपेक्षयाऽतिप्रियत्वेनाऽपि परमं तादृशं पदमवभाति प्रकाशते भूरि बहुतरं॥ तथाच यदेतादृशं तयोः स्थानं तत्स्थानसम्बन्धीनि वास्तूनि प्रसादत्वेन प्राप्तुं कामयामहे नाऽन्यानीति वाक्यार्थः संपद्यते॥ भूरिशब्दस्य बाहुल्यार्थत्वेनाऽनेकविधनिकुञ्जगह्वरप्रदेशयमुनापुलिनगोवर्द्धनसान्वादिषु निरन्तरं भगवतः स्थित्या तावद्रूपं प्रकाशतइति तात्पर्यार्थः॥ भूधातोराप्त्यर्थत्वे व्यापकमितिवा॥ तथाच परमत्वेन भगवत्स्थानत्वेन भूरित्वेन च नित्यत्वमेव गोकुलस्याऽऽयाति॥ किञ्च तैत्तिरीयकेऽपि पठ्यते॥ तेतेधामान्युश्मसिगमध्यैगावोयत्रभूरिशृङ्गाअयासः अत्राहतदुरुगायस्यविष्णोःपरमंपदमवभातिभूरेरिति॥ ते तव ते तानि धामानि स्थानानि गमध्यै प्राप्तुमुश्मसि कामयामहइति॥ शेषं पूर्ववत्॥ भूरेः बहुरूपस्य॥ रासोत्सवादिषु तथा प्रकटत्वात्॥ अत्र स्वयं नित्योवेदआभातीति वदन् स्वभानविषयस्य गोकुलस्याऽपि नित्यत्वमेवाह॥अन्येषामभानपक्षेऽपि वर्तमानप्रयोगेण विषयस्याऽपिवर्तमानत्वमेवाऽऽयाति॥४०॥ ॥ अथ श्रुतिरपीत्यादि-

र्वर्तमानत्वमेवाऽऽयातीत्यन्तश्चत्वारिंशः खण्डः खण्ड्यते ॥ ॥ तत्र तदेजतीति श्रुतिरपाणिपादइत्यत्रोक्तरीत्या ऽध्यारोपापवादाभ्यां निष्प्रपञ्चपरा॥अधिष्ठानज्ञानकाले अध्यारोपाऽऽश्रयस्यैवाऽपवादाऽऽश्रयत्वज्ञानेनाऽनेकतच्छब्दप्रयोगः॥यथा सैव सर्पोऽसर्पश्च सैक रज्जुरिति॥यथावा सएव नटोमृतः सएवामृतश्चेति॥येनरूपेणेत्यादिस्त्वर्थोऽसङ्गतएव॥शब्दतोऽलाभात् अनेकतच्छब्दानामुपपत्तेरुक्तत्वात् शब्दाऽऽधिक्यमात्रेणाऽर्थाधिक्यस्याऽयुक्तत्वात्॥एवञ्च यत एतदित्याद्यपि प्रत्युक्तम्॥लट्प्रयोगस्योपपत्तिस्तूक्तैव॥स्वाभाविकीत्यत्र स्वाभाविकत्वोक्त्याऽपि न नित्यत्वसिद्धिः॥प्रवाहानादितयैव तदुपपत्तेरित्याद्युक्तं प्राक्॥ऋग्वेदस्थश्रुतिरप्यध्यारोपपरा॥किञ्च नेयं गोकुलपरा तद्वाचकशब्दाभावाद्गवां सत्यलोकेऽपि सत्त्वात्सत्यादूर्ध्वंननिद्यते इति बृहत्पराशरेण उक्तत्वात् ॥ अस्तु वा महाभारताद्यपर्वसम्बन्धिनीलकण्ठकृतटीकारीत्या सत्यलोकाऽभिन्नोगोलोकस्तत्परत्वेऽपि तस्य नित्यत्वाद्यप्रमाणमेव ॥ परमशब्दस्योत्कृष्टार्थकत्वेनेतराऽवधिकाऽधिकसुखस्यैव तत्र भानात्॥गोपीषु कामवर्षकस्येति व्याख्यानं तु विटवादित्वेन ॥ सामान्यार्थेनोपपत्तौ विना गमकं जुगुप्सितविशेषपरत्वेन व्याख्यानेऽतिप्रसङ्गात्॥तथा च यदेतादृशमित्यादिवाक्यार्थस्तु तानि कानीत्याकाङ्क्षायामित्यनयोत्थानिकया विरुद्धः ॥ भूरिशब्देन निकुञ्जादिग्रहणे तात्पर्यग्राहकं नाऽस्ति॥रूढ्यर्थत्यागे व्यापकत्वरूपार्थस्वीकारे च न मानं परिच्छिन्नैतद्ब्रह्माण्डस्थत्वबोधकश्रुतिस्थात्रपदविरोधाच्च॥नच वैश्वानराधिकरणन्यायादेव तत्सिद्धिरिति टीकाकारेण समाहितत्वादिदं न दूषणमितिवाच्यं॥तत्रोपन्यस्तस्य साधारणशब्दविशेषादि-

व्याप्तिहेतोरदर्शनेन तन्न्यायाऽनवतारात् भूरिशब्दस्यार्थान्तरपरत्वेन त्वयाऽपि व्याख्यातत्वात् ॥ नच व्यापकात्मवादिमते शरीरस्येव भूप्रदेशस्य तद्वृत्तिलाभस्थानत्वादत्रेति ब्रह्माण्डान्तर्गतत्वोक्तिः संगतेति तट्टीकोक्तयुक्त्यन्तरमपि सङ्गतं ॥ तस्याऽपिवैश्वानराधिकरणासमानमूलकत्वात् ॥ यत्रहि मानान्तरेण व्यापकत्वं निश्चितं तत्रहि संदिग्धस्याऽव्यापकत्वस्य वृत्तिलाभेन व्यवस्था निश्चीयते ॥ नचाऽत्र तथाऽस्ति इत्युक्तम् ॥ किञ्च शरीरस्य तल्लाभस्थानत्वेऽप्यात्मनः शरीरेऽस्थितत्वात् अत्र लभ्यतइत्यनुक्तत्वेनोपलब्धिस्थानत्वाऽयोगाच्च नेदं सारं ॥ परमत्वादिकं तु न नित्यत्वप्रयोजकं ॥ मानाभावात् ॥ माधवकृतवेदभाष्येऽयं मन्त्रइत्थं व्याख्यातः ॥ हेपत्नीयजमानौ वां युष्मदर्थं ता तानि गन्तव्यत्वेन प्रसिद्धानि वास्तूनि सुखनिवासयोग्यानि स्थानानि गमध्यै युवयोर्गमनायोश्मसि कामयामहे ॥ तदर्थं विष्णुं प्रार्थयामहइत्यर्थः ॥ तानीत्युक्तं कानीत्याह यत्र येषु वास्तुषु गावो रश्मयो भूरिशृङ्गा अत्यन्तोन्नत्युपेताः बहुभिराश्रयणीयावा अयासो ऽयनागन्तारोऽतिविस्तृताः यद्वा यासो गन्तारो ऽतादृशाः अत्यन्तप्रकाशयुक्ताइत्यर्थः ॥ अत्राह अत्र खलु वास्त्वाधारभूते द्युलोके उरुगायस्य बहुभिर्महात्मभिर्गातव्यस्य स्तुत्यस्य वृष्णः कामानां वर्षकस्य विष्णोस्तत्तादृशं पुराणादिषु गन्तव्यत्वेन प्रसिद्धं परमं निरतिशयं स्थानं भूरि प्रभूतम् अवभाति स्वमहिम्ना स्फुरति इति ॥ इत्थं स्वव्याख्यानमुक्त्वा माधवेनानन्तरमेव निरुक्तव्याख्याप्युपन्यस्ता॥तद्यथा ॥ अयं मन्त्रोयास्केन गोशब्दोरश्मिवाचकइति व्याचक्षाणेन व्याख्यातः ॥ ता तानि वास्तूनि कामयामहे गमनाय यत्र

मावोभूरिश्रृङ्गाबहुश्रृङ्गाभूरीति बहुनोनामधेयं प्रभवतीति सतः श्रृ-
ङ्गं श्रयतेर्वा श्रृणातेर्वा शम्नातेर्वा शरणायोद्गतमिति शिरसोनिर्गत-
मिति वा अयासोऽयनाः तत्र तदुरुगायस्य विष्णोर्महागतेः परमं
पदं परार्ध्यस्थलमवभाति भूरि पादः पद्यते इति ॥ अत्र निरुक्ते
शिरसोनिर्गतमिति प्रतीत्यभिप्रायम् ॥ अस्माकं हि शिरःप्रदेशे
रश्मीनां प्रतीतिः ॥ यद्वा शिरः प्रधानेसेनाग्रेशिखरेमस्तकेपिचेति-
मेदिनीकोशाच्छिरःशब्दः प्रधानवाची ॥ तेन प्रधानात्सूर्यान्निर्ग-
तमित्यर्थः ॥ एतेन शिरसोनिर्गतमिति विग्रहप्रदर्शनेन गवादिवि-
कारपरताऽपि तत्रत्यश्रृङ्गशब्दस्य यास्कसंमतेति टीकाकारोक्तिर्वि-
फलीकृता ॥ तथासति गावइत्यत्राऽप्यर्थान्तरप्रदर्शनस्योचितत्वाच्च ॥
अतएव माधवेनाऽपि गोशब्दः पशुपरः श्रृङ्गशब्दश्च तद्विकारपरो-
नाश्रितः ॥ अन्यथा वास्तुशब्देन विष्णुलोकस्य तदभिमतत्वेन तस्य
तदाश्रयणमुचितमेव स्यात् ॥ एवंचेयं व्याख्या यास्कादिविरुद्धत्वे
न स्वकपोलकल्पितैव ॥ यत्तु रश्मयोगावउच्यन्तेइति प्रतिज्ञाय
यास्केनाऽस्य मन्त्रस्य व्याख्यातत्वेऽपि सूर्यनिरूपणं प्रतिज्ञाया-
व्याख्यातत्वेन चार्थान्तरोक्तौ न दोषइत्युक्तम् ॥ तन्न ॥ तस्याऽपि
तादृशार्थे साधकाऽभावे स्वकपोलकल्पितत्वाद्बाधकन्तूक्तमेव ॥
अदोयद्दारुप्लवते इति लक्ष्मीप्रकाशकमन्त्रस्य माधवेन व्यासेन च
पुरुषोत्तममाहात्म्ये जगन्नाथपरत्वेन यद्व्याख्यानं कृतं तत्तु न दृष्टा-
न्तयोग्यं ॥ व्यासस्य सर्वज्ञत्वान्माधवस्य तदुक्त्याधारत्वात् प्रकरणंतु
माधवोक्तेऽर्थेऽपि न विरुद्धम् ॥ ईदृशविषये सर्वेवेदायत्पदं वेदैश्च
सर्वैरित्यादिश्रुतिस्मृतीरवष्टम्भकतयोपन्यस्यंस्तु अग्निमीळेइत्या-
दिकमपि कुकविकृतिवद्विष्णौ योजयेत् ॥ यास्केन सूर्यपरत्वेना-

ऽयं मन्त्रोव्याख्यातइत्यपि टीकाकारस्य भ्रमः॥ महागतेर्विष्णा-वपि सत्त्वेन सूर्यशब्दस्य निरुक्तेऽदर्शनेन पदार्थमात्रस्य कथनेन च तदन्वयस्य माधवोक्तरीत्या सम्भवात्॥ अतएव माधवेन अ-अयं मन्त्रोयास्केनेत्यादिस्ववाक्ये तुशब्दोन प्रयुक्तोव्याख्यावैल-क्षण्येतु तत्प्रयोगउगचितः॥एवंच प्रकरणाऽनुरोधाद्यास्कविरुद्धा-र्थोपपादनमित्यपि निरस्तं॥यास्केनाऽपि विष्णुपरत्वस्यैवोक्तत्वात्॥ एवंचैतन्मन्त्रसम्बन्धिमाधवव्याख्यादृष्टान्तेनाऽपि विटवादिव्या-ख्यानस्य न सङ्गतिः॥ किञ्च विरोधाऽभावे व्याख्यान्तरस्याऽदुष्ट-त्वेऽपि सति विरोधे दुष्टत्वमेवेत्यलम्॥तैत्तिरीयकस्थमन्त्रे प्रथमते-शब्दस्य तवेति व्याख्यानं तु व्याकरणापरिशीलनात्॥ तेमया-वेकवचनस्येत्यत्र पदादित्यधिकारेण तदप्राप्तेः॥ अव्ययत्वादिक-ल्पनातु द्वितीयतेशब्दस्य तथार्थकत्वसम्भवेऽयुक्तैव॥ भूरेरित्यस्य इन्द्रोमायाभिःपुरुरूपइत्यनेन समानार्थतायाउचितत्वात्॥ अ-र्थान्तरे मानाऽभावात्॥ वेदस्य नित्यत्वं यादृशं प्रागस्माभिरुक्तं तादृशनित्यत्वेन न त्वदीहितसिद्धिः॥ तदुक्तत्वमात्रेण नित्यत्वा-सिद्धावाभातिशब्देन तत्सिद्धिश्चाऽमूलैव॥ वर्त्तमानप्रयोगस्य ग-तिस्तूक्ता॥ मन्त्रार्थस्तु तावांवास्तूनीत्यनेन तुल्यकल्पऊहनीयः॥ इतिचत्वारिंशखण्डखण्डनम्॥ ४०॥ ॥ तदनन्तरमेवच पठ्यते विष्णोःकर्म्माणिपश्यतयतोव्रतानिपस्पशे इन्द्रस्ययुज्यःसखा॥ तद्विष्णोःपरमंपदꣳसदापश्यन्तिसूरयः दिवीवचक्षुराततमितिमन्त्रद्व-यं॥ तथाच पूर्वस्मिन्मन्त्रे यत्रभूरिशृङ्गाअयासस्तदुरुगायस्यप-रमंपदमित्युक्त्वा तदनन्तरं तत्र कृतानि कर्माण्यपि विष्णोःकर्मा-णिपश्यतेति मन्त्रेण निरूप्य पुनः पूर्वोक्तं लीलास्थानं तद्विष्णोः-

पदमिति पदेनाऽनूद्य तस्य नित्यत्वनिरूपणायाह सदापश्यन्ति सूरयइति सूरयोविद्वांसः ॥ तत्त्वंच शब्दब्रह्मपरब्रह्मस्वरूपवित्त्वं ॥ परब्रह्मज्ञानं च भक्त्यैवेति निर्णयः ॥ भक्त्यामामभिजानातीति वाक्यात् ॥ भक्त्याहमेकयाग्राह्यइति वाक्याच्च ॥ तेन सूरिपदेन भक्ताउच्यन्ते ॥ नन्वत्राहतदुरुगायस्येति सूरयःसदापश्यन्तीतिवाक्यैकवाक्यतायां भूमौ तत्परमं पदं भक्ताएव सदा पश्यन्तीत्यर्थः संपद्यते ॥ तथाच काननकालिन्दीतत्पुलिनगिरिवरगह्वराद्यात्मकत्वेनोद्भूतरूपवन्महच्च तत्परमं पदं कथं भक्तैकदृश्यं न साधारणजनचक्षुर्विषयइत्याशंक्य तन्निरासाय दृष्टान्तमाह दिवीवचक्षुराततमिति दिवि स्वर्गे यथा आ समन्तात्ततं व्याप्तं ॥ यन्नदुःखेनेतिवाक्यात्सुखैकसाधनतद्रूपं तत्पदार्थे तत्रस्थानामेव चक्षुः पश्यति नान्येषां तथेत्यर्थः ॥ तेन तल्लीलामध्यपातिनामेव तद्दृश्यमिति साधारणजनाविषयत्वेऽपि न दोषइति भावः॥अथवा पूर्वोक्ताऽऽशङ्कायामेवोच्यते पूर्वमितएव स्वर्गस्थपदार्थदर्शनाऽभावेऽपि योगधारणया दूरग्रहणाख्यसिद्धिसंपत्तौ योगिनश्चक्षुराततं सर्वतोव्याप्तं सर्वग्रहणसमर्थं सदितएव स्वर्गे पदार्थान् पश्यति यथा तथैतस्याऽपि पूर्वमदृश्यत्वेऽपि तादृशभगवदनुग्रहेण तादृग्भक्तिलाभे सति तदधिकारः सपन्नइति तदर्थं तथा भगवान् प्रकटोभवतीति तदा दृश्यत्वं भवतीत्यर्थः॥ तेनाऽऽधुनिकानामपि पूर्वोक्ताऽधिकारसंपत्तौ तद्दर्शनं भवतीति सिद्धं॥अथवा दृष्टान्तत्रयमत्र॥तथाहि॥ पूर्वोक्तपरमपदस्य लोकरूपत्वेनेतरलोकन्यायेन दुःखस्याऽपि तत्र सम्भवात् भगवल्लीलायाश्चानन्दरूपत्वात्कथमेतस्यानन्दैकरूपत्वमतउक्तं दिवीवेति ॥ यथाऽन्यलोके दुःखसंभिन्नसुखरूपत्वेऽपि

स्वर्गे दुःखाऽसम्भिन्नसुखरूपत्वं तथा गोकुले आनन्दैकस्वरूपत्व-मित्यर्थः ॥ नन्वित्यादिनोक्ताशङ्कायामाह॥चक्षुरिवेति॥यथा चक्षु-रेवरूपं गृह्णाति न श्रोत्रादिकं इन्द्रियत्वाऽविशेषेऽपि तस्यैव तत्र सामर्थ्यात् वस्तुनएव तथात्वात् तथाऽत्रापीत्यर्थः ॥ यथा दोषा-ऽसहकृतमेव चक्षुर्वस्तुतत्त्वं गृह्णाति भ्रमिकामलादिदोषसहकृ-तं तु महीभ्रमिशङ्खपीतिमादिकं तथाऽविद्यादिदोषरहिताः सूरय-एव गोकुलादिस्वरूपं पश्यन्ति नान्यइत्यपि चक्षुर्दृष्टान्तस्याऽ-भिप्रेतमिति ज्ञेयं ॥ एतेन तत्रस्थवृक्षस्थलादीनां व्रश्चनान्य-थाभावदर्शनादिषूपपत्तिरुक्ता भवति ॥ यद्वा चक्षुरिति द्वितीयै-कवचनान्तं पदं ॥ यथा चक्षुरिन्द्रियं स्वयमतीन्द्रियमेव गोलके स्थितं सत् सर्वं प्रत्याययति गोलकेऽपि चक्षुःशब्दवाच्यतां च वि-धत्ते योगिप्रत्यक्षविषयश्च भवति तथा गोकुलादिकमप्यलौकिकं स्वयमतीन्द्रियमेव साधारणजनदृश्ये स्वयोग्ये स्थाने स्थितं सत्त-त्स्थानं प्रकाशयति स्वव्यपदेशं च प्रापयति तत्रैवच स्थितं भवति पूर्वोक्तसूरित्वे दृश्यं च भवति ॥ तथाचैतादृशं परमं पदं सूरयः स-दा पश्यन्तीतिसम्बन्धः ॥ ननु साधारणजनदृश्यस्याधिष्ठानत्वपक्षे तस्यैव करणदोषादन्यथाभानपक्षेऽपि तत्र स्थितानां लोकानां दुःखकामक्रोधादिकमनुपपन्नं ॥ तस्य परमानन्दरूपत्वाद्गुणाती-तत्वाच्च ॥ नच करणदोषेणैव द्रष्टुस्तत्स्थितलोकदुःखादिदर्शनमिति वाच्यं ॥ करणदोषस्याऽपि तत्र वक्तुमनुचितत्वात् ॥ तथैवाऽन्यो-न्यं तथा दर्शनादित्यतउक्तं ॥ आततंचक्षुरिवेति ॥ यथा देवदत्त-चक्षुरिद्रियं विष्णुमित्रशरीरे आसमन्ताद्व्याप्तमपि तैजसं सदप्यनु-द्भूतरूपस्पर्शत्वेन नान्धतमसं प्रकाशयति तापयति वा तथा भगव-

दिच्छयैवाऽप्रकटानुभावत्वेन तस्य पक्षद्वयेऽप्याधुनिकतज्जनदोषदर्शनमुपपद्यतइत्यर्थः ॥ तादृशी भगवदिच्छा तु सर्वमुक्त्यभावायासुरजीवानां व्यामोहाय च ॥ यथा योगिनामेव प्रत्यक्षं तत्तथा भक्तानामेवैतदपीति पूर्वमेवाऽवोचाम ॥ ४१ ॥ ॥ अथ तदनन्तरमेवेत्यादिरवोचामेत्यन्तएकचत्वारिंशः खण्डः खण्ड्यते ॥ ॥ तत्र मन्त्रद्वयस्य तावामितिमन्त्रादनन्तरत्वोक्तिः प्रमादादेवैतयोरतिव्यवहितत्वात्पूर्वपठितत्वाच्च ॥ तावांवास्तूनीति द्वितीयाष्टके द्वितीयाध्याये पठ्यते ॥ विष्णोरित्यादितु प्रथमाष्टके द्वितीयाध्याये ॥ सदापश्यन्तीति तु सदायजन्तीतिवत्प्रयोगः ॥ परब्रह्मज्ञानं भक्त्यैवेत्युक्तिस्तु श्रोतव्योमन्तव्यइत्यादिविरोधादुपेक्ष्या ॥ परम्परया भक्तेर्ज्ञानहेतुत्वं तु न निवार्यते ॥ भगवद्वाक्ययोर्भक्त्येत्यत्र तृतीये तु काशीमरणादित्यत्र पञ्चमीव प्रयोजकहेतौ ॥ स्वर्गस्याऽतिदूरत्वेन दर्शनाभावस्य वक्तुं शक्यत्वेन तद्दृष्टान्तपरत्वेन व्याख्यानं न युक्तं ॥ किञ्च चक्षुःशब्दस्य चक्षुर्विशेषपरत्वे टीकोक्तरीत्योद्भूतरूपादीनामलौकिकप्रत्यक्षमात्रप्रयोजकत्वकल्पने च गौरवम् ॥ अथवेत्यादि द्वितीयव्याख्यानं त्वनेकाध्याहारदोषग्रस्तम् ॥ अथवा दृष्टान्तत्रयमित्यादितु इवकारावृत्त्यनेकाध्याहारदूषितम् ॥ यद्वा चक्षुरित्यादितु स्वकपोलकल्पितमनेकपदाध्याहारदोषग्रस्तंच ॥ तस्मादसन्दिग्धार्थवाक्यान्तरं संवाद्यैव सन्दिग्धार्थस्यास्यार्थोवाच्यस्ततोऽयमर्थः॥दिवि स्वयंप्रकाशएव त्रिपादस्यामृतंदिवीत्यनेनैकार्थ्यात् ॥ एवंच विष्णोः परमं पदं शुद्धं ब्रह्म इवशब्दोऽवधारणे ॥ ननु असूरिभिश्चक्षुषा किन्नदृश्यते तत्राह ॥ च-

क्षुराततमिति ॥ विषयग्रहणे विस्तृतं ॥ तथाच श्रुत्यन्तरं पराञ्चि-
खानिव्यतृणत्स्वयंभूस्तस्मात्पराङ्पश्यन्तिनान्तरात्मन् कश्चिद्धीरः-
प्रत्यगात्मानमैक्षदिति ॥ माधवस्तु सूरयोविद्वांसऋत्विगादयोवि-
ष्णोः सम्बन्धि परममुत्कृष्टं तच्छास्त्रप्रसिद्धं पदं स्वर्गस्थानं शास्त्र-
दृष्ट्या सदा पश्यन्ति ॥ तत्रदृष्टान्तः ॥ दिवीव आकाशे यथाऽऽ-
ततं सर्वतः प्रसृतं चक्षुर्विरोधाभावेन विशदं पश्यति तद्वत् इति
व्याचख्यौ ॥ यत्त्वासुरमोहायेत्यत्र प्रमाणोपन्यासार्थं तट्टीकाका-
रेण तथाप्यासुरमोहार्थंपरेषांचक्वचित्क्वचित् दुःखाज्ञानश्रमादींश्च-
दर्शयेच्छुभसद्गुणः क्वव्रणादिक्वचाऽज्ञानंस्वतन्त्राचिन्त्यसद्गुणे दौर्ल-
भ्याच्चैवमोक्षस्यदर्शयेत्तान्यजोहरिरिति ब्रह्माण्डपुराणश्लोकद्वय-
मुदाहृतं ॥ तत्तु न युक्तं ॥ पूर्वपक्षिणा गोलोकस्थजीवदुःखे आ-
शङ्कितत्वेनात्रेश्वरे समाहितत्वेन विषमत्वात् ॥ किञ्चासुरपदोपा-
दानादिदं रावणादिमोहार्थतां दुःखादिदर्शनस्याह तथा तेषामे-
व मोक्षस्य दुर्लभतां चाह ॥ अतएव श्रमादीति व्रणादीति च सं-
गतम्॥युद्धस्याऽसुरैरेव कृतत्वाद्युद्धएवच व्रणादेः सुप्रसिद्धत्वात् ॥
मूलंत्वध्याहारादिगौरवादशब्दार्थवर्णनपरत्वाच्च हेयम् ॥ इत्येकच-
त्वारिंशखण्डखण्डनम् ॥ ४१ ॥ ॥ अथ विष्णोःकर्माणीति म-
न्त्रोव्याख्यायते ॥ अत्र पूर्वस्मिन् मन्त्रे गोकुलस्यैव निरूपणा-
त्तत्र कृतान्येव कर्माणि यशोदास्तनपानपूतनासुपयःपानरिङ्गणा-
दीनि कर्माणि कर्मपदेनोच्यन्तइत्यवगम्यते ॥ अतएवाह ॥ यतो-
व्रतानिइति ॥ यतः कर्मभ्योहेतुभूतेभ्योव्रतानि कात्यायन्यर्चनादी
नि सांनिध्याद्विष्णुरेव पस्पशे स्पृष्टवान् ॥ तत्फलत्वेन तत्कर्त्रीष्वा-
विर्भूय तासु सर्वां लीलां कृतवानित्यर्थः ॥ स्पशबाधनस्पर्शनयो-

रिति धातोर्लिटि रूपमिदं॥ अयंचोभयार्थकः प्रयोगः॥तेन व्रता-
नि लोकमर्यादाव्रतानि पातिव्रत्यादीनि बबाधइत्यर्थः ॥ वेदम-
र्यादात्याजकानां कर्मणां सदोषत्वशङ्कापरिहारायाऽयं प्रयोगः॥
तेन तेषामविकृतत्वमुक्तं भवति॥ स्वव्रतान्यप्यात्मारामत्वपूर्णका-
मत्वादीनि नियमरूपाणि बबाधे ॥ अस्मिन्नर्थे नञ्प्रश्लेषे अ-
व्रतानि स्पृष्टवानित्यर्थोयुज्यते॥ तानि कर्माणि गोपीभिः सह
रमणरूपाणि पश्यतेत्युपदेशः॥ यद्यपि कर्मदर्शनस्य फलत्वेन न
स्वकृतिसाध्यत्वं तथापि मोक्षरसाधिकरसानां स्वतःपुरुषार्थरूपा-
णामतिहृद्यानां स्मरणतस्तत्करवश्यमौत्सुक्यं च श्रुतेः प्रकटयत्येव
कथनं॥ तेन तत्साधनोपदेशः पर्यवस्यति॥ एतेन कर्मणां नित्य-
त्वं ज्ञेयं॥ अन्यथैतदुपदेशाऽसम्भवात्॥ इन्द्रस्य युज्योयोज्योऽ-
नुकूलः सखा॥ अयमर्थः॥ भगवतेन्द्रयागभङ्गे कृते बहुबलात्
वृष्ट्यादिभिरिन्द्रेण द्रोहे कृतेऽपि तद्धेतुभूतदोषरूपमदमेव दूरीकृत-
वान्सर्वसमर्थोऽपि नत्विन्द्रं तदधिकारं वा॥ तथाच तद्दोषहरणेनत
दनुकूलः तदनन्तरमिन्द्राभिषेकगोविन्दनामधारणादिभिस्तत्समान-
धर्मैस्तस्य सखा॥ एतेनाप्रपन्नेऽपि प्रत्युतापकारकर्त्तर्यपि स्वय-
मुद्यम्य तद्दोषनिवर्त्तकस्तद्धर्माङ्गीकर्त्ता च नाऽन्योऽस्तीति परम-
कृपालुत्वं दर्शितं॥ तेन भजनौपयिकं रूपमुक्तं भवति॥ यद्वा
यतः कर्मभ्यइन्द्रस्य व्रतानि यागादीनि पस्पशे बबाधे तानि प-
श्यतेत्यन्वयः॥ तानि कर्माणि केवलात्मसात्करणरूपाणि॥ एतच्च
यथा तथा दशमस्कन्धविवरणे प्रपञ्चितं पितृचरणैरिति नात्रोच्यते॥
तेन स्वतः साधनराहित्येऽपि विपरीततत्करणेऽपि तन्निवार्य स्व-
तएवात्मसात्करणलक्षणधर्मोऽसाधरणोज्ञापितोभवति॥ तेनैतस्यै-

व भजनीयत्वमुक्तं भवति ॥ अन्येहि स्वभक्तसाधनसंपत्तौ फलं ददति नत्वन्यथापीति भावः ॥ युज्योयोज्योगोपिकानां तडिद्रूपत्वेन भगवतश्च नीलमेघश्यामत्वेन तासां योगार्हः सखा समानशीलव्यसनवानित्यर्थः ॥ युजेर्बाहुलकात्क्यप् ॥ किक्त्वाद्गुणाभावः ॥ एतन्मन्त्रद्वयाऽनन्तरमेव ऋग्वेदे पठ्यते तद्विप्रासोविपन्यबोजागृवांसःसमिन्धते विष्णोर्यत्परमंपदमिति ॥ एतदर्थस्तु विष्णोर्यत्पूर्वोक्तं परमं पदमस्ति तत्पदं विप्रासोमेधाविनः पुनः कीदृशाविपन्यवोविशेषेण स्तोतारः पुनः कीदृशाजागृवांसः शब्दार्थयोः प्रमादराहित्येन जागरूकाः समिन्धते सम्यग्दीपयन्तिप्रकाशयन्ति ॥ मेधावित्त्वेन यथोक्तभगवल्लीलास्वरूपाद्यनुसन्धानसहिताः ॥ शब्दार्थयोः प्रमादराहित्येन वाच्यवाचकयोर्भगद्रूपनाम्नोर्नित्यत्वेन कुतर्काद्यनुपहतमतयोनिरन्तरकीर्त्तनरूपस्तोत्रादिसाधनैः प्रकटयन्तीत्यर्थः ॥ तादृशसाधनसंपत्त्यां तद्दर्शनसामर्थ्ये सति पश्यन्तीति तथा ॥ अतएव श्रीभागवतेऽप्युक्तं शृण्वन्तिगायन्तिगृणन्त्यभीक्ष्णशःस्मरन्तिनन्दन्तितवेहितंजनाः तएव पश्यन्त्यचिरेणेत्यादि ॥ तथाच स्थितस्यैव परमपदस्य समिन्धनमुक्तमिति नित्यत्वमेव काननपशुपक्षिमनुजादीनां तत्सम्बन्धिलीलानामपि ॥ अपरं च छान्दोग्ये पठ्यते ॥ अथयदिदमस्मिन्ब्रह्मपुरेदहरंपुण्डरीकंवेश्मदहरोस्मिन्नन्तराकाशस्तस्मिन्यदन्तस्तदन्वेष्टव्यंतद्वावविजिज्ञासितव्यमित्येतस्याग्रे किं तत्र विद्यते यदन्वेष्टव्यं यद्वा विजिज्ञासितव्यमिति प्रश्ने यावान्वाअयमाकाशस्तावानेषोन्तर्हृदयआकाशउभेअस्मिन्द्यावापृथिवीअन्तरेवसमाहितेइत्यादिनाऽग्निवायुसूर्यचन्द्रविद्युन्नक्षत्राण्युक्त्वा यच्चास्येहास्तियच्चना-

स्तिसर्वंतदस्मिन्समाहितमित्युक्त्वा ब्रह्मपुरेजीर्णेध्वस्तेवातदाश्रितं किमवशिष्यतइति प्रश्ने नास्यजरयैतज्जीर्यतिनवधेनास्यहन्यत एतत्सत्यंब्रह्मपुरमस्मिन्कामाःसमाहिताः एषआत्मापहतपाप्मेत्यादि ॥ अत्र ब्रह्मपुरशब्देन ब्रह्मणोभगवतः पुरं लीलास्थानं श्रीगोकुलमथुराद्युच्यते ॥ शरीरार्थकत्वएतत्सत्यं ब्रह्मपुरमित्यपिमं वाक्यं विरुध्येत ॥ अस्य नित्यत्वकथनार्थमेतज्जरादिहेतुकतदाश्रितनाशं पूर्वपक्षत्वेनोक्त्वा वस्तुतस्तु तत्र जरावधादिसम्भावनैव नास्ति यतएतत्सत्यं ब्रह्मपुरं तथापि तुष्यतुदुर्जनइति न्यायेन नास्य जरयेत्याद्युक्तं तर्कितं तदितिज्ञेयं ॥ अतएव भक्तानां सर्वे कामास्तस्मिन् सम्यगाहिताइत्युक्तं ॥ एतच्चाऽऽनन्दमयाधिकरणे सोऽश्नुतेसर्वान्कामान्सहब्रह्मणेतिश्रुतिव्याख्याने प्रपञ्चितं ॥ किञ्च ॥ दहरउत्तरेभ्यइत्यधिकरणेन व्यासैर्दहरशब्दवाच्योऽर्थोभगवानिति निर्णीतः ॥ भगवत्स्थानस्याऽपि भगवद्धर्मवत्त्वेन स्थितियोग्यत्वमिति वक्तुं श्रीगोकुलस्थभक्तहृदयकमलस्याऽपि दहरत्वमुक्तं ॥ तत्र व्याप्य प्रकटीभूय सर्वव्यवहारहेतुत्वेन स्थितइत्याकाशत्वमुच्यते ॥ साक्षात्पुरुषोत्तमलीलोपयोगिपदार्थाआकाशादयोद्युप्रभृतयोभगवदात्मकाएवेति तदन्तःस्थिताएव नतु कालाद्यधीनास्तदाश्रयावा ॥ येत्यक्तलोकधर्माश्चमदर्थेतान्बिभर्म्यहमितिभगवद्वाक्याच्च ॥ यावान्वेति परिणामसाम्यमुपलक्षणविधयोक्तमिति ज्ञेयं॥तेन लीलाख्यपदार्थाः स्वरूपतस्त्वलौकिकाएव तथापि लौकिकरूपाएवेति ज्ञाप्यते॥लोकवत्तुलीलाकैवल्यमिति न्यायात्॥एवंसति निष्प्रत्यूहं लीलानित्यत्वं श्रुतिवृन्दैरमन्दगीत ममन्दानन्दकन्दममन्दभाग्यराशिभिर्मनुजैर्हृदिभावनीयं ॥४२॥ ॥ अथ अथ-

विष्णोरित्यादिर्द्दिभावनीयमित्यन्तोद्वाचत्वारिंशः खण्डः खण्ड्य-
ते ॥ ॥ तत्र पूर्वस्मिन्नित्यसङ्गतं॥तावामित्यस्याऽतिव्यवहितोत्तर-
त्वात् ॥ तस्योक्तार्थकत्वेन गोकुलस्यैव निरूपणादित्यप्यसङ्गतम् ॥
अन्यदपि तत्रोक्तमूहनीयम् ॥ कर्मशब्देन कर्मानुरूपफलदानानि
गृह्यन्ते॥तेषां दर्शनं योगबलादार्षज्ञानरूपम् सामान्यज्ञानरूपं वा॥
दृशेर्ज्ञानसामान्यार्थतायाउक्तत्वात् ॥ व्रतस्पर्शस्तु तत्फलदानाय
स्वीकारः ॥ श्रुत्यन्तरसंवादात् ॥ किञ्च तावामिति मन्त्रे निरुक्ते
उरुगायस्य विष्णोर्महागतेरित्युक्तत्वेन मन्त्रान्तरस्थविष्णुशब्दो-
ऽपि महागतिवाचकः इति तद्भार्दे ॥ महागतिश्च सूर्यादिष्वप्य-
स्तीति तत्परतायां च तात्पर्यं प्रतीयते ॥ अन्यथा तस्मिन्मन्त्रे
विष्णुपदाभावेन तद्विवरणं न सङ्गच्छेत ॥ एवंचेमावपि मन्त्रौ सू-
र्यादिपरावेव तत्र कर्माणि सर्वोपकारकरणानि पश्यत जानीत
स्वोदयेन त्रयीमयत्वेन च सर्वव्रतप्रयोजकतया तस्य स्पर्शकत्वं
सर्वयज्ञप्रवर्त्तकतयाचेन्द्रसखत्वं ॥ परमंपदमितिपूर्ववद्व्याख्येयं दि-
वीत्यस्य पश्यन्तीत्यनेन सम्बन्धः ॥ दृशिर्ज्ञानसामान्ये॥ यथा च-
क्षुर्लौकिकवैदिकसर्वव्यवहारोपकारकमेवं जानन्तीत्यर्थः ॥ प्रततं
व्यापकं सर्वोपकारकत्वात्॥वस्तुतस्तु माधवः हेऋत्विगादयोविष्णोः
कर्माणि पालनादीनि पश्यत यतो यैः कर्मभिर्व्रतान्यग्निहोत्रादी-
नि सर्वोयजमानः पस्पशे स्पृष्टवान्॥विष्णोरनुग्रहादनुतिष्ठतीत्यर्थः॥
तादृशोविष्णुरिन्द्रस्य युज्यो योज्योऽनुकूलः सखा भवति ॥ वि-
ष्णोरिन्द्रानुकूल्यं त्वष्टाहतपुत्रइत्यनुवाके ऽथवैतर्हिविष्णुरित्यादिना
तैत्तिरीया आमनन्ति इति व्याचख्यौ ॥ नियमभञ्जकत्वाङ्गीका-
रस्त्वासुराणामेव ॥ वैदिकमर्यादाभञ्जकत्वाङ्गीकारे श्रीकृष्णबुद्धयोः

कोवा विशेषः स्यात् ॥ तस्माद्युष्माभिरेवेद्दार्नीन्तनकुलवधूपाति-
व्रत्यबाधनाय तथा व्याख्यायते ॥ मन्त्रस्य सद्धर्मरक्षापरतायाः
स्पष्टं प्रतीयमानत्वात् ॥ एतेन यतः कर्मभ्योहेतुभ्यइत्यारभ्याऽस-
म्भवादित्यन्तस्य ग्रन्थस्य कामुकप्रलापमात्रत्वं स्पष्टीकृतम् ॥ इ-
न्द्रसखत्वं तु पूर्वोक्तरीत्यैवेत्यर्थान्तरकथनं प्रलापएव ॥ विना भ-
क्तिं फलप्रदातृत्वे साधनप्रयासनैष्फल्यम् ॥ गोपीनां तडिद्रूपत्वे
मानमन्वेष्यम् ॥ गोप्यादिपदाध्याहारे गौरवञ्च ॥ तद्विद्वांसइति म-
न्त्रेऽपि विष्णोर्यत्परमंपदमिति पूर्ववद्व्याख्येयम् ॥ वाच्यवाचकयो-
र्नित्यत्वे तु न मानम्॥अतस्तत्कथनं प्रलापएव॥समिन्धनं तु स्थितस्य
ग्रहणान्नतुनित्यत्वात्प्रमाणाभावात् ॥ एतत्सत्त्यमित्यत्र सत्त्यशब्दो-
नाऽबाधितार्थकः किन्तु यथावदर्थतावदर्थकः ॥ सत्त्यंकृतेचशप-
थेतथ्येत्रिषुतुतद्वतीतिमेदिनीकोशात् ॥ तत्त्वं तु यथाप्रतीयमानत्व-
म् ॥ तथाच ब्रह्मपुरशब्देन तत्र शरीरमेव ग्राह्यम् ॥ अन्यथा ज-
रायाः प्राणवियोगरूपवधस्य च शरीरधर्मतया प्रसिद्धत्वेन गो-
कुले तदभावेन भक्त्याऽपक्षयविनाशयोस्ताभ्यां पदाभ्यां ग्रहणे-
ऽपि ग्रामादेरपक्षयादिना स्वामिनोलोकेऽप्यपक्षयादेरदर्शनेन च
जीर्णत्वहननशङ्कासमाधाने निर्मूले स्याताम् ॥ किञ्च नवद्वारेपुरे-
देहीत्यादौ पुरशब्दस्य देहे प्रसिद्धिरस्ति गोकुले तु क्व सेत्युदाहर॥
किञ्चैतत् सत्त्यंब्रह्मपुरमित्यत्र देहजरावधाभ्यां जीर्णत्वहननयोर-
नाश्रयोब्रह्मोच्यते॥ब्रह्मैवैतच्छब्देन परामृश्य तत्प्रकरणस्थब्रह्मलोक-
पदवत्सामानाधिकरण्येन ब्रह्मपुरशब्देनोच्यते॥सर्वकामसमाधानस्य
एषआत्मा इत्यादिविशेषणस्य च तत्रैव सम्भवात् ॥ एतेन शरी-
रार्थकत्वे इत्यादि निरस्तम् ॥ तथापि तुष्यात्वित्यादिकुकविकृति-

प्रयोजनं तु मूलाभावाद्धेयम् ॥ सर्वेकामा मनोरथाः ॥ नच तेषां प्रतिष्ठितत्वकथनेन भोगोपकरणान्येव कामशब्देन ग्राह्याणीति टीकोक्तं साध्विति वाच्यम्॥परमेश्वरस्य मनोरथानाधारत्वे सर्वाश्रयत्वव्याहतेस्तस्य तदाधारत्वात्॥एतेन सोऽश्नुतेसर्वान्कामानिति श्रुतिव्याख्यानपरस्वगुरूक्त्युपष्टम्भनमपि तस्य निरस्तम् ॥ तेन हि कामपदेन भोगसाधनोपादानेऽशेषग्रहणं बीजमुक्तं ॥ तच्च कामशब्देन मनोरथग्रहणेऽपि नासङ्गतम् ॥ मनोरथानां सुखरूपाणामपि सोऽत्यन्तंसुखमश्नुते इत्यादिदर्शनेनाशनसम्भवात् ॥ एवञ्च हृदयकमलस्यैव पुण्डरीकपदेन ग्रहणं नतु गोकुलस्थभक्तहृदयकमलस्य मानाभावादेवञ्च भगवत्स्थानस्याऽपीत्याद्यप्यपहास्तितम् ॥ साक्षात्पुरुषेत्याद्यप्यसङ्गतम् ॥ सङ्कोचे बीजाभावादतिरिक्ताकाशादिसत्त्वस्य निर्मूलत्वाच्च ॥ येत्यक्तलोकधर्माः इत्यत्र लोकधर्मशब्देन राजसेवाकुलधर्मादयोगृह्यन्ते नतु वस्तुस्वभावः ॥ मानाभावात् ॥ तेन तान्बिभर्मीत्यस्य तान् पालयामीत्यर्थः ॥ तेषांनित्याभियुक्तानामितिवाक्येनैकार्थ्यलाभात् ॥ लोकवत्तुलीलाकैवल्यमित्यत्र लीलाशब्दः केलिवाची ॥ लीलाकेलिविलासयोरितिमेदिनीकोशात्॥यत्त्वेतत्सूत्रव्याख्यायामेतत्पित्रा नहि लीलायां किञ्चित्प्रयोजनमस्ति लीलायाएव प्रयोजनत्वादित्युक्त्वा ईश्वरत्वादेव न लीला पर्यनुयोक्तुं शक्येत्युक्तं॥तन्नयुक्तं॥तथाहि॥यदि लीलायाएवेत्यनेनेश्वरविषयएव नियमः क्रियते तर्हिसूत्रे लोकवदितिव्यर्थं तद्विरोधश्च॥यदिच सामान्यविषयएव सक्रियते तर्हि ईश्वरत्वादेवेत्यसंगतम्॥ लीलायादुःखाऽभावसुखविलक्षणत्वेन तस्याः प्रयोजनत्वोक्तिर्व्याहतैव॥अतएवैतत्सूत्रव्याख्याने यथा लोके क-

स्यचिदाप्तैषणस्य राज्ञोराजामात्यस्य वा व्यतिरिक्तं किञ्चित्प्रयोजनमनभिसन्धाय केवलं लीलारूपाः प्रवृत्तयः क्रीडाविहारेषु भवन्तीत्याद्युक्तम् भगवत्पादैः॥अत्र प्रयोजनाभिसन्धानाभावेन प्रवृत्तायाः लीलायाः प्रयोजनरूपत्वाभावः स्पष्टमुक्तः॥प्रयोजनाऽनभिसन्धाने हेतुराप्तैषणस्येति॥आप्तैषणत्वं तु सर्वसुखसंपत्त्या विरक्त्यादिना वा॥अत्र प्रयोजनमनुद्दिश्यनमन्दोपीतिन्यायेनेश्वरस्याऽऽप्तकामतया ऽप्रवृत्तिराशङ्किता पूर्वपक्षिणा ॥ तत्रोच्छ्वासस्तथाचेष्टादिषु व्यभिचारे दर्शिते गुरुतरसंरम्भतयोच्छ्वासादिसादृश्यं नेति तेनोक्ते सूत्रकारइदमाह लोकवदिति ॥ तथाचास्मदृष्ट्याऽस्यसंरम्भस्य गुरुत्वेऽपि तद्दृष्ट्या लौकिकोच्छ्वासादिसदृशीयं लीलेति सूत्रस्य व्याख्यान्तरं श्रीभगवत्पादैः सूचितमिति सङ्क्षेपः ॥ यत्तु सा लीला कैवल्यं मोक्षः तस्य लीलात्वेऽप्यन्यस्य तत्कीर्तनान्मोक्षइत्यर्थइति तेनैवोक्तं तदपि न ॥ अध्याहारं विना तादृशार्थाऽलाभात् अध्याहारे मानाभावाच्च ॥ तत्कीर्त्तनेन मोक्षे मानाभावाच्च ॥ नान्यःपन्थाइति श्रुतिविरोधाच्च ॥ तादृशार्थस्य प्रकृतशङ्कानिवारकत्वाभावेनाऽऽधिक्यापत्तेश्च ॥ इति द्विचत्वारिंशखण्डखण्डनम् ॥४२॥

॥ ॥ अपरंच बृहद्वामनपुराणे गीयते उत्तरस्थाने खिले च भृग्वादीन् प्रति ब्रह्मणोवाक्यानि॥षष्टिवर्षसहस्राणिमयातप्तंतपःपुरा नन्दगोपव्रजस्त्रीणांपादरेणूपलब्धये तथाऽपिनमयाप्राप्तास्तासांवैपादरेणवः श्रुत्वैतद्ब्रह्मणोवाक्यंभृगुःप्राहाऽथसादरं वैष्णवानांपादरजोगृह्यतेत्वद्विधैरपि सन्तितेबहवोलोकेवैष्णवानारदादयः तेषांविहायगोपीनांपादरेणुस्त्वयापियत् गृह्यतेसंशयोमेऽत्रकोहेतुस्तद्-

द्प्रभो ततोब्रह्माभृगुंप्राहचिंतयित्वापुरातनीं कथांसर्वश्रुतीनांच द्रहस्यंपरमाद्भुतं ब्रह्मोवाच नस्त्रियोव्रजसुन्दर्य्यःपुत्रताःश्रुतयः किल नाऽहंशिवश्चशेषश्चश्रीश्चताभिःसमाःक्वचित् प्राकृतेप्रलये प्राप्तेव्यक्तेऽव्यक्तंगतेपुरा शिष्टेब्रह्मणिचिन्मात्रेकालमायातिगेऽक्षरे ब्रह्माऽऽनंन्दमयोलोकोव्यापिवैकुण्ठसंज्ञकः निर्गुणोनाद्यनन्तश्चव र्त्ततेकेवलेऽक्षरे अक्षरंब्रह्मपरमंवेदानांस्थानमुत्तमं तल्लोकवासीत त्रस्थैःस्तुतोवेदैःपरात्परः चिरंस्तुत्याततस्तुष्टःपरोक्षंप्राहतान्गिरा तु ष्टोऽस्मिब्रूतभोप्राज्ञावरंयन्मनसीप्सितं श्रुतयऊचुः नारायणादिरू पाणिज्ञातान्यस्माभिरच्युत सगुणंब्रह्मसर्वेदंवस्तुबुद्धिर्नतेषुनः ब्रह्मे तिपठ्यतेऽस्माभिर्यद्रूपंनिर्गुणंपरं वाङ्मनोऽगोचराऽतीतंततोनज्ञायते तुतत् आनन्दमात्रमितियद्वदन्तीहपुराविदः तद्रूपंदर्शयाऽस्माकंयदि देयोवरोहिनः श्रुत्वैतद्दर्शयामासस्वंलोकंप्रकृतेःपरं केवलानुभवाऽऽ नन्दमात्रमक्षरमध्यगं यत्रवृन्दावनंनामवनंकामदुघैर्द्रुमैः मनोरम निकुञ्जाढ्यंसर्वर्त्तुसुखसंयुतं यत्रगोवर्द्धनोनामसुनिर्झरदरीयुतः र त्नधातुमयःश्रीमान्सुपक्षिगणसङ्कुलः यत्रनिर्मलपानीयाकालि न्दीसरितांवरा रत्नबद्धोभयतटाहंसपद्मादिसङ्कुला नानारासरसो न्मत्तंयत्रगोपीकदम्बकं तत्कदम्बकमध्यस्थःकिशोराकृतिरच्युतः दर्शयित्वैवचप्राहब्रूतकिंकरवाणिवः दृष्टोमदीयोलोकोऽयंयतोना स्तिपरंवरं श्रुतयऊचुः कन्दर्पकोटिलावण्येत्वयिदृष्टेमनांसिनः का मिनीभावमासाद्यस्मरक्षुब्धान्यसंशयं तथात्वल्लोकवासिन्यःका मतत्त्वेनगोपिकाः भजन्तिरमणंमत्वाचिकीर्षाजनिनस्तथा श्रीभ गवानुवाच दुर्लभोदुर्घटश्चैषयुष्माकंसुमनोरथः मयानुमोदितःस म्यक्सत्योभवितुमर्हति आगामिनिविरञ्चौतुजातेसृष्ट्यर्थमुद्यते क

त्वंसारस्वतंप्राप्यव्रजेगोप्योभविष्यथ पृथिव्यांभारतेक्षेत्रेमाथुरेम-
ममण्डले वृन्दावनेभविष्यामिप्रेयान्वोरासमण्डले जारधर्मेणसुस्ने-
हंसुदृढंसर्वतोऽधिकं मयिसंप्राप्यसर्वेपिकृतकृत्याभविष्यथ ब्रह्मो-
वाच श्रुत्वैवंचिन्तयन्त्यस्तारूपंभगवतश्चिरं उक्तकालंसमासाद्यगो-
प्योभूत्वाहरिंगताइति॥अत्रहि श्रुतिभिः सर्ववेदान्तप्रत्ययं गुणातीं-
तं वाङ्मनोऽगोचरातीतमानन्दैकरूपं यत्तव रूपं तत्प्रदर्शयेति प्रा-
र्थितोभगवान् गोकुलं तत्स्थितं स्वस्वरूपं लीलां तत्र क्रियमाणांच
प्रदर्शितवानित्युच्यते॥एतत्तदैव घटेत यदि सर्ववेदान्तप्रत्ययत्वादि-
विशिष्टमेतद्भवेत् ॥ एवंसति तन्नित्यता निष्प्रत्यूहा सिद्धा भवति॥
नच तत्स्थितस्वरूपमात्रस्यैव नित्यता न लोकस्याऽपीति वाच्यं॥
लोकप्रदर्शनवैयर्थ्याऽऽपातात् ॥ अप्रार्थितत्वात् ॥ तथाच स्वरूप-
दर्शनमात्रार्थं प्रार्थितोयद्वृन्दावनादिकमपि प्रदर्शितवान् तेन वृ-
न्दावनाद्युक्तसामग्रीविशिष्टमेव सदाभगवद्रूपं नकेवलमिति ज्ञा-
पयति ॥ वस्तुनएव तथात्वान्नशङ्कालेशोऽप्यत्र ॥ अतएव ब्रह्मध-
र्मस्वरूपविचारे प्रकाशाश्रयवद्वातेजस्त्वादिति सूत्रितं बादरायणेन॥
एतच्च यथा तथा पुरस्तादेवोक्तं ॥ ४३ ॥ ॥ अथापरश्चबृहदि-
त्यादिस्तथापुरस्तादेवोक्तमित्यन्तस्त्रयश्चत्वारिंशः खण्डः खण्ड्य-
ते ॥ ॥ यत्त्वत्र प्रपञ्चप्रवाहस्याऽनादित्वं टीकाकारेणोक्तम् त-
त्तु पूर्वाऽपरविरुद्धम् ॥ अयमध्यायः प्रसिद्धप्रवचनार्थैर्महाभा-
रतादिभिरलब्धसंवादः ॥ द्वैपायनस्तु महाभारते यदत्राऽस्तितदन्य-
त्रयन्नेहास्तिनकुत्रचिदित्यूचे इति कथमयं विश्वास्यः क्षेपकत्त्व-
शङ्कानपायात्॥किञ्च ब्रह्मज्ञानेन कृतकृत्यत्वबोधकश्रुतिविरुद्धोऽ-
यम्॥किञ्च ब्रह्मणोज्ञानित्वं ज्ञानिनः कृतकृत्यत्वंच वदद्भिर्वचनैरयं

विरुद्धः॥नाहंशिवश्चेतितु सर्वथायुक्तम्॥नवश्रियेमरुतइत्यादिऋग्वे दादिश्रुतिभिः नाहंनयज्ञोनचयूयमन्येइत्यादिभागवतादिभिश्च विरुद्धस्याऽस्याऽङ्गीकारे वेदाःश्रीकृष्णेत्यादिसिद्धान्तविरोधः॥वनद्रोणसौप्तिकदानधर्मादीतिहासरूपमहाभारतेन च श्रीकृष्णोपास्यत्वश्रीकृष्णज्ञानाविषयत्वादेः कथनेन शिवस्यैव पूर्णब्रह्मताप्रतिपादनेन तद्विरोधोऽपि ॥ उक्तश्चायमर्थोभगवतैवेश्वरः सर्वभूतानामित्यादिना ॥ ईश्वरशब्दस्य कोशादितः शिवातिरिक्तबोधकत्वाऽलाभात्॥ अधिकं तु लिङ्गार्चनचन्द्रिकायामस्मत्कृतेशैवसुधाकरे च द्रष्टव्यम् ॥ चिन्मात्रेब्रह्मणिशिष्टे इत्युक्त्वा वैकुण्ठसंज्ञकोवर्ततइत्युक्तिर्विरुद्धैव ॥ वैकुण्ठस्य विष्णुरूपत्वेन विरोधोद्धारे तु त्वन्मते सर्वस्याऽपि विष्णुरूपत्वेन सर्वं शिष्येत ॥ प्राकृतजनादर्शनविषयत्वेनेतरस्य प्रलयव्यवहारइतिचेत् ॥ वैकुण्ठः किं न प्राकृतजनादर्शनविषयोयेन सोऽवशिष्टइत्युच्यते ॥ भक्तानां तदा वैकुण्ठस्य दर्शनं भवतीति सशिष्टइत्युच्यतइतिचेत्सर्वस्य ब्रह्मरूपत्वेन ब्रह्मणोनित्यत्वेन तेषामितरपदार्थज्ञानस्याऽपि वैकुण्ठज्ञानवद्दुर्वारत्वात् ॥ पराशरेण सत्यलोकात्परस्य निषिद्धत्वेन सत्यपर्यन्तस्य प्राकृतत्वेन वैकुण्ठस्याऽप्राकृतत्वोक्तिरपि न युक्ता ॥ नारायणादिसगुणरूपं ब्रह्म दृष्टं निर्गुणं दिदृक्ष्यते इति तद्दर्शयेति वरं याचमानानां नारायणांऽशश्रीकृष्णतल्लोकादिप्रदर्शनं तु प्रतारणैव ॥ श्रीकृष्णादेर्निर्गुणब्रह्मत्वाऽभावात् ॥ श्रीकृष्णस्य विष्ण्वंशत्वं तु उक्तम् ॥ यथात्वल्लोकवासिन्यइति श्लोकस्तु त्वत्सिद्धान्तविरुद्धः ॥ कासांचिदनादिकृष्णसङ्गस्य कासांचित्तदभावस्य सर्वासां भोगसाम्यस्य च ततोभानात् ॥ किञ्चैवं पुरासिद्धभोगाभ्योगोपीभ्यः

कआसां विशेषोयेनैताएव न स्त्रियइत्यनया स्तुत्या स्वाऽऽराध्य-
तयोक्ताः ॥ पूर्वं गोपीभूतानामेव श्रुत्यादिभावे पुनर्गोपीभावइति
तु बालोपलालनमेव ॥ तथाहि ॥ बृहद्वामनीयेत्यादिवक्ष्यमा-
णपञ्चचत्वारिंशखण्डस्थस्वग्रन्थविरोधाच्च ॥ नस्त्रियोव्रजसुन्दर्य-
इत्यनेन दुर्लभोदुर्घटश्चैवइत्यनेन च विरुद्धमेतत् ॥ व्रजे गोप्यो-
भविष्यथेति भविष्यत्ताकथनं च न तेऽनुकूलम्॥जारधर्मेण कृत-
कृत्यत्वोक्तिस्तु सर्वथा शास्त्रविरुद्धैव ॥ त्वन्मायावञ्चितत्वेन पुत्रं
त्वां कामितवन्तौ नतु ज्ञानमिति भागवतस्थवसुदेववचनेन पुत्रत्वका
मनायाहेयत्वे जारत्वकामनायाः सुतरां तथात्वात् ॥ जारधर्मेण
कृतकृत्यत्वसम्भवे त्वन्मायावञ्चितत्वेन त्वां जारं न कामितव-
न्ताविल्येव वक्तुमुचितत्वाच्च ॥ सम्प्राप्तेः परं कृतकृत्यत्वोक्तिरपि
ते नाऽनुकूला ॥ सम्प्राप्तेरेव त्वन्मते कृतकृत्यत्वरूपत्वात् ॥ तस्मा-
न्नायमध्यायः प्रामाणिकैरादरणीयः ॥ अतएवेयंलीलेत्यादिकमु-
त्तरग्रन्थमवतारयता उक्तवाक्यानामतिप्रसिद्धत्वाभावात्कुमतीनां
शङ्का नापैतीति पूर्वोक्तमेव स्मारयन्ति अतएवेतीति वदता टी-
काकृताच स्वस्य मूलकर्त्तुश्च तत्र दृढप्रत्ययाऽभावोध्वनितः ॥
अभ्युपेत्याऽप्युच्यते ॥ सर्ववेदान्तप्रत्ययमिति विशेषणं पुराणात्म-
कमूलादधिकम् ॥ गोकुलादिदर्शनन्तु अधिष्ठानदर्शनसौकार्याय
नतु तत्स्वरूपत्वबोधाय अन्यथा गोपीनामपि तल्लीलामध्यपाति-
तया तासामपि तद्रूपताऽऽपत्तौ वरादिकमिदं सर्वं विप्लवेत॥वस्तुन-
एव तथात्वादित्युक्तौ द्वैतवादिवत्स्वीकारे चाद्वैतनिर्विशेषादिपदा-
नां वृत्यादिपदवत्पारिभाषिकत्वमेव त्वन्मते स्यात् नतु लोकप्र-
सिद्धार्थबोधकत्वम् ॥ एवञ्च सर्वैरपि वादिभिः स्वस्वसंमतेऽर्थे तेषां

तेषां शब्दानां सङ्केतकल्पने विवादमात्रमुच्छिद्येतेत्यलम् ॥ यत्तु टीकाकृता तस्मान्नभिन्नाएतास्तुआभिर्भिन्नोनवैप्रभुः भूमावुत्तारितंसर्ववैकुण्ठंस्वर्गवासिनम् इति गोपालतापनीयवाक्यमिह मूलतयोपन्यस्तं ॥ तन्नसम्यक् ॥ पूर्वार्द्धस्य महावाक्यैः समानार्थत्वात् ॥ उत्तरार्द्धंतु वैकुण्ठपद तत्संबन्धिपरं स्वर्गवासिनमित्यनेनाऽविरोधाय ॥ नहि स्वर्गैकदेशत्वेऽपि तस्य स्वर्गवासित्वं संगच्छते ॥ यदक्षरेपरेपरमेप्रजाइति तैत्तिरीयवाक्यं तु यस्मिन्सर्वाणिभूतानीत्यादिना तुल्यार्थं ॥ यच्च तच्छ्रुत्यनुरोधाद्वृक्षफलादिवद्भिन्नाभिन्नत्वं गोप्यादेरूचे ॥ तच्च शुद्धाद्वैतमतविरुद्धं मतान्तरप्रवेशकारकंचाऽन्यतरस्य कल्पितत्वाभावे विरुद्धंच ॥ यत्तु तेनैव कुरुक्षेत्रादिषु भगवद्गमनेन तेषां नित्यत्वमाशङ्क्य तावन्मात्रार्थं तत्र गमनेन नित्यलीलास्थानत्वस्याऽशक्यवचनत्वादिति समाहितं ॥ तदप्यसंगतम् ॥ याया लीला यथायथा भगवता कृता तस्यास्तस्यास्तथातथैव नित्यत्वेन भक्तजनदृश्यत्वेनच कुरुक्षेत्रादेरपि नित्यतायाएव वक्तुमुचितत्वात् ॥ अन्यथा लीलान्तरस्याऽपीदृशत्वप्रसङ्गात् ॥ प्रकाशाश्रयवद्वेतितु प्राग्व्याख्यातम् ॥ इति त्रयश्चत्वारिंशखण्डखण्डनम् ॥ ४३ ॥ ॥ अतएवेयं लीला ऋगन्तरेणाऽपि ऋग्वेदे निरूप्यते ॥ तथाहि जज्ञानएवव्यबाधतस्पृधःप्रापश्यद्वीरोअभिपौंस्यंरणं अवृश्चदद्रिमवसस्यदस्सृजदस्तभ्नान्नाकंस्वप्रस्ययापृथुमिति ॥ जज्ञानएव गोकुलेजातमात्रएव स्पृधः पूतनातृणावर्त्तादिवैरिणोव्यबाधत विविधप्रकारैर्विशेषेण वा हिंसितवान् पश्चात् वीरो विक्रान्तोमथुराद्वारकादिषु अभिपौंस्यं आत्मपौरुषानुरूपं रणं दैत्यैः सह संग्रामं प्रापश्यत् अनुभू-

तवान् कृतवानित्यर्थः॥भूमिष्ठदैत्यानां नाशमुक्त्वा देवेन्द्रमदभङ्गकारित्वमाह॥अद्रिं गोवर्द्धनगिरिं अदृश्वत् उत्पाटितवान् सस्यत् प्रस्रवदिन्द्रप्रेरितं जलं अवाऽसृजत् अधिक्षिप्तवान् निवारितवान् एतया स्वप्रस्यया गोकुलस्थितिकरणकर्मेच्छया पृथुं विस्तीर्णं नाकं अस्तभ्नात् प्रतिबद्धवान् ॥ इन्द्रादिदेवानांमदस्तम्भं कृतवान् इत्यर्थः ॥ किञ्च ॥ दशमस्कन्धे कात्यायन्यर्चनव्रतानन्तरं वरदानार्थमागतस्य भगवतोव्रजकुमारीषु वरदानवचनं गीयते मयेमारंस्यथक्षपाइति॥अत्रेमाः क्षपाः इतीदम्शब्देन ताभ्यः सर्वाः क्षपाः पुरःस्थिताः कृत्वा प्रदर्शितवानिति ज्ञायते ॥ अन्यथा ताः क्षपाः इत्येव वदेत् ॥ वदति च प्रातःसमये ॥ तेनैतद्रात्रिसाजात्येन तासामेतस्यामेवेमाइति प्रयोगोजात्यभिप्रायेणेति वक्तुं न शक्यं ॥ बहुवचनाऽनुपपत्तेश्च ॥ नचेदम्शब्दस्य भगवद्बुद्धिस्थतद्वाचकत्वेन सर्वोपपत्तिरिति वाच्यं ॥ कथनस्य परप्रतिपत्त्यर्थत्वेनैवंकथनेऽपि कुमारीणां तद्बोधासम्भवेनैतत्कथनवैयर्थ्यापत्तेः ॥ किञ्च ॥ भगवतः सत्यसङ्कल्पत्वेन तत्त्वस्य चाऽबाधितविषयत्वेनाऽत्र तासां रात्रीणां सपद्यभावे पूर्वोक्तसत्यसङ्कल्पत्वाऽनुपपत्तिः ॥ नन्वेष्यामितेगृहंसुभ्रुआयास्यइतिदौत्यकैः ज्ञातीन्वोद्रष्टुमेष्यामइत्यादिषु स्थलेष्वग्रेभावि भगवदागमनं कथं तदैववर्त्ततइतिवक्तुं शक्यं तथात्वे वा कथनवैयर्थ्यापत्तिरनुभवविरोधश्चेतिचेत् ॥ मैवम्॥सर्वस्याअपि लीलायानित्यत्वे पूर्वसिद्धायाएव क्रमेणाऽऽविर्भावः परमिति पूर्वमेवोक्तत्वात्तस्याऽगमनस्याधुना चाऽप्रकटितत्वादेतत्काले प्रकटितलीलामध्यपातिनां तदनुभवाद्भगवतश्च सर्वज्ञत्वेन तल्लीलायाअप्यनुभवविषयत्वात्सर्वोपपत्तेः॥नन्वधुना प्रकटितली-

लामध्यपातिनामेवाऽपे प्रकटनीयलीलासम्बन्धित्वमवश्यं वाच्यं॥ तथैवानुभवात्तेषां मह्यं पूर्वमुक्तमासीदेष्यामीति तेनागतइति॥अ-न्यथा त्वन्यत्र कथनमन्यत्रगमनमिति सत्यवाक्काऽनुपपत्तिश्च॥उ-क्तेषु भगवदाशयास्थित्यनुपपत्तिश्चेति कथं नित्यायाएव लीलायाः क्रमेणाऽऽविर्भावः परमिति सद्गच्छतइतिचेत्॥ अत्रेदंप्रतिभाति॥ लीलानित्यत्वं न केवलं लौकिकयुक्तिकं किन्तु जयतिजननिवा-सइत्याद्युक्तस्मृतिश्रुतिप्रमाणगम्यं॥ तथाचाऽबाधितप्रामाण्यैरु-क्तप्रमाणैः सिद्धं चेन्नानुपपत्तिः काचित्तत्र वस्तुनीत्यभ्युपेयं॥ प्रमाणतस्तथैव सिद्धत्वात् किन्तु स्वबुद्धिपरिकल्पिता तत्राऽनुप-पत्तिः साचैवं परिहरणीया॥ रसोवैसइति श्रुत्या सर्वरसइति श्रु-त्याच भगवतः सर्वरसरूपत्वं निर्विवादं तथाच यत्र यदा वदत्ये-ष्यामीति तेषां भक्तानां तत्कालीनभगवदागमनविषयकपरमार्त्ति-लक्षणरसपोषाय भगवता तथोक्ते मद्गृहे सर्वथा समागमिष्यति प्रियस्तत्र चैवमेवं मन्मनोरथपूर्त्तिर्भविष्यतीति निश्चयेनाऽमन्दा-नन्दरूपारसभावविशेषाश्चाऽतिविलक्षणास्तदा भक्तेषूत्पद्यन्ते॥ भगवतश्च तद्भावदर्शनजनितस्तत्समयाऽनुरूपोभावविशेषः परमा-नन्दरूपाऽनुभवविषयोभवति तथाच पूर्वोक्तश्रुत्या स्वरूपात्मकमे-वेमं रसं सदैवाऽनुभवतीति सिद्धं॥ पूर्वोक्तभक्तगृहगमने च पूर्व-मवधिं मत्वा तत्समयमतिक्रम्याऽनतिक्रम्य वा समागते प्रियतमे ये रसात्मकाभावविशेषास्तांस्तथाभूतसम्भुक्तन्यायेनाऽऽत्मरूपाने-वाऽनुभवति तत्र पूर्वोक्तानामेतेषां च भेदोन शङ्कनीयः॥ यतः पू-र्वं मह्यमेवमुक्तमासीदित्यनुसन्धानएव तथा रसोत्पत्तिर्नान्यथा॥ तथाच तस्य तस्य रसस्य तादृक्तादृग्रूपत्वाद्रसस्य च भगवद्रूपत्वा-

यत्र योरसोयादृशोयावद्विधः स्वशास्त्रसिद्धः तत्र तावद्विधः सर-
सोभगवानेवेति फलितं ॥ भगवांश्चैकएव ॥ तथाच तत्रत्यासर्वा
सामग्री तद्रसरूपैवेति सर्वमनवद्यं ॥ तथाच क्षपाणां तथाप्रदर्शनं
तन्नित्यत्वएव घटते ॥ अग्रिमरमणलीलायाअपि नित्यत्वे कथ-
मेतद्व्रतफलत्वेन वरदानमुपपद्यतइति शङ्काप्येतेनैव निरस्ता वेदि-
तव्या ॥ भगवतः सर्वरसरूपत्वेनैव सर्वोपपत्तिरित्युक्तत्वात्॥इयमे-
वोपपत्तिः श्रीनन्दयशोदयोस्तादृशलीलानन्दानुभवे कोहेतुरिति
नन्दःकिमकरोद्ब्रह्मन्श्रेयएवंमहोदयं यशोदावामहाभागापपौय-
स्याःस्तनंहरिरित्यादिना राज्ञा प्रश्ने कृते द्रोणोवसूनांप्रवरोधरया-
सहभार्यया करिष्यमाणआदेशंब्रह्मणस्तमुवाचह जातयोर्नौमहा-
देवेभुविविश्वेश्वरेहरौ भक्तिःस्यात्परमालोकेययांऽजोदुर्गतिन्तरेत्
अस्त्वित्युक्तःसएवेहव्रजेद्रोणोमहायशाः जज्ञेनन्दइतिख्यातोयशो-
दासाधराभवत् ततोभक्तिर्भगवतिपुत्रीभूतेजनार्द्दने दम्पत्योर्नि-
तरामासीद्गोपगोपीषुभारतेत्यादिना श्रीशुकेनोत्तरितेऽपि ज्ञेया ॥
एवमेव श्रीदेवकीवसुदेवयोरन्येष्वप्येतादृशेष्वित्यलं विस्तरेण॥इति-
श्रुतिशतैरतिस्फुटतरैरपास्तभ्रमैर्विचारभरचातुरीसचिवसत्पुराणैरपि॥
स्फुरद्भिरुदितिनित्यतासुनिरणायिगोपीपतेर्मयातिनिजयत्नतःफलतु-
तेनसैवेहमे ॥ ४४ ॥ ॥ अथाऽतएवेयंलीलेत्यादिः फलतुतेनसै-
वेहमेइत्यन्तश्चतुश्चत्वारिंशः खण्डः खण्ड्यते ॥ ॥ तत्र श्रुतौ ज-
ज्ञानेत्यादिभूतप्रयोगैस्तत्तत्क्रियाया अनित्यत्वमायातीति विरुद्ध-
हेतूपन्यासः ॥ यत्तु टीकाकृता सदेवसौम्येत्यादिवत्पूर्वकालवृत्ति-
त्वमेवाऽत्र भूतकालार्थप्रत्ययेनोच्यते नतु प्रयोगकालाऽवृत्तित्वम-

पीत्युक्तं॥तन्नयुक्तं॥सदेवेत्यत्रैवाऽविप्रतिपन्नश्रुत्यन्तराऽनुकूल्याऽदर्शनात् उक्तविधवर्तमानप्रयोगाणामुक्तविधयोपपत्तेः लिङादीनां भूतत्वांशपरित्यागेन प्रयोगे मानाभावेन लक्षणायाश्छान्दसत्वस्य वा कल्पनायादृष्टान्तमात्रेण स्वीकर्त्तुमशक्यत्वात् ॥ वस्तुतस्त्वयं मन्त्रइन्द्रदेवताकइत्यनुक्रमणिकातोनिश्चिनु ॥ अतएवावृश्चदद्रिमितिलिङ्गसङ्गतिः ॥ नहि वृश्चेरुत्पाटने शक्तिः किन्तु स्वकर्मावयवविभागानुकूले कर्मणि ॥ तच्चेन्द्रे गोत्रभिदि प्रसिद्धमेव ॥ पदान्तराण्यप्येवमिन्द्रपरतया व्याख्येयानि ॥ पुरःस्थिताःकृत्वा इत्यसङ्गतम् ॥ कालस्याकर्षणासम्भवात् ॥ अन्यथा रंस्यथेति भविष्यत्प्रयोगानुपपत्तेश्च ॥ बहुवचनानुपपत्तेश्चेत्यप्यसङ्गतम् ॥ जात्याख्यायामेकस्मिन्नपि बहुवचनानुशासनात्॥एवंकथनेऽपि कुमारीणामित्यप्यसङ्गतम् ॥ बोधस्य जातत्वेन तदसम्भवस्य नहिदृष्टेऽनुपपन्नंनामेतिन्यायपराहतत्वात्॥नच मद्रीत्या जात इति वाच्यम् ॥ प्रमाणाभावात् कौमुदीयंविरच्यते इत्यादौ लोकेऽपि इदंशब्दस्य वक्तृबुद्धिस्थपरामर्शकतायादृष्टत्वेन तयैवोपपत्तेश्च ॥ बुद्धिस्थरात्रिविहारस्याऽबाधितत्वात्सत्त्यसङ्कल्पताप्युपपन्ना ॥ यत्तु नन्वधुनेत्यादिशङ्कायां अत्रेदंप्रतिभातीत्यादिना सर्वमनवद्यमित्यन्तेन समाधानमुक्तं तत्तु मूकमिवास्ति परन्तु तट्टीकाकारेण तादृग्रूपत्वादित्यस्य तेनैवरूपेणाऽनुभवयोग्यस्वरूपत्वादित्यर्थः कृतः ॥ सर्वमनवद्यमित्यस्य तु भविष्यत्त्वस्य स्वरूपान्तःपातित्वेन नित्यत्वाऽविरोधाद्भगवदिच्छया भविष्यत्त्वाऽनुभवस्याऽपि नित्यत्वाऽबाधकत्वेनाऽनित्यत्वरूपदोषरहितमित्यर्थः कृतः॥तत्र यदि भविष्यत्त्वं वर्त्तमानप्रागभावप्रतियोगित्वं यदिवा भविष्यतीति प्रत्ययार्हत्वं

सर्वथाऽपि विरोधोऽस्त्येव वर्त्तमाने तदभावादित्याद्यूह्यम् ॥ प्रमाणतस्तथैवेत्यत्रत्यप्रमाणपदार्थस्य यजमानः प्रस्तरइत्यादिनासादृश्यमनुसन्धेयम् ॥ अन्यत्तूक्तम्प्राक्॥रस आनन्दः ॥ आनन्दमेव लब्ध्वाऽऽनन्दी भवतीत्यर्थः ॥ तथाच रसंह्येवेत्यादि न रसरूपत्वपोषकम् ॥ सर्वरसइति तु सर्वगन्धइत्यादिवद्भौतिकार्थपरम् तत्प्रायपाठात् इतीश्वरस्य शृङ्गारादिरसरूपत्वकथनं विटवादिनां हेयम् ॥ एवमग्निमरमणस्य नित्यत्वे व्रतफलत्वमपि चिन्त्यम् ॥ एवं यशोदादिविषयकपिष्टपेषणेऽपि ज्ञेयम्॥एवमेवदेवकीत्यादितु मोहितौदेवमाययेत्यादिभागवतस्थवसुदेववाक्यविरुद्धंच ॥ इति चतुश्चत्वारिंशखण्डखण्डनम् ॥ ४४ ॥ ॥ अथेदं विचार्य्यते ॥ जन्मान्तरसहस्रेषुतपोध्यानेतिवाक्यादनेकजन्मसंचितसुकृतराशेरतिशयितभगवदनुग्रहभाजनस्य महत्तमचरणरजोऽभिषिक्तस्य कस्यचित्पुरुषविशेषस्य पूर्वोक्तन्यायेन नित्यलीलामध्यपातिभक्तभावसजातीयभावोत्पत्तौ तद्भावाऽनुसारेणैव च तदभिलाषेण भजने क्रियमाणे तल्लीलामध्यपातित्वमस्य भवति नवेति ॥ किमत्र युक्तं ॥ नेति ॥ कुतः ॥ यतएतस्याऽपि तादृशलीलारसाऽनुभवकामनया भगवद्भजनस्य कृतत्वेनैतस्मिन्नपि तादृशीं लीलां हरिः करिष्यतीति भवता वाच्यं ॥ तथाचैतस्मिन् क्रियमाणायालीलाया जन्यत्वेन न नित्यत्वं वक्तुं शक्यं ॥ तेनैतदर्थमेव क्वचित्प्रकटीभूयाऽस्मै तादृक्सुखं दत्त्वा स्वस्मिन्नेव प्रवेशयति तमिति न नित्यलीलायां तस्य प्रवेशइतिचेत् ॥ अत्र ब्रूमः ॥ यथा गौतमीयानां मते सर्वज्ञत्वेनेश्वरस्य सर्वविषयकज्ञानस्याऽवश्यवाच्यत्वेन विषयाणां जन्यत्वेऽपि न तद्विषयकतज्ज्ञानस्य जन्यत्वं धर्मिग्रा-

हकप्रमाणेन नित्यत्वेनैवसिद्धे स्तथा पूर्वोक्तप्रमाणैर्लीलायाअपि नित्यत्वेनैव सिद्धायास्तस्याएव तादृग्भक्तविषयमात्रस्यैवाऽत्रवाच्यत्वात्तद्विषयिकायास्तस्याअजन्यत्वात्त्वद्धेत्वसिद्धिः ॥ नच तादृग्भक्तस्यैतद्विषयत्वे मानाऽभावइति वाच्यं॥तस्य पूर्वमेवोक्तत्वात् ॥ तथाहि ॥ बृहद्वामनीयसन्दर्भे स्वस्तुतिसन्तुष्टभगवत्प्रदर्शितस्वरूपाऽवलोकनसंजातमनोरथे श्रुतिभिः कन्दर्पकोटिलावण्येत्यादिना निरूपिते दुर्लभोदुर्घटश्चैषइत्यादिना भगवद्वरदानं निरूप्य पश्चाद्ब्रह्मवाक्यं निरूप्यते उक्तकालंसमासाद्यगोप्योभूत्वाहरिंहता इति तदग्रे पठ्यते स्त्रियोवापुरुषोवाऽपिभृर्त्तृभावेनकेशवं हृदिकृत्वागतिंयांतिश्रुतीनांनात्रसंशयइति ॥ यद्यपि नगरादपि बहिः स्थितस्यात्यधमस्य कस्यचिन्महाराजान्तःपुरप्रवेशकामनायामपि न तत्र प्रवेशः सम्भवति प्रत्युत दण्डस्तदिच्छाज्ञानेऽपि तथा तादृशस्यैव जीवस्य पूर्वोक्तकामनायामपि न तत्र प्रवेशः सम्भवति प्रत्युताऽयोग्यमिच्छन्पुरुषःपतत्येवनसंशयइतिवाक्यात्पातएव भवेदतएव भगवता श्रुतिष्वपि दुर्घटइत्युक्तं तथापि मयाऽनुमोदितःसम्यक्सत्योभवितुमर्हतीत्युक्त्या तथा भगवदङ्गीकारतएव भवतीति ज्ञायते ॥ सर्वात्मभावेन चेत्तथा भजनं करोति तदा भगवानप्यङ्गीकरोत्येव ॥ अन्यथा येयथामांप्रपद्यन्तइति मर्यादा न स्यात्॥अथवा पूर्वोक्तभक्तसम्बन्धिन्यालीलायावर्त्तमानाया एव यथाक्रमेणाऽऽविर्भावस्तथाऽऽधुनिकभक्तसम्बन्धिन्याअपि तस्याइति नाऽनुपपत्तिः काचित्॥४५॥ ॥ अथाऽथेदंविचार्यतेइत्यादिरितिनानुपपत्तिः काचिदित्यन्तः पञ्चचत्वारिंशः खण्डः खण्ड्यते॥ ॥तत्र त्वन्मते जन्यस्यापीश्वरेच्छया नित्यतायास्सम्भवेन

प्रमाणसिद्धेऽर्थे तर्कस्याऽकिञ्चित्करत्वेन पूर्वपक्षोऽसङ्गतः॥अतएवो-त्तरपक्षोऽपि तथा॥अनेनैव प्रकारेण समाधातुं शक्यत्वे श्रमस्य व्यर्थत्वात्॥गौतममतदृष्टान्तोपन्यासोऽप्ययुक्तः॥सहि तदुक्तार्थप्रामाण्या-ऽभ्युपगन्तृन्प्रति उपन्यसनीयो नचास्मादृशैस्तस्य प्रामाण्यमिष्यते॥ बुद्धेर्विरम्यव्यापारे मानाऽभावेनोत्पन्नोपादाननष्टहानयोरसम्भ-वात् तदैक्षतेत्यादिश्रुतिषु भूतप्रयोगेण तज्ज्ञानस्य नित्यतायाव-क्रमशक्यत्वाच्च केवलानुमानस्य श्रुतिसाहाय्यरहितमनुमानंनकु-त्रचिदिति कौर्मवाक्येन स्वतन्त्रप्रमाणताया अभावाच्च अप्रत्यक्ष-सिद्धे धर्मादौ न प्रसरतीत्यर्थः॥लीलायाज्ञानादिरूपत्वमात्रतायाः अभावेन सामान्यतोभक्तस्य तद्विषयत्वाऽभिधानमयुक्तम्॥क्रिया-याधातुसंज्ञासूत्रमहाभाष्यादितोऽनित्यत्वस्य सत्त्वेन तद्रूपलीलाया-नित्यत्वे मानाभावाच्च॥किञ्च तादृग्भक्तविषयत्वं यद्युत्पन्नं तर्हि ता-दृग्रूपविशिष्टायानित्यत्वमिति पूर्वोक्तं विरुध्यते॥यदि सदेवा वि-र्भूतं तर्हि तदीयश्रमनैष्फल्यम्॥सतआविर्भावस्याऽवश्यम्भावात्॥ ईश्वरेच्छामात्रस्य सर्वत्र त्वया हेतुत्वाङ्गीकाराच्च ॥ भर्त्तृभावेनेत्यु-क्तिस्तु पुंस्त्वेऽपि स्त्रीकर्मरुचिं वोद्योतयति॥वामनपुराणनाम्नोपन्य-स्तं वाक्यन्तु वसुदेवनन्दादिभिर्भर्त्तृतायाअनभिलषणान्नकिञ्चित्॥ अयोग्यामिच्छन्पुरुषःपतत्येवेत्यप्यसङ्गतम्॥ईश्वराभीच्छायाः पाति-त्यहेतुत्वे मानाभावात् ॥ अपिचेत्सुदुराचारोभजतेमामनन्यभाग् इत्यादिभगवद्वाक्येन प्राणिमात्रनिरूपितायायोग्यतायाईश्वराभौ सत्त्वाच्च ॥ सम्यग्व्यवसितोहिसइत्यपिमोक्तेः ॥ अतएव दृष्टान्तो विषमः॥मर्यादा न स्यादित्युक्तिरसङ्गता॥पुष्टिमार्गे मर्यादात्यागस्य तत्रेष्टत्वात् ॥ अथवेत्यादि तु यद्याविर्भूतमित्यादिना खण्डितम् ॥

यत्तु साधनैः प्रतिबन्धनिवृत्तौ लीलाऽनुभवआधुनिकस्याऽपि इ-
ति टीकाकारः प्रललाप ॥ तन्नयुक्तम् ॥ तन्मते सर्वस्य नित्यत्वेन
प्रतिबन्धानिवृत्तेरयोगात् ॥ ईश्वरेच्छायाः सर्वत्र हेतुत्वेन तन्निवृत्ते-
रकिञ्चित्करत्वाच्च ॥ तदिच्छयैव तन्निवृत्तेरप्युपपत्तौ साधनप्रया-
सस्य त्वदीयतद्धेतुत्वकथनस्य चाऽसङ्गतेः॥ पुष्टिमार्गे मर्यादात्याग-
स्याऽदोषत्वादित्युक्तं बहुशः प्राक्॥यत्तु टीकाकारेण यद्यपि बृहद्वा-
मनपुराणीयसन्दर्भे पृथिव्यांभारतेक्षेत्रेइत्यनेनोक्तं केवलाक्षरमध्य-
पातिलीलास्थानात् स्थानान्तरमिव प्रतीयते इत्याशङ्क्योक्तविध-
ऋग्वेदश्रुतिच्छान्दोग्यश्रुतिभ्यां वामनपुराणे व्यापिवैकुण्ठसंज्ञित-
इत्यनेन व्यापित्वेनविशेषणाच्च पृथिव्यां दृश्यमानस्य तस्य तद्द-
भिन्नत्वं तद्वृत्तिलाभस्थानत्वं वा वाच्यं तथासति तस्यैवाऽत्रापि
सत्त्वाच्छ्रुतिसम्बन्धिन्यपि लीला तल्लोकस्थैवेति नित्यैवेत्याद्युक्तं॥
तन्न ॥ श्रुत्यादेर्गतेरुक्तत्वात् ॥ वामनपुराणे सति बिश्वासे व्यापि-
शब्दोयौगिकोनतु रूढ्या विभुत्वबोधकः॥ पुराणेषु तस्योपरिदेश-
विशेषे निरूपणात् ॥ पृथिव्यां स्थितस्य तदभिन्नत्वे व्यापित्वाप-
त्तेश्च ॥ तद्वृत्तिलाभस्थानत्वं तु तदभावेऽपीश्वरेच्छया वृत्तिलाभ-
सम्भवाद्व्यर्थं मानाभावग्रस्तञ्च ॥ इति पञ्चचत्वारिंशखण्डखण्ड-
नम् ॥ ४५ ॥ ॥ अतएव ऋग्वेदेऽपि पठ्यते ॥ विचक्रमेपृथि-
वीमेषएतांक्षेत्रायविष्णुर्मनुषेदशस्यन् ध्रुवासोअस्यकीरयोजनास-
उरुक्षितिसुजनिमाचकारेति॥एषः विष्णुः क्षेत्रायनिवासार्थं मनु-
षे स्तुवते देवगणाय दशस्यन् असुरेभ्योऽपहृत्य प्रदास्यन् एतां स-
र्वां पृथिवीं विचक्रमे ॥ अत्रहि विष्णुमाहात्म्यमुच्यते ॥ तत्र न-
हीदमेव महत्तमस्य माहात्म्यं किंत्वितोऽधिकमप्यस्तीत्याशयेना-

ह ॥ ध्रुवासइति ॥ अस्य कीरयः स्तोतारो जनासो भक्ताः ध्रुवासो नित्याएवेत्यर्थः ॥ नित्यत्वं तु स्तोत्रेण सन्तुष्टेन भगवता पूर्वोक्तलीलामध्ये तेषां पातनेनेति ज्ञेयं ॥ अन्यथा जीवस्य स्वतएव नित्यत्वेन अस्य कीरयोध्रुवासइत्यनर्थकं भवेत् ॥ नाऽपि सर्वसंपत्त्या याञ्चाद्यर्थकगमनाऽभावरूपं कादाचित्कं ध्रुवत्वमत्र वाच्यं ॥ सङ्कोचे मानाऽभावात् ॥ तादृशे ध्रुवपदाशक्तेश्च ॥ तस्मादस्मदुक्तएव श्रुतेस्तात्पर्यं वेदितव्यं ॥ सुजनिमा शोभनानि जनिमानि नामाऽनुकीर्त्तनस्मरणादीनि यस्य एतादृशोविष्णुः उरुक्षितिं विस्तीर्णनिवासां चकारेत्यर्थः ॥ किञ्च ॥ अनित्यत्वं लीलासु वदन्वादी प्रष्टव्यः ॥ ध्वंसप्रतियोगित्वं ह्यनित्यत्वं तदत्र कुतस्त्वयाऽवधारितमिति ॥ जन्यभावत्वेनेतिचेद्ब्रूयात् तदा सवक्तव्यः पूर्वसिद्धायाएव तस्याः क्रमेणाऽऽविर्भावएवेति पूर्वमेवोक्तां स्वरूपासिद्धिं नाऽनुसन्धत्सइति ॥ न पश्यामीतिचेद्ब्रवीषि तदा स्वाभिमतेश्वरेऽपि तथा ब्रूहि ॥ धर्मिग्राहकप्रमाणेन सतथैव सिद्धइति तु तुल्यं ॥ ननु न तत्तुल्यं अत्र धर्मिग्राहकमानेऽपि प्रातःकालीनलीलायाः सायंकाले बाल्यस्य च पौगंडादिष्वनिरूपणात् ॥ सत्यं ॥तत्रह्युत्तरकाले पूर्वलीलासत्त्वासत्त्वौदासीन्येन लीलानिरूपणं क्रियते नतु पूर्वलीलायाः सत्त्वमसत्त्वं वाऽपि निरूप्यते॥एवञ्च सति सन्देहे तन्निवारणपूर्वकं जयतिजन निवासः बहूनिसन्तिनामानि बृहाद्वामनीयकथा तावांवा स्तूनि तेतेधामानि तद्विष्णोःपरमंपदं तद्विप्रासः ध्रुवासोअस्येत्यादिस्मृतिश्रुतिभिरुक्तरीत्या लीलायानित्यत्वेऽवधारिते सर्वसमाधानार्थं क्रमेणाऽऽविर्भावितायाएव लीलायाः क्रमेण तत्र निरूपणमात्रमि-

ति तत्राऽपि निर्णयात्कथं न तुल्यत्वं॥नहि प्रतिपदंनित्यत्वं निरूप-
णीयं ॥ एकत्र तथा निर्णयस्यैवाऽन्यत्राऽप्यवगंतुं शक्यत्वात् ॥
एकत्र निर्णीतः शास्त्रार्थोऽपरत्राऽपि तथेति न्यायात् ॥ अनन्य-
लभ्यस्य शब्दार्थत्वात् ॥ ननु लीलायाः कर्मरूपत्वेन तस्यचाऽ-
चिरावस्थायित्वनियमेन ननित्यत्वं वक्तुं शक्यं ॥ हन्ततर्हीश्वरज्ञा-
नमपि नित्यं न स्याज्ज्ञानान्तरस्याऽचिरावस्थायित्वात् ॥ धर्मिग्रा-
हकप्रमाणञ्च तुल्यं ॥ ननु लीलासम्बन्धिपदार्थाः सर्वैः सपद्यनु-
भूयमानाएव तद्भिन्नावा ॥ आद्ये तन्नित्यत्वं प्रत्यक्षबाधितं ॥ क-
चिच्छ्रूयमाणवैलक्षण्योपलम्भाच्च न तथा वक्तुं शक्यं ॥ द्वितीये
त्वेतेषामपीतरपदार्थसाधारण्येन तल्लीलारसनिमग्नानामेतेष्वेवाऽ-
साधारणप्रेमाऽनुपपत्तिः ॥ तादृग्भक्तानामेतद्दर्शनादिना तद्रसाऽ-
नुभवेनाऽऽल्हादविशेषस्याऽनुभूयमानत्वेन च न तथावक्तुं शक्य-
मित्युभयतः पाशा रज्जुः ॥ नच भिन्नत्वेऽप्यभिन्नत्वभ्रमात्प्रेमाद्यु-
पपत्तिः ॥ दृश्यते हि स्वप्नप्रतीतप्रमदादर्शनात् पारमार्थिकस्खल-
नादीति वाच्यं ॥ एवं तादृशाऽऽल्हादोपपत्तावपि तत्र तत्र वेणुकि-
किण्यादिश्रवणतत्सौरभविशेषाऽनुभवप्रदीपाद्यनुभवानां पारमा-
र्थिकानामनुपपत्तेः ॥ नह्यभिमानमात्रेणोक्तानामनुभवः सम्भ-
वति ॥ अन्यथा जागरितस्याऽपि प्रमदास्पर्शाद्यनुभवप्रसंगः ॥
तादृशेषु भ्रमानुपपत्तिश्चेत्यादिशङ्कानिरासस्तु दिवीवचक्षुराततमि-
तिव्याख्यानेनैव कृतइति दिक् ॥ ४६ ॥ ॥ अथ ऋग्वेदेऽपि-
पुठ्यतेइत्यादिः कृतइतिदिगित्यन्तः षट्चत्वारिंशः खण्डः खण्ड्यते
॥ ॥ तत्र ध्रुवःशङ्कौहरेविष्णौवटेचोत्तानपादजे ॥ वसुयोगभिदोः
पुंसिक्लीबंनिश्चिततर्कयोः स्त्रीमूर्व्याठ्योःशालिपर्ण्यांगीतिस्त्रुग्भेद-

योत्रिषु संततेशाश्वतेइति मेदिनीकोशान्निश्चितादिषु ध्रुवशब्दस्य वृत्तिसम्भवेन नित्यार्थकस्यैवेह ग्रहणे मानाभावात्॥ लीलामध्यपातेन भक्तानां नित्यत्वं वदंस्तु नित्यशब्दार्थमजानन्नुपेक्ष्यः॥ किञ्च स्तुतिमात्रेण तथात्वे मनुषे इत्यनेन देवानामपि स्तोतृत्वोक्त्या तेषामपि तत्र पातः स्यात्॥यथेहकर्मचितइत्यादिश्रुतिविरोधस्तु समः॥एतेनाऽयमर्थः॥ यथा पुरोडाशंचतुर्धाकरोतीत्यनेनोक्तस्य चतुर्धाकरणस्याऽऽग्नेयंचतुर्धाकरोतीत्यनेनाऽऽग्नेयउपसंहारस्तथा नित्योनित्यानामित्यादिनोक्तस्य जीवनित्यत्वस्य भगवत्स्तोतृषूपसंहारइति न वक्तुं शक्यं॥पूर्वोपन्यस्तश्रुतिस्मृतिन्यायव्याकोपात्॥ एवंसति यदत्र ध्रुवत्वश्रावणं तत्र कश्चिद्विशेषोवक्तव्यः सचोक्तरूपएव युक्तः॥ अन्यथा निष्प्रमाणकस्य वृत्तिसंकोचस्य लक्षणायाश्चापातादितिटीकोक्तं परास्तम्॥ आपत्तेरभावात्॥ किञ्च सुजनिमेत्युक्त्या विष्णोर्जन्मवत्त्वेन नित्यत्वस्याभावे तल्लीलानां सुतरां लीलामध्यपातिनां सुतमां तदभावः॥यत्तु जनिमानि नामानुकीर्त्तनस्मरणादीनि यस्येति मूले यच्च रुद्रयत्ते जनिमचारुचित्रमिति जनिमशब्दस्य जन्मनि प्रसिद्धत्वात्तद्व्यावृत्त्यर्थमर्थान्तरमाहुर्नामेत्यादि जनौ प्रादुर्भावे मीयन्तइति जनिमानीति व्युत्पत्त्या तथेति टीकायामुक्तं॥तन्नयुक्तम्॥व्युत्पत्त्या एतादृशार्थोक्तौ मूकत्वात्॥ अभिव्यक्तपदार्थाइतिन्यायेन प्रसिद्धार्थत्यागे बीजाभावाच्च॥टीकोक्तशङ्कायामर्थान्तरे हेतोरेव वक्तव्यत्वस्योचितत्वेन तदनुक्त्वाऽर्थान्तरकथनस्याऽयुक्तत्वेन सन्दर्भाऽसङ्गतेश्च॥ दशस्यन्चकारेत्युक्त्याऽपि क्रीडाया न नित्यत्वम्॥नकर्मणे

त्यादिबहुश्रुतिविरोधाच्च ॥ तद्भूतस्यतुनातद्भावोजैमिनेरपिनियमा-त्तद्रूपाभावेभ्य इति टीकोक्तसूत्रस्य त्वयमर्थः ॥ तद्भूतस्य नैष्ठिक-ब्रह्मचार्यादिरूपोर्ध्वरेतोभूतस्य नातद्भावः न ततः प्रच्युतिः नियमात् अत्यन्तमात्मानमाचार्यकुलेऽवसादयन्निति अरण्यमियादिति पदंततोनपुनरियादित्युपनिषदित्यादिनियमात् तद्रूपस्य प्रच्युतिरूपस्य अभावेभ्यः॥किञ्च प्रच्युतेर्विधिर्नाऽस्ति निषेधश्च तस्याभवतीति ॥ नचाऽत्र लीलानित्यत्वबोधनस्य गन्धोऽप्यस्ति ॥ जयति-जननिवासइत्यादेस्तु तात्पर्यं प्रागेव वर्णितम् ॥ क्रमेणाऽऽविर्भाव-इत्यसंगतम्॥आविर्भावस्य निरस्तत्वात्॥किञ्च॥जगत्सत्त्यत्ववादिना त्वयातस्यापिं कारणाद्बहिर्भावस्तस्मिँल्लयइति स्वीकृतमितीहाऽपि भगवदतिरिक्तानामनुभवाऽननुभवयोः सत्त्वाज्जगद्वन्नित्यत्वादि प्र-सज्यते ॥ एतावाँस्तु विशेषः॥जगद्योगिनां सर्वदा प्रत्यक्षं लीला-तु तेषामपीश्वरेच्छयैवेति सुतरामस्याअनित्यत्वम् ॥ एवञ्च यो-गिजनाऽप्रत्यक्षत्वेनोभयसंमतेनाऽसद्भावस्तत्काले इत्यनित्यत्वम् ॥ उत्तरलीलायाः पूर्वकाले दशस्यन्नूइतिश्रुतेः पूर्वलीलायास्तूत्तर-कालेजज्ञानेत्यादिश्रुतेरसत्त्वम् ॥ अतएव यत्कौमारेहरिकृतमित्या-दि संगतम् ॥ तथाच सन्देहस्याऽप्यभावादेवञ्चसति सन्देहेइत्यप्य-संगतम्॥एकत्र कृतोनिर्णयोनान्यत्रोपयोगी॥पृथिव्यां गुडे माधुर्य-निर्णयेऽपि जम्बीरादौतदभावात्॥यावद्वचनं वाचनिकमितिन्याये-न वाचनिकस्य दृष्टान्तमात्रेणाऽसिद्धेश्च ॥ अनन्येत्यादितु नेहोप-न्यासार्हम् प्रत्युत प्रतिकूलम्॥प्रतिपदं शास्त्रं वाच्यं न दृष्टान्तमात्रे-ण साध्यमिति पूर्वपक्षिणाऽनन्यलभ्यस्य शास्त्रार्थतायाउक्तत्वात्॥ त्वया ततोविपरीतार्थस्य स्वीकाराच्च ॥ हन्त तर्हीत्यस्य विषयेतूक्तं

प्राक् ॥ भक्तानुभवविषयस्य पारमार्थिकत्वं तु विप्रतिपन्नं ॥ दिव्यैवचक्षुरित्यस्य त्वद्व्याख्यानं तु दूषितं प्राक् ॥ इति षट्चत्वारिंशखण्डखण्डनम् ॥ ॥ ४६ ॥ ॥ ननु प्रभासीयकथायाः कथं संगतिरितिचेत् ॥ उच्यते ॥ भगवान् हि सर्वलीलायुतः प्रकटः सदा तथाच यथा धर्मरक्षा सद्रक्षा देवकार्यकरणं भूभारहरणादिकं भगवल्लीला तथैवाऽऽसुरव्यामोहनमपि लीलैव मोहनं च माययैवेति निश्चयः ॥ एवंसत्यासुरमोहनार्थं या लीला सा मायिकी मन्तव्या॥तस्यां च लौकिकत्वेन ज्ञानेन भगवत्यपि लौकिकज्ञानमसुराणामेवनदेवानां॥यतस्तदर्थमेव तत्करणं॥अतएव भगवताऽप्युक्तं॥ अवजानन्तिमांमूढामानुषींतनुमाश्रितं परंभावमजानन्तोममभूतमहेश्वरं मोघाशामोघकर्माणोमोघज्ञानाविचेतसः राक्षसीमासुरींचैवप्रकृतिंमोहिनींश्रिताः महात्मानस्तुमांपार्थदैवींप्रकृतिमाश्रिताः भजन्त्यनन्यमनसोज्ञात्वाभूतादिमव्ययमिति॥मांअव्ययमितिपदाभ्यां यः प्रकटोदृश्यते तमेवाऽविकृतं जानन्तोभजन्तइति गम्यते ॥ अपिच भगवद्गीतास्वेव यदक्षरंवेदविदोवदन्तिविशन्तियद्यतयोवीतरागाः यदिच्छन्तोब्रह्मचर्यंचरन्तितत्तेपदंसङ्ग्रहेणप्रवक्ष्ये इत्युपक्रम्याऽक्षरस्वरूपतत्प्राप्त्युपायौ निरूप्य स्वप्राप्तौ च विशेषमुक्त्वा पुनर्भगवतोच्यते॥अव्यक्ताद्व्यक्तयःसर्वाःप्रभवन्त्यहरागमे रात्र्यागमेप्रलीयन्तेतत्रैवाव्यक्तसंज्ञके भूतग्रामःसएवायंभूत्वाभूत्वाप्रलीयते रात्र्यागमेऽवशःपार्थप्रभवत्यहरागमे परस्तस्मात्तुभावोऽन्योव्यक्तोव्यक्तात्सनातनः यःससर्वेषुभूतेषुनश्यत्सुनविनश्यतीत्यादि॥एतदन्तेच पुरुषःसपरःपार्थभक्त्यालभ्यस्त्वनन्ययेत्युक्त्वा परस्यलक्षणमुच्यते यस्यान्तःस्थानिभूतानियेनसर्वमिदंततं ॥ अत्रच यत्सर्व-

भूतेषु नश्यत्स्वपि स्वयं न नश्यति तस्यैव लक्षणं यस्यान्तःस्था-
निभूतानीतिपदेनोक्तं ॥ एतल्लक्षणवत्त्वंच मृत्साभक्षणजृम्भ-
णलीलानिरूपणप्रस्तावे पक्षान्तरनिरासपूर्वकं भगवतोदृश्यस्वरू-
पस्यैव नैसर्गिकधर्मत्वेन दशमस्कन्धएव निरूपितं ॥ आपिच ॥
अत्रैव दामोदरलीलाप्रस्तावे तस्मिन्नेवोदरे दाम्नामनवच्छेदकत्वं
निरूप्यते तेन तस्योदरस्यैव ब्रह्मत्वं निरूपितं भवति ॥ उदर-
स्याऽब्रह्मत्वे तु दामभिरनवच्छेद्यत्वे देशकालापरिच्छिन्नत्वं ब्र-
ह्मधर्महेतुत्वेन नचान्तर्नबहिर्यस्येत्यादिना न निरूपयेत् ॥ व्य-
धिकरणत्वापत्तेः ॥ तथाच धर्मिग्राहकमानैर्विग्रहस्य ब्रह्मत्वं नि-
श्चितमिति तद्विरुद्धधर्माणामसतामेव प्रदर्शनमसुरव्यामोहायेति
निश्चीयते ॥ अन्यथाऽनुपपत्तेर्बलिष्ठत्वात् ॥ उक्तञ्च ब्रह्माण्डपुरा-
णे अमोहायगुणाविष्णोराकारश्चिच्छरीरिता निर्दोषत्वंतारतम्यंमु-
क्तानामपिचोच्यते एतद्विरुद्धंयत्सर्वंतन्मोहायेतिनिश्चयः अज्ञत्वं-
पारवश्यंचविधिभेदादिकंतथा तथाप्राकृतदेहत्वंदेहत्यागादिकंत-
था आसुराणांविमोहायदोषाविष्णोर्नकर्हिचित्इति ॥ तथाच प-
द्मपुराणे पाखण्डप्रवर्तनार्थं वृषभध्वजमाज्ञापयता भगवतोक्तं ॥
त्वामाराध्ययथाशम्भोग्रहीष्यामिवरंसदेति ॥ नह्यत्राराधकत्वं भ-
गवति सम्भवति ॥ तस्यजीवधर्मत्वात् ॥ तस्य यथा स्वस्मिन्नस-
तएव प्रदर्शनं लोकव्यामोहाय तथा तस्या अपीतिमन्तव्यं ॥ अ-
पिच यथेन्द्रजालविद्यायां नटस्य स्वर्गगमनं तत्रयुद्धं तेन तन्मर-
णं मृतस्याऽत्रपातस्तत्स्त्रियाश्च सहगमनादिकं पूर्वमनुभूतमपि प-
श्चात्कालीनतदागमनेन प्रत्यक्षप्रमाणसिद्धेन मायिकमिति निश्ची-
यते तथा जयतिजननिवासइत्याद्युक्तस्मृतिश्रुतिभिः पूर्वपूर्वली-

लायानित्यत्वं प्रसिद्धमित्यनन्यगत्यैवाऽस्यालीलायाः प्रदर्शनमा-
त्रपरत्वमध्यवसेयं ॥ नचैतदनुरोधेन पूर्वलीलानामेव तथात्वं वक्तुं
शक्यते॥तासामुक्तप्रमाणैर्नित्यत्वेनैव सिद्धत्वात्॥नचोक्तदृष्टान्तन्या-
येन पूर्वं तथा सिद्धमपि पश्चाद्बाध्यमिति वाच्यं ॥ तत्र लौकिक-
त्वेन प्रमाणदोषस्याऽपि सम्भवेऽपि प्रकृते दोषाऽसम्भवात् ॥ अत्र
पूर्वोक्तन्यायेन लीलानामन्योन्यं बाध्यबाधकभावेन तथा वक्तु-
मनवसरश्चेत्यलं विस्तरेण ॥ एतेन यदिदंमनसावाचाचक्षुर्भ्यांश्र-
वणादिभिः नश्वरंगृह्यमाणंचतद्धिमायामनोमयं इतिभगवद्वाक्यं
लीलामध्यपात्यन्तरङ्गभक्तं प्रत्युक्तमिति न वास्तवत्वं कस्याऽप्य-
र्थस्य वक्तुं शक्यमिति कुचोद्यं निरस्तं वेदितव्यं ॥ उक्तरीत्याऽऽसु-
रव्यामोहाय प्रदर्श्यमानानामर्थानामेव यदिदमित्यादिना कथना-
त् ॥ अन्यथा नश्वरमिति नोक्तं स्यात् ॥ गृह्यमाणमित्येतावतैव
सर्वप्राप्तेः ॥ एवंसति द्विजशापेन नश्वरमिति गृह्यमाणं तथेत्यर्थः
पर्यवस्यति॥अतएव यदिदंमनसावाचागृह्यतेऽन्यैरपीन्द्रियैः अहमे-
वनमत्तोन्यदितिबुध्यध्वमञ्जसेति भगवतोहंसस्य वचनं गीयते ॥
॥ ४७ ॥ ॥ अथ ननुप्रभासीयकथायाइत्यादिर्हंसस्यवचनंगी-
यतइत्यन्तः सप्तचत्वारिंशः खण्डः खण्ड्यते ॥ ॥ तत्र तावत्
लीलातत्स्थयोर्नित्यत्वे प्रभासलीलादिकमपि नित्यं वाच्यमिति
तत्रत्यसर्वविनाशोक्तिर्विरुध्यते ॥ तथासति प्रमाणयोर्लीलयोश्च
विरोधादिन्द्रजालादिवत्प्रदर्शनमात्रार्थत्वं लीलाया वाच्यं तद्वा-
क्यानां तु अथरथानित्यादिवाक्यतुल्यत्वं कल्प्यं ॥ वैधर्म्यादिति-
सूत्रस्योक्तार्थकत्वेन न तद्विरोधः॥ तुष्यतुदुर्जनइतिन्यायेन सत्का-
र्यवादाङ्गीकारेऽपि अंशावतरणकथाया आकाशाद्युत्पत्तिवर्णन-

साम्यम् ॥ अतोनाऽक्रूरराधाद्युद्धवकथानां पुराणान्तरस्थानां वि-
रोधइति पूर्वपक्षिणोऽभिप्रायः प्रतीयते ॥ उत्तरवादिना तु तदभि-
प्रायस्याऽज्ञानात्तमप्रदूष्यैव माययाऽऽसुरमोहनार्थाप्रभासादिली-
लेत्युक्तम् ॥ तत्र तावच्छ्रीकृष्णस्याऽपि बुद्धवन्मोहकत्वमितिस्थि-
तम् ॥ एवञ्च पुराणेष्वियं लीला मोहनार्थेयं नेति प्रतिपदम-
नुक्तावपि काश्चिल्लीलामोहनार्थाः काश्चि त्त्वतदर्थाइति विवेचनं
वचनान्तरैः कार्यम् ॥ तानिच अवजानन्तिमांमूढाइत्यादिसामा-
न्यपराण्येव ॥ एतादृश्योलीलाआसुरमोहनार्थाइति विशिष्याऽ-
नुक्तत्वात् ॥ तत्रहि मूढाएतादृशं मां जानन्तीत्युक्तम् ॥ तादृशस्य
च त्वदभिमतश्रीकृष्णादिदेहनाशादिरूपत्वाऽभावेन त्वदभिमतली-
लादिमत्त्वरूपत्त्वेन च त्वय्येव मूढत्वाद्यायाति ॥ तत्राऽवजानन्ती-
तिश्लोकः प्राग्व्याख्यातस्तत्र कृष्णात्परस्य भावस्य सत्ताऽऽत्मक-
स्याऽज्ञानात्तव मूढत्वम् ॥ अतएव मोघाशत्वादिकम् ॥ अतएव
राक्षस्यादिप्रकृतीः श्रितत्वम् ॥ अनन्यमनस्त्वेन भजनं स्वगतभे-
दमङ्गीकुर्वतस्ते न सम्भवति ॥ स्वगतभेदसत्त्वे ऽभेदोक्तेर्वाचोयु-
क्तिमात्रत्वात् ॥ विकारस्य सुवर्णवत्स्वीकृतत्वेनाव्ययत्त्वोक्तेरपि
तथात्वात् ॥ दृश्यमानस्याऽविकृतत्वं तु सुवर्णदृष्टान्तेन त्वयैवाऽपह्न-
स्तितम् ॥ मायाह्येषामयेत्युदाहृतवाक्याच्च ॥ प्रभासलीलावाक्ये-
भ्यश्च॥यत्तु मोहनमपि लीलैवेत्यन्तवाक्यव्याख्याने तथाच तदपि
लीलात्वात्स्वरूपसाध्यमिति तदानीमपि स्वरूपं नित्यमिति तत्साम-
र्थ्येनैव तदुपपत्तिरित्यर्थइत्युक्तं टीकाकृता॥तन्नयुक्तं॥स्वरूपशब्देन
श्रीकृष्णात्मनोग्रहणे निरनुयोज्यानुयोगत्वात्पूर्वपक्षिणा तदात्म-
नोऽनित्यत्वानङ्गीकारात् ॥ देहस्य ग्रहणेतु तत्साध्यत्वं लीलाया-

अशक्यवचनं तदात्मनैव सम्भवात् ॥ अस्मच्छब्दस्य शरीरवाचि-
त्वे प्रमाणाभावात् ममशरीरमिति प्रत्ययाच्चाऽवजानन्तीत्यत्र ना-
ऽस्मच्छब्देन देहग्रहणम् ॥ एवं महात्मानस्त्वित्यत्राऽपि ज्ञेयम् ॥
एतेन मामव्ययमितीत्यादिप्रत्युक्तम् ॥ किञ्चैवंव्यासशुकादीनाम-
पि त्वयाऽऽसुरत्वं वाच्यम् ॥ यतस्तैरपि तथा ज्ञातम् ॥ अज्ञातस्यो-
क्तेरसम्भवात् ॥ प्रतारकत्वं वा तेषां वाच्यम् ॥ अन्यथा ज्ञातस्या-
ऽन्यथा वर्णनात् ॥ एवं भगवान्हिसर्वेत्यादिवदता मोहनस्याऽपि
नित्यत्वमुक्तं ॥ तथाच मोहनञ्चेत्यादि विरुध्यते ॥ किञ्च तल्लीला-
यामोहकत्वे समाधिभाषाव्यासस्येत्यपि विरुद्धमापद्येत ॥ इतरपु-
राणवद्भागवतेऽपि मोहकामोहकवाक्यसत्वात्॥अव्यक्तशब्दार्थउ-
क्तः प्राक्॥जन्माद्यस्येत्यस्येव यस्यान्तःस्थानीतिलक्षणस्योपपत्तिः॥
यत् सर्वेषु भूतेषु सुजनिमत्वादिनोक्तेषु विष्णुशरीरादिषु च न-
श्यत्सु तस्येदमुक्तन्यायेन लक्षणम् ॥ मृद्भक्षणदामोदरादिलीला
तु मायाह्येषेत्यादिवाक्यैर्माय्यैव ॥ रज्ज्वादिनाऽपरिच्छेदस्तु ऐन्द्रजा-
लिकदेहादेरपि दृश्यते इति न सब्रह्मत्वसाधकः किन्तु देशकालव-
स्त्वपरिच्छेदएव ॥ नचान्तर्नबहिर्यस्येतितु वास्तवरूपकथनम् न
देहकथनम् ॥ असत्याएव प्रभासलीलायाः प्रदर्शनस्वीकारे तु त-
वाऽपि जगतस्तथा स्यात् ॥ स्याच्च वैधर्म्याच्चनस्वप्नादिवत् ना-
भावउपलब्धेरिनिसूत्रयोरसङ्गतिः ॥ तथाच मायिकत्वमेव प्रभा-
सलीलायाज्ज्ञायते ॥ ब्रह्माण्डपुराणवाक्यानान्त्वयमर्थः॥अमोहाय
मोहाभावाय आकारो मत्स्यादिः चिच्छरीरितेत्यत्रेन्यन्तोत्तरपदः
कर्मधारयः नतु कर्मधारयात्परइनिः॥नकर्मधारयादित्यनुशासन-
विरोधात्॥एवञ्चैतादृशस्याऽनुसन्धानादिना मोहनाशः सच ज्ञान-

द्वारा तमेवाविदित्वेत्यादिश्रुतेः॥एतद्विरुद्धं गुणात्मकविष्णुचिदात्म-कशरीरादिज्ञानमित्यर्थः ॥ आसुराणां रावणादीनां देहत्यागादिकं विमोहाय तन्मोहापगमाय येयेहताश्चक्रधरेणदैत्याइति वाक्या-दिति इमे दोषामायाकार्यत्वाद्दोषभूताः विष्णोरसङ्गत्वेन क्वचिन्न भवन्तीत्यर्थः ॥ टीकोदाहृतस्य स्त्रीपुम्भावानुषङ्गात्मादेहोनास्य-विजायते किन्तुनिर्दोषचैतन्यसुखनित्यांस्वकान्तनुम् प्रकाशयति-सैवेयंजनिर्विष्णोर्नचापराइति ब्रह्माण्डपुराणवाक्यान्तरस्य त्वय-मर्थः ॥ अस्याऽसङ्गत्वाद्देहादि नजायते ॥ नित्यंस्यात्सन्ततेऽपिच शाश्वतेत्रिष्विति मेदिनीकोशात्प्रवाहानादिबोधकोनित्यशब्दोनतु शाश्वतबोधकः ॥ निर्दोषश्चैतन्यसुखनित्योयस्यामिति वाऽर्थः ॥ तथाच तत्सम्बन्धस्य मायिकत्वमुक्तम् ॥ इतउत्तरं टीकायां प्रद-र्शितं तथाप्यसुरमोहार्थमित्यादि तु पूर्वं व्याख्यातम्॥अतएव भा-गवतेऽपि राजन्परस्यतनुभृज्जननाप्ययेहामायाविडम्बनमवेहिय-थानटस्येत्युक्तम् ॥ अत्र तनुभृतां यादवानामित्यर्थे न मानम् कि-न्तु तनुभृदितिभावक्विबन्तभृच्छब्देन तनुशब्दस्य शेषषष्ठ्यन्तस्य त-त्पुरुषः तस्य जननशब्देन कर्मधारयस्ततोद्वन्द्वः ॥ यत्तु इमं श्लो-कमारभ्येतउत्तरश्लोकद्वयं स्कन्धान्तरस्थान्श्लोकांश्च टीकाका-रउपन्यस्य स्वाभीष्टपरतया ससंरम्भं व्याचख्यौ तत्त्वनर्गलतरमि-तिकृतमतिभिस्ततएव ज्ञातुं शक्यमित्यतिविस्तरभयान्नास्माभिः प्रयत्यते ॥ इदानीं प्रदृश्यमानपाद्मे वङ्गदेशजकायस्थविशेषकृतः प्रक्षेपोऽस्तीति न तन्निर्णयाय प्रभवति ॥ वेदादिचतुष्टयाऽविरुद्धं यत्तदेवमानमिति त्वत्सिद्धान्तविरुद्धं चेदं भागवतस्य ब्रह्माण्डप-द्मपुराणादिवाक्यैरन्यथाकरणम् ॥ आराधकत्वं जीवधर्मइत्येतत्त्व-

मानं ॥ समानत्वेतु स्यादेव श्रीकृष्णस्य जीवत्वमुपासनस्य कृत-
त्वात्॥आराध्यवरंमहीष्यामिति कथनं भविष्यदर्थज्ञातृत्वेन सङ्क-
तार्थविषयकं नतु मायिकाऽसदर्थविषयकमासुरमोहकस्य वरदा-
नासमर्थत्वशङ्कयास्त्वयैव श्रीकृष्णे मोहकत्ववरदातृत्वयोः स्वी-
कारेण निरस्तत्वात् असतोभानानुपपत्तेश्च भानाङ्गीकारे च ना-
भावउपलब्धेरित्यादिव्याससूत्रविरोधात् भानं तु भारतादिसिद्धं ॥
तथाचेदृशपाद्मे सविश्वासेनाऽपि पाखण्डप्रवर्त्तनस्य मोहार्थता-
याः स्वीकारे आराध्यत्वस्य मोहार्थत्वं न स्वीकार्यम् ॥ तासामु-
क्तप्रमाणैरित्यादितु प्रागेवापहस्तितम् ॥ तत्र लौकिकत्वेनेत्यादितु
न युक्तं ॥ भागवतस्य तन्मते वेदादितुल्यत्वेन तत्र दोषसत्त्वे त्व-
दीयवृत्तान्तान्तरे तथा प्रसङ्गात् ॥ यदिदमितिवाक्येन ब्रह्माऽतिरिक्तं
सर्वं मायिकमित्युपपादितम् ॥ नश्वरमित्यनेन द्विर्बद्धं सुबद्धं भ-
वतीतिन्यायेन मायिकत्वे हेत्वन्तरमुक्तम् ॥ व्यामोहायेति तु न
सङ्गतं ॥ तादृशभक्तस्याव्यामोहनीयत्वात् ॥ स्वस्वप्रतिकूलत्वमा-
त्रेणाऽसत्यपि प्रमाणे व्यामोहार्थत्वकथनेऽतिप्रसङ्गाच्च ॥ मायिक-
त्वं पुराणेषु वैराग्यार्थमिति तत्पितृवाक्यविरोधाच्च ॥ इतिपदद्वि-
जशापपदयोरध्याहारे मानाभावात् ॥ मनसावाचेत्यनयोर्वैय-
र्थ्यापत्तेश्च ॥ हंसवाक्ये सङ्कोचापत्तेश्च ॥ मरणादेर्यदिदंशब्दाभ्या-
मग्रहणात् ॥ ईक्षेतविभ्रममिदंमनसोविलासंदृष्टंविनष्टमतिलोलम-
लातचक्रम् विज्ञानमेकमुरुधेवविभातिमायास्वमस्त्रिधागुणविसर्ग-
कृतोविकल्पइति हंसगीतावाक्याच्च॥यत्तु टीकायां पूर्वार्द्धस्य ज-
गन्मिथ्यात्वपरत्वं स्वीकृत्य विज्ञानमित्युत्तरार्द्धे त्रिगुणविसर्गकृ-

तोऽविकल्पोविज्ञानमुरुधाविभानात् मायावत् स्वप्नवदित्यनेन स-
गुणस्रष्टावेवाऽन्यथाख्यातौ विज्ञानरूपत्वनिगमनेन निरीश्वरस्मा-
र्त्तस्रष्टावेव तथा पर्यवसानात् इतिनास्य सदेवेत्यादिश्रुत्युक्तप्रप-
ञ्चमिथ्यात्वापादकत्वम् ॥ अन्यथा पूर्ववाक्यविरोधस्याऽपरिहारेण
द्वयोरप्यसङ्गतत्वापत्तेः ॥ तत्रापीन्द्रियग्राह्यस्यैव स्वाभिन्नत्वबोध-
नात् ॥ अतस्तत्राऽपि विषयभेदोऽवश्यमभ्युपेयइत्युक्तं ॥ तन्न॥स्र-
ष्टिद्वयकल्पने मानाभावाद्गौरवाच्च ॥ कारणस्यैकत्वे कार्यभेदे मा-
नाभावाच्च ॥ जीवमायादिकं तु न ब्रह्मणोऽतिरिक्तमित्युक्तं बहुशः
प्राक् ॥ सदेवेत्यादिश्रुतेः पूर्ववाक्यस्य च तात्पर्यमुक्तमेव ॥ मि-
थ्यात्वेऽपि स्वाभिन्नत्वस्योपपत्तिरप्युक्तैव सर्वत्र साक्षात्परंपरया
वा ईश्वरस्य हेतुत्वेन निरीश्वरस्रष्टेर्वैष्णवंमन्येनाङ्गीकर्त्तुमशक्य-
त्वाच्च ॥ किञ्चोपक्रान्तस्योपसंहारेणानिगमनं पूर्वमीमांसादिविरु-
द्धमिति पूर्वार्द्धमपि जगन्मायिकत्वपरतयैव व्याख्येयम् ॥ नतद-
स्तिपृथिव्यांवादिविदेवेषुवापुनः सत्त्वंप्रकृतिजैर्मुक्तंयदेभिःस्यात्त्रि-
भिर्गुणैरिति गीतोक्त्या तदतिरिक्तजगदप्रतीतेः॥किञ्च निरीश्वरस्मा-
र्त्तस्रष्ट्यङ्गीकारे तादृशस्रष्ट्यङ्गीकर्त्तृमतदूषणग्रावपेषणम् ॥ अनङ्गी-
कारेतु तदुक्तिरसङ्गता ॥ नहि दूषणाय तदुक्तिर्दोषाऽनभिधानात् ॥
युक्तीनां शास्त्रतोबाधस्य बहुशस्त्वयोक्तत्वेन तद्बलेन शास्त्रान्य-
थाकरणं तवाऽनुचितम् ॥ एवमेव तदुक्तद्वादशाध्यायसन्दर्भादाव-
प्यूहनीयम् ॥ इति सप्तचत्वारिंशखण्डखण्डनम् ॥ ४७ ॥ ॥
अत्र विद्वद्भिरेवंज्ञेयं ॥ आदौ निगूढाशयेन शुकदेवेन भूभारराज-
पृतनाद्युपक्रम्य संजह्रेस्वकुलंविभुरित्यंतेन मोहिकी लीला सा-
मान्यतउक्ता ॥ अत्राऽस्वकुलमिति निगूढपदच्छेदोज्ञेयः ॥ वास्त-

ब्यां नैसर्गिक्यां लीलायां भुवि प्रकटतया सत्यां कथमेवं प्रव्र्ग- वर्तीति शङ्कानिरासाय स्वमूर्त्येति द्वयेनाग्रे भुवि लीलाप्राकट्यप्र- योजनाभावं ज्ञापयितुं लीलाप्राकट्यप्रयोजननिष्पत्तिकथनपूर्व- कं सर्वादृश्यत्त्वलक्षणं पदमगादित्युक्तं ॥ लौकिक्याभूमेरधिष्ठा- नत्वमात्रउपयोगादस्वाभाविकत्वमिति तद्विलक्षणं पदमिति ज्ञाप- नाय स्वमित्युक्तं ॥ अग्रेच ब्रह्मण्यानांवदान्यानांनित्यंवृद्धोपसे- विनां विप्रशापःकथमभूद्वृष्णीनांकृष्णचेतसामिति राजप्रश्नवा- क्यव्याजेन नित्यलीलामध्यपातियादवस्वरूपनिरूपणेन प्राप्तशा- पानां तद्भिन्नत्वं ज्ञापितं व्यासेन ॥ बिभ्रद्वपुःसकलसुन्दरसान्निवे- शंकर्माचरन्भुविसुमंगलमाप्तकामः आस्थायधामरममाणउदार- कीर्त्तिःसंहर्त्तुमैच्छतकुलंस्थितकृत्यशेषइत्युत्तरे तु स्वरूपं लीलां च भुवि प्रकटीकुर्वन् प्रयोजननिष्पत्तिं ज्ञात्वा धामसहजं नित्यं यल्लीलास्थानं तदेवास्थाय रममाणएव स्थितकृत्यशेषः स्थितोऽपि- मासुरव्यामोहलक्षणः कृत्यशेषोयस्य तादृशः कुलं संहर्त्तुमैच्छ- तेत्येकेन शुकैरुक्तं ॥ तेनास्य कुलस्य मायिकत्वं सिद्ध्यति कृत्य- सिद्धिर्यतस्तथैव भवति ॥ भुवीति पूर्वमुक्तमेवेति तद्भिन्नमेव धाम वाच्यं तदुक्तमस्माभिः ॥ अतएवाऽग्रेऽपि कालात्मना निसृष्टामु नयइत्युक्तम् नतु पूर्वलीलाकर्त्रेति ॥ ४८ ॥ ॥ अथाऽत्रविद्वद्भिरि- त्यादिर्नतुपूर्वलीलाकर्त्रेत्यन्तोष्टाचत्वारिंशः खण्डः खण्ड्यते ॥ ॥ तत्रास्वकुलमिति पदच्छेदे प्रमाणाभावोगौरवंच ॥ अतएव संह- र्त्तुमैच्छतकुलमित्यनेनैकवाक्यता ॥ अतएव संजह्रेऽन्यकुलमिति- नोक्तम् ॥ पदच्छेदे निगूढताऽप्यतएव निरस्ता ॥ फलाभावाच्च ॥ सर्वादृश्यं पदमगादिति तु सत्यम् ॥ यस्यामतमितिश्रुत्या ब्रह्मणः

फलव्याप्त्यभावेन सर्वादृश्यतया तद्गमने तथोक्तेर्युक्तत्वात् ॥ पर-न्त्विदमपि त्वन्मते न सङ्गच्छते ॥ तत्पदस्य भक्तानां दृश्यत्वेन सर्वशब्दार्थस्य सङ्कोचापत्तेः ॥ केषांचिदेव यद्दृश्यमित्यर्थेऽपि क्लेशएव ॥ लौकिक्याभूमेरधिष्ठानत्वकथनन्तु तस्योपहास्यतां सूचयति ॥ परमेश्वरतल्लीलयोर्लौकिकाधिष्ठितत्वप्रसङ्गात्॥ अलौकिक्याएव भूमेर्वृन्दावनादिवत्तन्निरूपिताश्रयतायास्त्वन्मते वक्तुमुचितत्वेन दहरवाक्यव्याख्याने त्वया तथोक्तत्वेनच तत्त्यागोक्तिरप्युक्तैव ॥ स्वशब्दस्य स्वाभाविकार्थबोधकत्वे मानाभावाच्च ॥ लीलोपयुक्तानामपि प्राप्तशापानां मायिकत्वे लीलायाअपि मायिकत्वमापद्येत ॥ एवं बलदेवादीनामपि तथात्वं स्यात् ॥ किञ्चैवं श्रीकृष्णस्याऽपितथात्वं स्यात् ॥ अवशिष्टलोहभागेन व्याधशराग्रस्थेन तद्देहपातात् ॥ तस्याऽपि शापविषयत्वाच्च ॥ तस्मान्न शापनाशावेव मायिकत्वभेदप्रयोजकौ किन्तु मायिकत्वादितात्पर्यवच्छास्त्रादि तच्चोक्तमेव ॥ तत्रतत्र प्रश्नपरतयोपन्यस्तवाक्यस्य तु ब्रह्मण्यत्वादिविशिष्टत्वेन शापाऽयोग्यानां कथं शापइत्येवतात्पर्यं नतु कुलान्तरसत्त्वे ॥ राज्ञस्तज्ज्ञाने ईदृशप्रश्नाऽनुपपत्तेः ॥ अत्रहीदृशवृष्णिशापमनूद्यतत्प्रकारमात्रप्रश्नः ॥ नच भिन्नानां सत्त्वे तेषां शापानुवादोयुक्तः राज्ञस्तदज्ञाने तु व्यासस्य तज्ज्ञापनं न युक्तम्॥ किञ्च कृत्यशेषशब्देन त्वदुक्तार्थग्रहणेऽपि कुलसंहारेच्छयातत्संहारे तेनैवासुरमोहसिध्या निर्मूलं कुलान्तरकल्पनम् ॥ संहारेच्छाकारणं तु वीर्यादिभिरुद्धतत्वं स्थलान्तरोक्तं ज्ञेयं॥नच वृद्धसेविनां कथमेतदितिवाच्यं ॥ भाविनोऽर्थस्य प्राबल्यादिना तत्सम्भवात् ॥ प्रागुक्तकोशादिप्रामाण्येन तेजआदिसाधारणार्थकधामशब्दस्य

स्थानमात्रपरत्वे तदर्थे लीलेतिविशेषणदाने सहजं नित्यमितिच विशेषणदाने च मानाभावः॥स्थितकृत्यशेषइत्यस्य स्थितः स्वकुलसंहारलक्षणस्य कृत्यस्य शेषोयस्य सइत्यर्थउपस्थितत्वान्नतु कृत्यशब्देन व्यामोहग्रहणं युक्तम् ॥ अनुपस्थितत्वात् ॥ व्यामोहस्य कृष्णकृत्यत्वे प्रागुक्ताऽतिप्रसङ्गाच्च ॥ मायिकत्वे त्वतिप्रसङ्गः॥ यत्त्वत्र टीकाकारेण यथाद्वयाहप्राजापत्याइत्यादावेकगोलके देवासुरभेदभिन्नानीन्द्रियाणि तथैव पुरुषाविष्टभूतन्यायेन तेष्वाविष्टं यत्कुलं तदेव तथेत्यर्थ इत्युक्तं ॥ तन्नयुक्तं ॥ दृष्टान्ते एकस्मिन्निन्द्रिये कालभेदन वृत्तिभेदस्यैवाऽङ्गीकारेणैकत्रगोलके इन्द्रियद्वयानङ्गीकारात् ॥ इहापि तथाङ्गीकारेत्विष्टापत्तिः ॥ किञ्चैवं वदता सत्येषु यादवेष्वाविष्टं कुलं विनष्टमित्युक्तं भवति ॥ तत्र कुलशब्देन यद्यस्थूलस्यकस्यचिद्ग्रहणं तर्हि शस्त्रपाताद्यसम्भवः॥ यदि स्थूलस्य ग्रहणं तर्ह्येकत्रोभयस्थितिरयुक्तेति नेदं किंचित्॥एतेन भूतावेशन्यायोऽपि निरस्तः ॥ भूतावेशस्थले स्थूलेऽस्थूलस्यैव प्रवेशात् ॥ कालात्मनानिसृष्टाइत्याद्युक्तिस्तु न तदभिमतसूचिका॥ तन्मते कालस्येश्वरात्मकत्वात् ॥ यत्तु एतदुपोद्बलनार्थं टीकायां यादवानां भूभारत्वमुक्त्वा दुर्भगोबतलोकोऽयंयदवोनितरामपि येसंवसन्तोनविदुर्हरिमीनाइवोडुपमिति तृतीयस्कन्धस्थस्योद्धववचनस्योत्तरार्द्धं पूर्वोक्तानां स्वरूपपरमित्युक्त्वा एवंभावश्च न नित्यलीलास्थेषु घटते इत्युक्तम् ॥ तन्न युक्तम् ॥ नित्यलीलास्थानामसिद्धेः ॥ यच्च तेकिंसर्वे उत केचिदित्युत्तरार्द्धस्योत्थापनिकोक्ता तदपि न युक्तम्॥शूद्रामन्दभाग्याये मनुष्यत्वेऽपि वेदानधिकारिणइतिवद्धेतुहेतुमद्भावबोधकत्वात् ॥ अन्यथा द्वितीयचरणस्थाने

यादवेषुतुतेधिकम् इत्येव वदेत् इतोऽपिमष्टीकोक्तोंऽशावतरणभे-
दस्तु मूलवाक्यानुपन्यासात्प्रलापएवेति गौरवभयादुपेक्षितः ॥
टीकाधृततैत्तिरीयस्थभर्त्रनुवाक्ये तु विशेषवाचकः कोऽपि शब्दो-
नास्ति येन श्रीकृष्णादिपरत्वेन व्याख्यायेत ॥ वस्तुतस्तु श्रीकृ-
ष्णादिपरऽत्वेपि न नोविद्वेषइति तद्व्याख्यायांदूषणान्यनाविष्कृ-
त्यैवोपरम्यते ॥ किञ्चित्तु व्याख्यायते ॥ तमेवमृत्युममृतंतमाहुरि-
त्यत्राभक्तभक्तज्ञानभेदेन प्रकारपरत्वकथनं निर्मूलम् ॥ किन्तु प्र-
मादंवैवयमितिसनत्सुजातीयवाक्यप्रमाण्येन प्रमादमोक्षस्वरूपत्व-
मेव ब्रह्मणउक्तं ॥ सर्वात्मकत्वात् ॥ सभृतोभ्रियमाणोबिभर्त्तिय-
एवंवेदसत्त्येनभर्त्तुम् इत्यत्र तच्छब्देनेशः ॥ सत्त्येन मायिकभरण-
स्यासत्यत्वापादकत्वाभावेन अबाधितेन रूपेण योविभर्त्तुं वेदेत्य-
र्थः ॥ असज्जजानसतआबभूवेत्यत्र सतो ऽसत् सद्विलणं जजान
जज्ञे आबभूवेत्यस्य तु टीकोक्तरीत्या ईषद्बभूव नश्वरं बभूवेत्य-
र्थोक्तावपि न हानिः ॥ यंयंजजानसउगोपोअस्येत्यत्राऽपि टी-
कोक्तरीत्या गीर्वाणी आज्ञात्मिका तद्रक्षकएव सयमुत्पादितवा-
नित्यर्थोक्तौ न नो द्वेषः॥इत्यष्टचत्वारिंशखण्डखण्डनम् ॥ ४८ ॥
॥ ॥ श्रुत्युक्तवैपरीत्येन यन्मोहायहरिःस्वयं प्रदर्शयातितन्मोह-
गमनायनमद्वचः ॥ १ ॥ क्षिपाम्यजस्रमित्युक्तेर्यतस्तन्मोहानित्यता
अतोऽनंगीकृतिस्तेषांयुक्तातामसिनांनृणां ॥ २ ॥ तत्संगादन्यथा-
भूतहृदयाःसात्त्विकाअपि माभवंत्वित्ययंयत्नस्तेनतुष्टोऽस्तुमेहरिः॥
॥ ३॥ कांचनीकरणेशक्तोमणिर्धातुगणस्ययः तस्याश्मनांतथाभा-
वाकरणेऽपिनहिक्षतिः॥४॥नन्वस्तु प्रपञ्चातीतत्वेन लीलानां सत्त्यत्वं
प्रमाणसिद्धत्वात् न प्रपञ्चस्याऽपि प्रमाणैस्तथासिद्धत्वादितिचेत् ॥

तस्याऽपि सर्गादिलीलामध्यपातित्वेन श्रीभागवतादिषु निरूप-
णात् ॥ जगदप्रतीतिप्रसङ्गादित्यादिनिरूपणेनैव प्रपञ्चसत्त्वस्याऽपि
निरूपितत्वात्पुनर्लिखनेनालं ॥ तत्त्वसूत्रभाष्ये श्रीभावगतविवर-
णादिष्वयमेवार्थोनिरूपितः पितृचरणैरिति नाधिकमत्र निरूप्य-
ते ॥ किञ्च ॥ महोपनिषदि पठ्यते ॥ एषह्येवशून्यएषह्येवतुच्छएष-
ह्येवाभावएषह्येवाव्यक्तोऽदृश्योचिन्त्योनिर्गुणश्चेति ॥ महाकौर्म्मे-
ऽपि ॥ शमूनंकुरुतेविष्णुरदृश्यःसनूपरःस्वयं तस्माच्छून्यमितिप्रो-
क्तस्तोदनात्तुच्छमुच्यते नैषभावयितुंयोग्यःकेनचित्पुरुषोत्तमः अ-
तोभावंवदंत्येनंनाश्यत्वान्नाशइत्यपि सर्वेषांतदधीनत्वात्तत्तच्छ-
ब्दाऽभिधेयता अन्येषांव्यवहारार्थमिष्यतेव्यवहर्त्तृभिरिति ॥ तेन
ब्रह्मणोभावरूपत्वेन प्रपञ्चस्यभावाभावरूपत्वेन कथं ब्रह्मात्मक-
ता वक्तुं शक्येत्यपि चोद्यं निरस्तं ॥ येषामप्यसत्त्वेन जगदभिमतं
तेषामपि जगन्मध्यपातिभगवन्मूर्तितद्भजनाद्यसहिष्णुतयैव ॥ तेषां
तथात्वं तु कलौ तथा भगवदिच्छयैवेत्युक्तं ॥ ४९ ॥ ॥ अथ
श्रुत्युक्तवैपरीत्येनेत्यादिर्भगवदिच्छयेत्युक्तमित्यन्तएकोनपञ्चाशः
खण्डः खण्ड्यते ॥ ॥ तत्र मोहस्य तन्मते मायाजन्यत्वेन नि-
त्यतोक्तिर्विरुद्धा ॥ किञ्च यन्मोहस्य नित्यता तन्मोहानपगमस्य
प्रामत्वेन हरेः श्रुत्युक्तवैपरीत्येन दर्शनं व्यर्थम् अज्ञत्वसूचकं वा ॥
क्षिपाम्यजस्रमितिगीतावाक्यं तु तत्रैवाऽजस्रमासुरयोनिप्राप्तिं बो-
धयति ॥ तथाहि ॥ दैव्यासुर्यौ संपदौ तत्फलंचोक्त्वा आसुरंपा-
र्थमेशृण्विति पुनरासुरसर्गकथनाय प्रतिज्ञाय प्रवृत्तिंचेत्याद्युक्तं ॥
तत्र पुष्टिमार्गवर्त्तिनां पातिव्रत्यादित्यागोपदेशकत्वेन धर्मप्रवृत्त्य-
धर्मनिवृत्तिज्ञानं माऽस्त्येव॥एवं शौचाचारादिविषयेऽपि बोध्यम्॥

तैः सर्वधर्मपरित्यागस्य स्वस्मै भार्याद्यर्पणस्य चोपदेशात्॥एवंचेद्दे-
शानुपक्रम्य प्रवृत्तमिदं वचनमीदृशविषयकमेव॥ ये सत्त्वोद्रिक्त-
मतित्वाच्छास्त्रार्थकुशलाः शास्त्रसिद्धमाहिमानश्च तांस्तामसान् येतु
तमोऽधिकत्वेन मूर्खास्तान्सात्त्विकान्वदन्स्वस्य व्यक्तं वञ्चकतां
व्यनक्ति ॥ कौर्मवाक्यानि च न विस्मरणीयानि॥माभवन्त्विति प्र-
योगोमाङिलुङिति सूत्रेण आङ्माङोश्चेतिसूत्रभाष्येणच विरुद्धइति
शब्देन्दुशेखरान्निश्चिनु ॥ काञ्चनीकरणेइत्यादित्वसङ्गतम् ॥ पाति-
व्रत्यादिश्रद्धानाशकत्त्वेन क्षारभूवल्लोहसदृशानां त्वदीयानां मृ-
त्स्वकारकत्वात्॥जगदप्रतीतिप्रसङ्गादितु प्रागेव खण्डितमिति न तेन
प्रपञ्चसत्यतासिद्धिरित्यलं पिष्टपेषणेन ॥ महोपनिषद्वाक्यान्यु-
पन्यस्य महाकौर्मनामाभिहारव्याजेन मध्वोल्लिखितवचनमुपन्य-
स्यताप्रसिद्धशून्यादिरूपत्वं ब्रह्मणोऽपहस्तितम् ॥ एवञ्च तेन ब्रह्म-
णइत्याद्यपिमयन्थस्तेन स्वयमेव शिथिलीकृतः ॥ भावनायोग्य-
त्वाभावेनाऽभावशब्दाभिलप्यतया प्रसिद्धाभावरूपत्वाऽभावात् ॥
यत्तु टीकायां जगतोब्रह्मात्मकत्वे सिद्धे षड्भावविकारप्रतीतीनामा-
विर्भावतिरोभावविषयत्वमित्युक्तं तदप्येतेनैव प्रत्युक्तम् ॥ शुक्तिर-
जतादिवदधिष्ठानाऽभेदेन ब्रह्मरूपत्वेऽपि मिथ्यात्वाऽनपायेनाऽवि-
र्भावादिविषयत्वश्रमस्याऽकिञ्चित्करत्वात्॥यच्च जायतेइति प्रतीतिः
प्रादुर्भावविषया धात्वर्थस्यैव तथात्वादित्युक्तं तत्तु धात्वर्थाऽनवग-
मात् ॥ कूर्मस्याङ्गानां निःसरणे जायन्ते इति निस्सरणात्प्राङ्गजा-
तानीतिच स्वारसिकप्रयोगप्रसङ्गात् ॥ तस्माज्जनीप्रादुर्भावे इत्य-
त्रास्मत्सम्मतोत्पत्तिवाचकएव प्रादुर्भावशब्दः ॥ सत्कार्यवादयु-
क्तयोनिरस्ताः ॥ तदेतदक्षयमितिटीकोक्तवैष्णववाक्यस्य गतिरु-

कैव ॥ सैवतु विश्वंवैब्रह्मतन्मात्रंसंस्थितंविष्णुमायया यथेदानीं तथाचाग्रेपश्चादप्येतदीदृशमितिटीकोदाहृतभागवतवाक्यस्याऽपि गतिर्ज्ञेया ॥ अतएव विष्णुमाययेत्युक्तम् ॥ इत्यलं पिष्टपेषणेन ॥ एवंचाऽस्तीति प्रतीतिरपि जन्मोत्तरस्थितिविषया स्थितैव॥एवञ्च विपरिणमते इत्यादेरपि तिरोभावेनोपपत्तिं वदन्नुन्मत्तवदुपेक्ष्यः ॥ प्रसिद्धार्थत्यागापत्तेः ॥ यच्च तत्रैव व्यावहारिकप्रपञ्चः स्वापेक्ष-योत्कृष्टसत्ताकप्रपञ्चपूर्वकः मायिकत्वेनाऽभिमतत्वात् मायिक-त्वाद्वा स्वामादिप्रपञ्चवदित्युक्तं ॥ तन्नयुक्तं ॥ त्वन्मतेजगतोनि-त्यतयोत्कृष्टजगदन्तराऽसंमतेः बाधितत्वाच्च स्वरूपासिद्धेश्च तर्का-ऽभावेनव्याप्त्यसिद्धेश्च भ्रममूलकभ्रमेव्यभिचाराच्च ॥ अतएव नृ-सिंहोत्तरतापनीयषष्ठखण्डे स्वप्रकाशमानन्दघनंशून्यमभवदित्यु-क्तम् ॥ परमंब्रह्मात्मकप्रकाशंशून्यंजानन्तइतिच ॥ तत्रैव नवमख-ण्डे नह्यस्तिद्वैतसिद्धिरात्मैवसिद्धोऽद्वितीयइत्युपक्रम्य माययाह्यन्य-दिवेत्युक्त्वा मायाच तमोरूपानुभूतेरिति तत्स्वरूपं चोक्त्वा तदेत-ज्जडंमोहात्मकमनन्तंतुच्छमिदंरूपमस्याव्यञ्जिका इत्याद्युक्तम्॥एते-न हि ब्रह्मातिरिक्तस्य सर्वस्य मायिकत्वं सिद्धम्॥गौडाचार्यैः शू-न्यमित्यस्य विशेषशून्यमित्यर्थः कृतः॥यत्तु टीकायां मध्वमतानु-वर्तिजयतीर्थमतिमनुसृत्य मध्वग्रन्थविश्वासपरस्वगुरूपन्यस्तमहा-कौर्मवाक्यविश्वासेन आनन्दघनपदादुत्तरमुपादानेन च शून्यप-दस्याऽन्यसुखाल्पीकर्तृत्वमर्थइत्यादि प्रलपितं तन्नयुक्तं ॥ महा-कौर्मवाक्यस्य सति प्रक्षिप्तत्वाऽभावनिश्चये महोपनिषन्मात्रघट-कशून्यशब्दार्थवर्णनपरत्वात् ॥ तद्घटकस्यैव शब्दान्तरस्य तत्र व्या-

ख्यातत्वात् ॥ सर्वत्र शमोऽकारमकारयोर्लोपस्य यकारागमस्य च कल्पने गौरवात् ॥ प्रसिद्धार्थत्यागे मानाभावाच्च ॥ अन्यथा तादृशवाक्यस्य वैदिकशब्दमात्रव्याख्यापरत्वे मानाऽभावेन लोकेऽपि तादृशार्थविवक्षया स्वारसिकप्रयोगापत्तेः ॥ विद्याज्ञानेनठाः-शून्याइति त्वत्प्रलापेऽर्थासंगङ्गत्यापत्तेश्च ॥ किञ्च शंविशेषज्ञानजन्यसुखं ऊमं कारणीभूतज्ञानविषयांशेऽल्पम् अर्थाद्विशेषरहितं कुरुते इत्येवं पुराणवाक्यार्थसम्भवान्नगौडाचार्योक्तार्थे विरोधः ॥ इदञ्च पुराणवाक्यस्य समूलत्वे यतनीयं निर्मूलत्वेतु न किञ्चित् ॥ टीकाकारेणाऽपि हि मध्वग्रन्थइदं दृष्टमित्युक्तम् ॥ यच्च टीकायां तापनीये मायायाव्यञ्जकत्वमेव श्राबितं नतु जनकत्वं तथान्यदिवेत्युक्तं नत्वन्यदेवेत्यादि प्रलपितम् तदपि न युक्तम् ॥ मायान्तुप्रकृतिमित्यादिश्रुत्यन्तरैकार्थ्येन जनकत्वरूपस्यैव व्यञ्जकत्वस्य तत्र विवक्षितत्वात् ॥ अन्यदिवेत्यत्रेवशब्दस्तु वस्तुतोऽन्यत्वाभावबोधार्थम् ॥ एवकारकरणे तु विवक्षितोऽर्थोन सिध्येदितिदिक् ॥ जगदन्तःपातिभगवन्मूर्त्तिभजनादिकन्तु जगतोमिथ्यात्वाङ्गीकारेऽपि नाऽस्माभिर्द्विष्यते किन्तु सत्यत्वाङ्गीकर्त्तृभिरेव जैमिन्यादिभिः ॥ मिथ्यात्वज्ञानस्य भजनद्वेषाऽप्रयोजकत्वान्मिथ्यात्वेपि वेदादिषु श्रद्धा तु प्रागुपपादितैव ॥ इदन्त्वस्ति अर्चायामेवहरयेपूजांयःश्रद्धयेहते नतद्भक्तेषुनान्येषुसभक्तःप्राकृतःस्मृतइत्यादिभागवतादिवाक्यप्रामाण्येन मूर्त्तिसेविनां प्राकृतवैष्णवत्वं ब्रूमः ॥ अतएव यस्यात्मबुद्धिःकुणपेत्रिधातुकेस्वधीःकलत्रादिषुभौमइज्यधीरित्यादिभागवताद्युक्तानिन्दा सङ्गच्छते ॥ भगवत्पादप्राक्तनेषु त्वदुदाहृतभागवतादिग्रन्थेष्वपि जगन्मिथ्यात्वोक्तिदर्श-

नेन तेषां तथात्वन्त्वित्यादितदुक्तिरूपैश्वरमार्गनिन्दा विप्रशापवि-
षयत्वमाविष्कुर्वन्त्यसङ्गतैव ॥ इत्येकोनपञ्चाशखण्डखण्डनम् ॥
॥ ४९ ॥ ॥ तस्मादस्माभिरेवोक्तपद्धत्या श्रुतिसिद्धया ॥ ज्ञात्वा
ब्रह्मस्वरूपं तत्प्राप्त्यै तद्भजताऽखिलाः ॥ १॥ येषां लौकिकमेव मा-
नमधिकं वेदादितोऽलौकिकात्तत्पादानुगतस्तदर्थइतिच प्रच्छन्नबौ-
द्धास्तुते॥येषां तद्विपरीततैव विदुषां केषां चिदन्तर्गता तेषामेव मुदे-
ऽस्ति मत्कृतिरियं गोपीशसंसेविनां॥२॥वरीवर्त्ति श्रद्धा श्रुतिषु य-
दि वा व्यासवचने तदा विद्वांसोऽस्मद्विरचितमिदं मण्डनवरं ॥ य-
थोक्तं कण्ठे वा शुकवदथवाऽर्थं च हृदये मुदा कृत्वाऽयत्नं धुनुत
परपक्षाभिधतमः ॥ ३ ॥ यदागतं हृदि श्रीमद्गोपीशरतिलक्षणां ॥
शोभां तनोति तदिदं मण्डनं श्रीहरेः प्रियं ॥ ४ ॥ अखण्डवरप-
ण्डितप्रसृतचण्डपाखण्डवाग्विखण्डनसुचण्डिमाधरणिमण्डलाख-
ण्डलः॥नमन्नृपतिमण्डलीमुकुटताण्डवैर्मण्डितः सपादनखमण्डलः
पितुरिहास्तु मे मण्डनं ॥ ५ ॥ पुनरपि नमामि गोपीरतिपतिमार्ग-
प्रवर्त्तनाचार्यान् ॥ श्रीवल्लभाभिधानान्पितृचरणान्वाङ्मनःकायैः
॥ ६ ॥ ५० ॥ ॥ अथ तस्मादस्माभिरित्यादिर्वाङ्मनःकायैरि-
त्यन्तः पञ्चाशखण्डः खण्ड्यते ॥ ॥ तत्र श्रुतिविरुद्धमतपद्धतेः
श्रुतिसिद्धत्वमयुक्तमेव ॥ येषामितिद्वितीयश्लोकपूर्वार्द्धं सत्यार्थं
परन्तु तदुदाहरणमारूढपतितएव ॥ जगदप्रत्ययाप्रितइत्यादिना
लौकिकमानेन तैर्निर्विशेषब्रह्मपरवाक्यानामन्यथात्वकरणात् ॥
नतु वयं॥निर्विशेषब्रह्मवाक्यबलेनाऽस्माभिर्जगत्प्रत्ययस्याऽन्यथा-
त्वकरणात् ॥ तस्मादेतत्कृतेः पूर्वापरविरोधादिना दूषितत्वादुक्त-
विधविदुषां तया हर्षासम्भवात्सर्वश्रुतिसारभूतभगवत्पादोक्तिभि-

रेव तेषां तत्सम्भवाच्च ॥ चतुर्थचरणे मत्कृतिरित्याद्यपनीय शंकर-
कृतिःपुण्यैर्विशुद्धात्मनामितियोज्यम् ॥ टीकाकर्त्तुस्तु देवद्विषां
निगमवर्त्मनिधिष्ठितानांपूर्भिर्मयेनविहिताभिरदृश्यतूर्भिः लोका-
न्घ्नतामतिविमोहमतिप्रलोभंवेषंविधायबहुभाषतऔपधर्म्यम् इति-
भागवतश्लोकोद्वेषदूषितहृदयतया ऽन्यपरोभाति ॥ तत्र पूर्भिरि-
त्यादिविशेषस्योपादानात् ॥ पुष्टिमार्गे श्रौतमर्यादात्यागस्य त्व-
योक्तत्वेन तदनुसारितायाः कौर्मानुसारेण त्वयि सम्भवाच्च ॥ दृ-
ष्टिसृष्टिवादस्य तु श्रौतत्वमुक्तमेवेति न तावन्मात्रेणाऽस्मास्वतिप्र-
सङ्गः ॥ किञ्च तादृशवक्ता विष्णुरेव नतु शङ्कराचार्यइति नाति-
प्रसङ्गः ॥ विप्ररूपाणिरक्षांसीत्यादिवैष्णववाक्यंतु त्वद्गुर्वादिविष-
यमेव ॥ पाद्मेतु कायस्थविशेषकृतः प्रक्षेपोऽस्तीत्यवोचाम प्रथम-
श्लोकव्याख्यायाम्॥एवञ्च मायावादमसच्छास्त्रंप्रच्छन्नंबौद्धमुच्यते
मयैवविहितंदेविकलौब्राह्मणरूपिणेति तन्नाम्ना लिखितः श्लो-
कोऽविश्वास्यएव॥तस्मिञ्छ्लोके तव विश्वासेतु मायःपीताम्बरेसुरे-
इति विष्णुवाचकमायशब्दस्यावादशब्देन समासइति त्वदुत्क्षिप्त-
पाषाणस्य त्वच्छिरस्येव प्रपातः ॥ ब्राह्मणरूपिणेत्यत्र ब्राह्मणैरूप-
यतिनिरूपयतीत्यर्थे ण्यन्ताण्णिनि णिनौ तृतीया नतु ब्राह्मणस्य
रूपं ब्राह्मणरूपं ततोमत्वर्थीयः ॥ नकर्मधारयादितिमत्वर्थीयनि-
षेधात् ॥ तत्र कर्मधारयपदेन तत्पुरुषमात्रस्य ग्रहणात् ॥ असत्त्वं
तु त्वच्छास्त्रस्योक्तमेव ॥ यद्वा स्यान्मायाशाम्बरीक्षपादम्भोबुद्धि-
श्चेति हेमचन्द्रकोशाद्दम्भोमायाशब्देन ग्राह्यः ॥ तथाच दम्भवा-
दस्त्वन्मते प्रसिद्धएवेति त्वन्मतनिन्दापरोयं श्लोकः ॥ एवञ्च वि-
प्रादिशापपरोक्तविधकौर्मवाक्यैनैकवाक्यता ॥ कारयितुरपि क-

र्तृत्वे बाधकाभावेन मयैव विहितमित्यस्य सङ्गतिः ॥ यद्वा ब्राह्म-
णरूपिणेत्यत्र ब्राह्मणशब्देन कणादाद्याग्रहणन्ते ॥ त्वादृशैरुल्लिखि-
ते पाद्मपाठे तेषामुपक्रमात् ॥ प्रथमंतुमयैवोक्तंशैवंपाशुपतादि-
कम् मच्छक्त्यावेशितैर्विप्रैःसंप्रोक्तानिततःपरम् कणादेनतुसंप्रोक्तं-
शास्त्रंवैशेषिकंमहत् गौतमेनतथान्यायइत्युपक्रम्याऽस्य श्लोक-
स्य पठितत्वात्॥एवञ्च मच्छक्त्यावेशितैरित्युक्तस्यैव निगमनं मया-
विहितमित्यनेनकृतं ॥ त्वदुक्तार्थकत्वेतु इतः प्रागेव वदेत् ॥ प्रथ-
मन्तुमयैवोक्तंशैवंपाशुपतादिकमित्यत्र स्वकृतस्य निन्दितत्वात् ॥
अतएव प्रथश्लोकव्याख्योपन्यस्तकौर्मादिवाक्यसंगतिरित्यलम् ॥
श्रुतिव्यासवचनैर्विरुद्धत्वादेतद्ग्रन्थस्य श्रुत्यादिश्रद्धालुभिर्नैतत्स्वी-
कारउचितः ॥ उक्तविधपूर्वापरविरोधादिबहुदोषग्रस्तेनानेन पर-
पक्षनिरासाशा तु दूरएव तेन शोभाऽऽशायास्तु किमु वक्तव्यम् ॥
शुकस्यार्थज्ञानाभावेऽपि शब्दज्ञानस्य सत्त्वेन तृतीयश्लोके तद्दृ-
ष्टान्ताऽसङ्गतिः ॥ चतुर्थे ईश्वररतेः शोभात्वोक्तिरयुक्ता ॥ शोभा-
याः परैर्दृश्यत्वात् ॥ तद्रतेरतथात्वात् ॥ वरपण्डिततयोक्तेषु चण्ड-
पाखण्डवाक्प्रसृतिकथनं विरुद्धम् ॥ आचार्यपदंचाऽऽचिनोतिच-
शास्त्रार्थमाचारेस्थापयत्यपि स्वयमाचरतेयस्मात्तमाचार्यंप्रचक्षते-
इत्यर्थत्रयार्थकम् ॥तत्र वल्लभेन न कश्चिच्छास्त्रार्थआचितः प्रत्यु-
तवेदार्थोभ्रंशितः नवाऽऽचारे ऽतिष्ठिपत् पातिव्रत्यादिनाशोपदेशात्
स्वयंत्वारूढपतनमाचरितमिति नाचार्यपदेनाऽभिलापमर्हति ॥अ-
न्तेवाङ्मनःकायैरिति प्रयोगोऽशुद्धः ॥ द्वन्द्वश्चप्राणितूर्यैत्येकवद्भाव-
स्योचितत्वात् ॥ प्रथमश्लोके त्वादृर्द्रैइतिप्रयोगोऽशुद्धः मध्येतु
तदीयप्रयोगाणां प्रायेणाऽशुद्धत्वं दर्शितं ॥ क्वचित्क्वचित्तु विस्त

रभयादुपेक्षितमर्पीतिशिवम् ॥ इतिपञ्चाशखण्डखण्डनम् ॥ ५० ॥

॥ ॥ यः शुद्धाऽद्वैतमार्त्तण्डमाम्नायान्तैस्सयुक्तिभिः ॥ तिरस्कृत्य पयोमुग्भिस्तेभ्यः प्रादुर्भवेन च ॥ १ ॥ भङ्ग्यन्तरेण वज्रेण विन्मण्डनमचूर्णयत् ॥ सोऽयं विबुधहर्षाय चिरं जीयात्सहस्रदृक् ॥ ॥ २ ॥ ॥ इति श्रीपरहंसश्रीस्वरूपानन्दसद्यतेः ॥ शिष्येण ससदानन्दयतिवर्येण निर्मितः ॥ १ ॥ सहस्राक्षाभिधोग्रन्थः सम्पूर्णः कार्त्तिकेऽभवत् ॥ वर्षे नेत्राऽक्षिनन्देन्दौ विक्रमस्य महौजसः ॥ २ ॥ ॥ इति सहस्राक्षग्रन्थः समाप्तः ॥



